६७। अग्रे च ज्ञानयोगस्य केवलस्यासाध्यत्वं भक्तियोगस्य तु सुखसाध्यत्वमानुषङ्गिकतया ज्ञानजनकत्वं स्वयमपि पुरुषार्थत्वञ्चेति। यथा (भा० ११।११।१७)—

"न कुर्य्यान्न वदेत् किञ्चिन्न ध्यायेत् साध्वसाधु वा।
आत्मारामोऽनया वृत्त्या विचरेज्जड़वन्मुनिः॥" ११४॥

इत्यन्तेन ग्रन्थेन ज्ञानयोगमुक्त्वा भक्तियोगमुद्भावयितुमाह (भा० ११।११।१८)—

(६७) "शब्दब्रह्मणि निष्णातो न निष्णायात् परे यदि।
श्रमस्तस्य श्रमफलो ह्यधेनुमिव रक्षतः॥" ११५॥

अत्र परब्रह्म-पदेन परतत्त्वमात्रमुच्यते, न तु ब्रह्मत्व-भगवत्त्वादि-विवेकेनेति ज्ञेयम्, सर्व्वत्र तत्सामान्यात्। तदेवं शब्दब्रह्माभ्यासस्य परब्रह्माभ्यासः प्रयोजनमित्युक्तम्। तत्र सर्व्वेष्वेवांशेषु,

---

६७। अग्रिम ग्रन्थ भा० ११।११।१७ में भक्ति शून्य ज्ञान योग का निष्फलत्व अर्थात् मुक्ति प्रदान में असामर्थ्य, एवं भक्ति योग का सुख साध्यत्व तथा आनुषङ्गिक विशुद्ध ज्ञान जनकत्व हेतु भक्ति योग का स्वयं ही परमपुरुषार्थता का वर्णन श्रीभगवान् ने किया है।

अर्थात् भक्ति विहीन स्वरूपानुसन्धानात्मक ज्ञान मुक्ति दान में अक्षम है। किन्तु भक्तियोगानुष्ठान जिस प्रकार सुखमय है, उस प्रकार ही अननुसन्धान से भी विशुद्ध ज्ञान प्रदायक है। अथच भक्ति योग स्वयं ही साधन, एवं स्वयं ही साध्य हैं। भक्तियोग भिन्न, भक्ति योग का अपर कोई साध्य नहीं है। यह सब उपदेश के द्वारा भक्ति योग का अवश्य कर्त्तव्यत्व प्रदर्शित हुआ है।

"न कुर्य्यान्नवदेत् किञ्चिन्न ध्यायेत् साध्वसाधुवा।
आत्मारामोऽनया वृत्त्या विचरेज्जड़वन्मुनिः॥" ११४॥

टीका—अपि च न कुर्य्यादिति। यो दैहिकेऽपि कर्मण्युदासीनः स मुक्तः। इतरोबद्ध इत्यर्थः। एतान्येव सर्वाणि मुमुक्षोः साधनानि ज्ञातव्यानि॥१७॥"

जो व्यक्ति दैहिककर्म्म में भी उदासीन होकर सत् असत् कुछ भी नहीं कहता है, मन में भी सत् असत् की चिन्ता नहीं करता है। सर्वदा निज स्वरूपानन्द में निमग्न होकर अकर्म्मण्य जड़ के समान सतत आत्मतत्त्व चिन्ताशील होता है, वह मुक्ति पथ में प्रविष्ट हो सकता है। यहाँ तक ज्ञान योग का वर्णन करके भक्ति योग की कथा का उद्भावन करने के निमित्त भा० ११।११।१८ में कहते हैं—

(६७) "शब्द ब्रह्मणि निष्णातो न निष्णायात् परे यदि।
श्रमस्तस्य श्रमफलो ह्यधेनुमिव रक्षतः॥" ११५॥

टीका—यस्तु केवलं शब्द ब्रह्मणि अभिज्ञः पाण्डित्यमात्र श्लाघी न तूक्तैः साधनै स्तदर्थ निष्ठो भवेत् तं निन्दति। शब्द ब्रह्मणि निष्णातोऽध्ययनादिना पारं गतोऽपि परे ब्रह्मणि, न निष्णायात्, ध्यानाद्यभियोगं न कुर्य्यात्, तस्य शास्त्रश्रमः, श्रमैकफलो न तु पुरुषार्थ पर्य्यवसायी। अधेनुं—चिर प्रसूताम्॥१८॥

यदि कोई व्यक्तिः शब्द ब्रह्म वेद एवं वेदार्थ विचार में निपुण होते हैं, अर्थात् 'मैं पण्डित हूँ' इस प्रकार आत्मश्लाघी होते हैं, अथच पर ब्रह्म के ध्यानादि नहीं करते हैं, तो उनके वह शास्त्राध्ययन पण्ड श्रममात्र ही है। अर्थात् वह पुरुषार्थ साधन में असमर्थ है, उक्त शास्त्राध्ययन के द्वारा आत्यन्तिक दुःख निवृत्ति एवं परमानन्दलाभ नहीं होता है। जिस प्रकार चिर प्रसूता धेनु पालन करने से उस से दुग्ध प्राप्त करने की कोई आशा नहीं रहती है, उस प्रकार शास्त्रविचार में निपुण होकर भी यदि श्रीभगवदुपासना

विशेषत उपनिषद्भागे शब्दब्रह्मणस्तत्प्रतिपादकत्वे स्थितेऽपि तद्विचारकोटिभिरपि परब्रह्म-निष्ठा न जायते, किन्तु तस्य यस्मिन्नंशे श्रीभगवदाकार-परब्रह्मलीलादिकं प्रतिपाद्यते, तदभ्यासेनैव भगवदाकारे ब्रह्माकारे च निष्ठा जायते । तदुक्तम् (भा० ११।४।४०)

"संसारसिन्धुमतिदुस्तरमुत्तितीर्षो-,र्नान्यः प्लवो भगवतः पुरुषोत्तमस्य ।
लीलाकथारसनिषेवणमन्तरेण, पुंसो भवेद्विविधदुःखदवार्दितस्य ॥"११६॥

(भा० १०।१४।४) ---

"श्रेयःसृतिं भक्तिमुदस्य ते विभो, क्लिश्यन्ति ये केवलबोधलब्धये ।
तेषामसौ क्लेशल एव शिष्यते, नान्यद्यथा स्थूलतुषावघातिनाम् ॥"११७॥

---

नहीं करते हैं तो उनका शास्त्राध्ययन केवल भेक कोलाहल में पर्य्यवसित होता है ।

उक्त श्लोक में लिखित "न निष्णायात् परे यदि" 'पर' शब्द का अर्थ परतत्त्व मात्र है । किन्तु ब्रह्मत्व अथवा भगवत्तत्त्वादि का बोध उस पर शब्द से नहीं होता है । सर्वत्र सामान्य पर तत्त्व का बोध ही उक्त 'पर' शब्द से होता है । किन्तु पर ब्रह्म शब्द ब्रह्म अथवा भगवत् स्वरूप को लक्ष्य कर प्रयुक्त होता है । अतएव, शब्द ब्रह्म वेद, एवं तदनुगत शास्त्राध्ययन का मुख्य फल ही पर ब्रह्म की उपासना करना । यदि शास्त्राध्यनकरके भी परमेश्वर की उपासना नहीं करते हैं, तो शास्त्राध्ययन, वृथाश्रम में ही पर्य्यवसित होता है ।

यद्यपि शब्द ब्रह्म के द्वारा सर्वत्र: विशेषतः उपनिषद् भाग में पर तत्त्व का प्रति पादन हुआ है, तथापि उपनिषद् भाग में पुङ्खानुपुङ्ख रूप में असंख्य वार पर तत्त्व का विचार करने पर भी पर ब्रह्म में निष्ठा का उदय नहीं होता है । किन्तु शब्द ब्रह्म रूप वेद के जिस अंश में श्रीभगवत् स्वरूप पर ब्रह्म के रूप गुण लीलादि का प्रतिपादन हुआ है उस अंश का अनुशीलन से ही श्रीभगवत् स्वरूप में एवं निर्विशेष ब्रह्म स्वरूप में निष्ठा होती है । उसका विवरण ही भा० १२।४।४० में इस प्रकार है—

"संसारसिन्धुमतिदुस्तरमुत्तितीर्षो-,र्नान्यः प्लवो भगवतः पुरुषोत्तमस्य ।
लीलाकथारसनिषेवणमन्तरेण, पुंसो भवेद्विविधदुःखदवार्दितस्य ।।"११६॥

टीका—ननु यदि साकल्येनाभिधातुं न शक्यन्ते तर्हि किं तदभिध्यानेन तत्राह संसारेति । विविधं दुःखमेव दवो दावानलस्तेन अर्दितस्य पीड़ितस्य अत उत्तितीर्षोः पुंसः भगवतो या लीलास्तासां कथास्तासां रस स्तन्निषेवण मन्तरेण अन्यः प्लवस्तरण साधनं न भवेत् । उपायान्तरासम्भवात्, तत् कथा श्रवणमेव यथाशक्ति निषेव्यमित्यर्थः ॥

हे राजन् ! अति दुस्तर यह संसार सिन्धु उत्तीर्ण होने के इच्छुक व्यक्ति के पक्ष में एकमात्र पुरुषोत्तम श्रीभगवान् की लीला का आसक्ति पूर्व अनुशीलन करना छोड़कर अपर कोई भी सरल साधन सरणि नहीं हैं । कारण, विविध दुःख दावानल दग्ध जीव के पक्ष में श्रीभगवान् की लीला कथादि का श्रवण, कीर्त्तन, एवं स्मरण ही एक मात्र सुख मय उपाय है ।

भा० १०।१४।४ में श्रीब्रह्माने भी कहा है—

"श्रेयःसृतिं भक्तिमुदस्य ते विभो, क्लिश्यन्ति ये केवलबोधलब्धये ।
तेषामसौ क्लेशल एव शिष्यते, नान्यद्यथा स्थूलतुषावघातिनाम् ।।" ११७॥

टीका—भक्तिं विना ज्ञानन्तु नैवसिद्ध्येत्—इत्याह-श्रेयः सृतिमिति । श्रेयसामभ्युदयापवर्गलक्षणानां

६८। अतएव मदीयलीलाशून्यां वैदिकीमपि वाचं नाभ्यसेदित्याह द्वाभ्याम्, (भा० ११।११।१६)

(६८) "गां दुग्धदोहामसतीञ्च भार्य्यां, देहं पराधीनमसत्प्रजाञ्च ।
वित्तं त्वतीर्थीकृतमङ्ग वाचं, हीनां मया रक्षति दुःखदुःखी ॥"११८॥

मया श्रीभगवता, हीनां मम लीलादिशून्याम् ॥

---

सृतिः सरणं यस्याः सरस इतरनिर्झराणाम्, तां ते, तव भक्तिमुदस्य त्यक्त्वा श्रेयसां मार्गभूतामिति वा। तेषां क्लेशलः क्लेश एवावशिष्यते। अयं भावः—यथा अल्प प्रमाणं धान्यं परित्यज्य अन्तः कण हीनान् स्थूल धान्याभसांस्तुषानेव अवघ्नन्ति, तेषां न किञ्चिद् फलं, एवं भक्तिं तुच्छीकृत्य ये केवलं बोधाय प्रयतन्ते तेषामपीति। (४)

हे विभो! स्वरूपतः गुणतः आप अपरिच्छिन्न हैं। जो मानव, निखिल मङ्गल प्रसविनी भक्ति का अनादर कर केवल स्वरूप ज्ञान के निमित्त क्लेश करते हैं, उनको साधन जनित क्लेश लाभ ही होता है, अपर कोई फल लाभ नहीं होता है। जिस प्रकार स्वल्प परिमाण धान्य को परित्याग कर बलवान् व्यक्ति, स्तुपीकृत तुष का अवघातन में प्रवृत्त होता है, उसको उस से तण्डुल लाभ नहीं होता है, प्रत्युत अवहनन जनित हस्त व्यथालाभ होता है, उस प्रकार भक्ति हीन साधक का यम नियमादि के द्वारा आत्म बोध नहीं होता है, किन्तु सुदीर्घ साधना निवेश जनित क्लेश ही होता है। उस प्रकार ही जानना होगा ॥६७॥

६८। अतएव भा० ११।११।१६-२० श्लोक द्वय के द्वारा भगवान् कहते हैं— "मदीय लीला कथा शून्य वैदिक वाणी का श्रवण भी न करे।"

(६८) "गां दुग्धदोहामसतीञ्च भार्य्यां, देहं पराधीनमसत् प्रजाञ्च ।
वित्तंत्वतीर्थीकृतमङ्गवाचं, हीनां मया रक्षति दुःखदुःखी ॥"११८॥

टीका—एतदेवान्यार्थ निदर्शनैः प्रपञ्चयति गामिति। दुह्यत इति दोहः पयः। दुग्धो दोहो नोत्तरत्र दोहोऽस्ति यस्यास्तामर्थ शून्याम्, असतीं भार्य्यां, कामशून्याम्। देहं पराधीनाम्, प्रतिक्षणं दुःख हेतुम्। असत् प्रजां दृष्टादृष्ट साधनशून्यं पुत्रम्। अतीर्थीकृतम्—आगते पात्रे अदत्तं वित्तं दुष्कीर्त्तिदुरितापादकम्। अङ्ग हे उद्धव! दुःखानन्तर दुःखमेव स रक्षति।

हे उद्धव! यदि कोई व्यक्ति दुग्ध हीन धेनुका प्रति पालन दुग्धार्थी होकर करता है, तो वह जिस प्रकार धेनु के निमित्त तृण जलादि संग्रहनिमित्त दुःख, एवं दुग्ध रूप अभीष्ट अप्राप्ति जनित दुःख को प्राप्त करता है। यह प्रथम दृष्टान्त—द्वितीय दृष्टान्त यह है—जो व्यक्ति, अपने के प्रति काम गन्ध हीना अथच अन्य पुरुष के प्रति रति युक्ता स्त्री का पालन करता है,वह जिस प्रकार द्विविध दुःख प्राप्त प्राप्त करता है— एक स्वयं रति सुख प्राप्त नहीं कर सकता है, द्वितीय-उसका भरण पोषण निमित्त श्रम करना पड़ता है।

तृतीय दृष्टान्त—जो व्यक्ति, दूसरे का अधीन है, अथच देह व्याधिपीड़ित है, वह द्विविध दुःख प्राप्त करता है। पराधीनता जन्य एक दुःख, रोगाधीनता हेतु अपर दुःख।

चतुर्थ दृष्टान्त—असत् पुत्र की रक्षा करने से जिस प्रकार द्विविध दुःख उपस्थित होते हैं। प्रथमदुःख जीवित अवस्था में पुत्र से किसी प्रकार आनुकूल्यलाभ की सम्भावना नहीं है, अथच भरण पोषण भी करना पड़ता है।

पञ्चम दृष्टान्त—अपवित्र सम्पत्ति की रक्षा करना जिस प्रकार उभय विध दुःख का कारण है, अर्थात् जो वित्त श्रीभगवत् सेवाके उद्देश्य में व्ययित नहीं होता है, वह वित्त ही अपवित्र है। उस अपवित्र सम्पत्ति की रक्षा हेतु अनन्त क्लेश प्रथम दुःख। द्वितीयतः, उक्त सम्पत्ति से पारमार्थिक किसी प्रकार कल्याण लाभ

६९ । 'मया हीनां वाचम्' इत्युक्तं विवृणोति (भा० ११।११।२०)

(६९) "यस्यां न मे पावनमङ्ग कर्म्म, स्थित्युद्भवप्राण-निरोधमस्य ।
लीलावतारेप्सितजन्म वा स्याद्,-बन्ध्यां गिरन्तां विभृयान्न धीरः ॥"११९

यस्यां मे जगतः शोधकं चरितं न स्यात्, किन्तु ? अस्य विश्वस्य स्थित्यादिरूपं तद्धेतुरित्यर्थः । ततोऽप्युत्कृष्टतमत्वेन विमृश्याह-लीलावतारेष्वीप्सितं जगतः प्रेमास्पदं

---

की सम्भावना भी नहीं है । उसी प्रकार श्रीभगवान् की लीला कथा शून्य वेदवाणी का आदर कर श्रवण कीर्त्तन करने से— शास्त्रानुशीलन जनित एक प्रकार दुःख, पारमार्थिक किसी प्रकार आस्वादन प्राप्त करने की सम्भावना न होने से द्वितीय दुःख उपस्थित होता है । श्लोकस्थ 'माया' शब्द का अर्थ है—भगवता एवं 'हीना' शब्द का अर्थ है - मम लीलादिशून्याम् ॥ अर्थात् श्रीभगवान् जो मैं हूँ, मेरी लीलाकथा शून्या वाणी का श्रवण आदर पूर्वक करने से दुःख के ऊपर दुःख उपस्थित होता है ॥६८॥

६९ । मेरी लीला कथा शून्या वाणी का श्रवण करने से जो दुःख के ऊपर दुःख उपस्थित होता है, इस कथन का विवरण भा० ११।११।२० में प्रदान करते हैं—

(६९) "यस्यां न मे पावनमङ्ग कर्म्म, स्थित्युद्भवप्राण-निरोधमस्य ।
लीलावतारेप्सितजन्म वा स्याद्, बन्ध्यां गिरन्तां विभृयान्न धीरः ॥११९॥

टीका—मया हीनां वाचमित्युक्तं विवृणोति। यस्यां वाचि मे जगत शोधकंचरित्रंनस्यात् । किं तत् ! अस्य विश्वस्य स्थित्यादि रूपम् । तद्धेतुरित्यर्थः । लीलावतारेषु ईप्सितं जगतः प्रेमास्पदं श्रीराम कृष्णादि जन्म वा न स्यात् तां निष्फलां गिरं धीरो धीमान् न धारयेत् ।।२०॥

वेद की जिस कथा में जगत् पवित्र कारी मेरा चरित्र वर्णित नहीं है । उसका श्रवण न करे । वह कथा,—ऐश्वर्य्य एवं ऐश्वर्य्यमिश्रित माधुर्य्य भेद से द्विविध हैं । तन्मध्ये दृश्यमान जगत् के सृष्टि स्थिति संहार सम्पादन रूप चरित्र--केवल ऐश्वर्य्य मय है, द्वितीय,—लीलावतार के अभीप्सित जन्मादि मय चरित्र—ऐश्वर्य्य मिश्रित—माधुर्य्यमय है । उक्त उभय विध चरित्र वेद के जिस अंश में वर्णित नहीं है, वह अंश--पारमार्थिक आस्वादन प्रदान में असमर्थ होने के कारण बन्ध्या रमणी के तुल्य अनादरणीय है ।

वेद की जिस वाणी में जगत् पवित्र कारी मदीय चरित्र का उल्लेख नहीं है, वह किस प्रकार है, उसका वर्णन करते हैं, विश्व के सृष्टि स्थिति विनाश रूप कार्य्य का वर्णन, अर्थात् विश्व के स्थिति प्रभृति के हेतु स्वरूप । इस प्रकार अर्थ समझना होगा । उक्त विश्व—सृष्ट्यादिमय चरित्र से उत्कृष्टतमरूप में विचार कर कहते हैं,—लीलावतारवृन्द के मध्यमें जगत् से जो अत्यन्त प्रीत्यास्पद श्रीराम कृष्णादि, स्वरूप का जन्म वृत्तान्त जिस में वर्णित नहीं है । उस निष्फला वेद वाणी का धारण धीमान् व्यक्ति न करे । भा० १।५।२२ में श्रीनारद महाशयने कहा है

" इदं हि पुंसस्तपसः श्रुतस्य वा ।
स्विष्टस्य सूक्तस्य बुद्धदत्तयोः ।
अविच्युतोऽर्थः कविभि र्निरूपितो ।
यदुत्तमः श्लोक गुणानु वर्णनम् ॥"२२॥

टीका—तदेवं भगवल्लीलां प्राधान्येनानुवर्णय—इत्युक्तं, तत्र को भगवान्, का च तस्य लीला इत्यपेक्षायामाह--इदं विश्वं भगवानेव, स तु अस्मादितरः । ईश्वरात् प्रपञ्चो न पृथक् ईश्वरस्तु प्रपञ्चात् पृथगित्यर्थः । तत्र हेतुः, यतोभगवतो हेतो र्जगतः स्थित्यादयो भवन्ति,अनेनैव लीलादि र्दर्शिता । यद्वा इदं

श्रीकृष्णरामादिजन्म वा न स्यात्तां निष्फलां गिरं वेदलक्षणामपि धीरो धीमान् न धारयेत्। तदुक्तं श्रीनारदेन (भा० १।५।२२)—"इदं हि पुंसस्तपसः श्रुतस्य वा" इत्यादि। अतएव गीतं कलियुगपावनावतारेण श्रीभगवता---

"श्रुतमप्यौपनिषदं दूरे हरिकथामृतात्। यत्र सन्ति द्रवच्चित्त-कम्पाश्रुपुलकादयः ॥१२०॥

७०। तदेवं भक्त्यैव ज्ञानं सिध्यतीत्युक्त्वा तच्च ज्ञानमार्गमुपसंहरति (भा० ११।११।२१)

(७०) "एवं जिज्ञासयापोह्य नानात्व-भ्रममात्मनि।
उपारमेत विरजं मनो मय्यर्प्य सर्व्वगे ॥"१२१॥

जिज्ञासया (भा० ११।११।१) "बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुतः" इत्यादि-

---

विश्वं भगवान् इतर इव यः स जीवोऽपि भगवान्, चेतना चेतन प्रपञ्चस्तद्व्यतिरेकेण नास्ति, स एवैक स्तत्त्वमित्यर्थः। हि शब्देन सर्वं खल्विदं ब्रह्मेत्यादि श्रुति प्रमाणं सूचितम्। त्वद्धि स्वयमेव भवान् वेद। प्रादेशमात्र मेकदेशमात्रम् आचार्य्य वान् पुरुषो वेदेत्यादि श्रुत्यर्थ सम्पादनाय प्रदर्शितम् ॥२०॥

उत्तम श्लोक श्रीकृष्ण के निरन्तर गुण वर्णन ही मानव मात्र की तपस्या का, अध्ययन का यज्ञ का ज्ञान साधन एवं दान का नित्यफल रूप में निरूपित है। इत्यादि प्रमाण से श्रीहरि गुण कीर्त्तन की मुख्य कर्त्तव्यता का निर्द्देश दिया गया है। अतएव कलियुग पावनावतार भगवान् श्रीश्रीकृष्णचैतन्य देव ने भी कहा है—

"श्रुतमप्यौपनिषदं दूरे हरिकथामृतात्।
यत्र सन्ति द्रवच्चित्त-कम्पाश्रुपुलकादयः ॥१२०॥

उपनिषद् प्रतिपाद्य ब्रह्म, श्रुत होने पर भी हरिकथामृत से बहु दूर में अवस्थित हैं। कारण, अनवरत ब्रह्म स्वरूप की कथा श्रवण करने पर भी चित्त विगलित नहीं होता है, जिसका श्रवण से हृदय विगलित नहीं होता है, उस प्रकार कथाश्रवण से क्या जीवों का मङ्गल साधित हो सकता है ? ॥६९॥

श्रीभगवान् की भक्ति के द्वारा ही स्वरूप बोधात्मक ज्ञान की प्राप्ति होती है, इस को कहकर भा० ११।११।२१ में वर्णित श्लोक के द्वारा ज्ञान मार्ग का उपसंहार करते हैं—

(७०) "एवं जिज्ञासयापोह्य नानात्वभ्रममात्मनि।
उपारमेत विरजं मनो मय्यर्प्य सर्वगे ॥१२१॥

टीका—उक्तं ज्ञान मार्गमुपसंहरति। एवं निश्चित्य विचारेणात्मनि नानात्व भ्रमं देहाद्यध्यासं निरस्य निर्म्मलं मनो मयिसर्वगे परिपूर्णे समर्प्य सन्धार्य्य- उपारमेत न तु शास्त्रपाण्डित्यमात्रेणेत्यर्थः,।

हे उद्धव ! इस प्रकार आत्मतत्त्व जिज्ञासु होकर आत्म स्वरूप में स्थूलत्व, कृशत्व, ब्राह्मणत्व प्रभृति नानात्व भ्रम त्याग पूर्वकलयविक्षेप शून्य मन का अर्पण सर्वगत मुझ में करके शान्ति लाभ करे। उक्त श्लोक में 'जिज्ञासया' पद का प्रयोग हुआ है, उस का अर्थ भा० ११।११।१ में वर्णित—

"बद्धोमुक्त इति व्याख्यागुणतो मे न वस्तुतः।
गुणस्य मायामूलत्वात् न मे मोक्षो न बन्धनम् ॥"

टीका—नित्य बद्धोनित्य मुक्त एक एवेति मे भ्रम इति यदुक्तं तत् किं वस्तुतो विरोधः प्रतीतितो वा। नाद्यः। बन्धमोक्षयो र्वास्तवत्वाभावादित्याह,—बन्धो मुक्त इति द्वाभ्याम्। आत्मा बद्धो मुक्तश्च मे गुणतो मदधीनसत्त्वादि गुणोपाधितो न तु वस्तुतः। ननु कथं सर्वशास्त्रविरुद्धमुच्यते तत्राह इति मे व्याख्येति।

पूर्व्वोक्त-प्रकारक-विचारेण, आत्मनि शुद्धजीवे, नानात्वं देवत्वमनुष्यत्वादिभेदमपोह्य। एवं मल्लीलादिश्रवणेन मनो मयि ब्रह्माकारे सर्व्वगे अर्प्य धारयित्वा उपारमेत ॥

७१। तदेवं ज्ञानमिश्रां भक्तिमुपदिश्य तदनादरेणानुषङ्गसिद्धज्ञानगुणां शुद्धामेव भक्तिमुपदिशति चतुर्भिः (भा० ११।११।२२)—

(७१) "यद्यनीशो धारयितुं मनो ब्रह्मणि निश्चलम्।
मयि सर्वाणि कर्म्माणि निरपेक्षः समाचर ॥१२२॥

"यदीति निश्चये"–टीकायां (भा० ११।४।१०) "धत्ते पदं त्वमविता यदि विघ्नमूर्ध्नि" इतिवत् अत्र खलु ज्ञानेच्छुरेव प्रकृतः। श्रीमदुद्धवं प्रति तादृशत्वमारोप्यैवेदमुच्यते। ततश्च (भा० १०।१४।४) "श्रेयःसृतिं भक्तिमुदस्य ते विभो, क्लिश्यन्ति ये केवलबोध-लब्धये।

---

एवं मत्कृतो निर्णयः, अलमतिकुतर्कैरित्यर्थः। अथवा, एवमन्वयः, आत्मा बद्धो मुक्त इति या व्याख्या उक्तिः, सा मे गुणतो मद् गुण पार तन्त्र्यात्। अत्र हेतुत्वेन गुणनियन्तरि तस्मिस्तद्व्यतिरेकमाह। अतएव न मे बन्धनं मोक्षोवेति। अन्यत् समानम् ॥

पद्य के अनुसार विचार करके शुद्ध जीवात्मा में देवत्व मनुष्यत्व प्रभृति भेदज्ञान शून्य होकर मदीय लीला कथा श्रवण द्वारा सर्वगत ब्रह्म स्वरूप मुझ में मनोधारण कर साधनानुष्ठान से निवृत्त होना चाहिये ॥७०॥

७१। इस रीति से ज्ञानमिश्रा भक्ति का उपदेश प्रदान कर उक्त ज्ञान का अनादर करतः शुद्धाभक्ति का अनुष्ठान करते करते स्वतः ही जड़ एवं चैतन्य का विवेक रूप ज्ञानोदय होता है। इसका वर्णन चार श्लोकों के द्वारा करते हैं। (भा० ११।११।२२)

(७१) "यद्यनीशो धारयितुं मनो ब्रह्मणि निश्चलम्।
मयि सर्वाणि कर्म्माणि निरपेक्षः समाचर ॥"२२॥

टीका—यद्यनीशोऽशक्तश्चेत्तर्हि आस्तामिदं मद्भक्त्यैवकृतार्थो भविष्यसीत्याह मयीति।

हे उद्धव! निश्चय ही तुम निर्विशेष ब्रह्म स्वरूप में मन धारण कर नहीं सकोगे : अतएव मोक्षपर्य्यन्त कामना शून्य होकर मद्विषयकसर्वकर्म्मानुष्ठान करो।

उक्त श्लोक "यद्यनीशो धारयितुं" में 'यदि' शब्द का प्रयोग हुआ है, उसका अर्थ 'निश्चय है। कारण (भा० ११।४।१०) धत्ते पदं त्वमविता यदिविघ्न मूर्द्धि" यहाँ के 'यदि' शब्द का अर्थ श्रीधरस्वामिपादने 'निश्चय' अर्थ ही किया है। प्रस्तुत स्थल में भी यदि शब्द का उस प्रकार निश्चय अर्थ करना चाहिये। कारण, ज्ञानमार्ग में निर्विशेष ब्रह्म स्वरूप में मनोधारण करना अत्यन्त दुःखद है। श्रीमद् भगवद् गीता में उक्त है, "क्लेशोऽधिकतरस्तेषामव्यक्तासक्त चेतसां" अर्थात् निर्विशेष ब्रह्म स्वरूप में चित्त आविष्ट करना अत्यन्त दुरूह कार्य्य है।

यहाँ संशय हो सकता है कि--श्रीभागवत का अभिधेय यदि भगवद् भक्ति ही है, तब उद्धव को श्रीकृष्ण ने ज्ञान मार्ग का उपदेश क्यों दिया? समाधान हेतु कहतेहैं--ज्ञान मार्ग में अभिरुचि सम्पन्न व्यक्ति का अभिलाष पूर्ण करने के निमित्त उद्धव में ज्ञानेच्छु का धर्म आरोप कर यह ज्ञान उपदेश उन्होंने किया है। तज्जन्य ही भा० १०।१४।४ में--

"श्रेयः सृतिं भक्तिमुदस्य ते विभो, क्लिश्यन्ति ये केवलबोधलब्धये।

तेषामसौ" इत्यादि- प्रमाणेन भक्तिं विना केवल-ज्ञानमार्गेण ब्रह्मणि मनो धारयितुं निश्चित-मेवानीशो भवसि, ततोऽपि स्वतो ज्ञानादि-सर्वगुणसेवितं भक्तिमार्गमेवाश्रयेतेति तत् सोपानमुपदिशति—मयीत्यादिना। अथवा, प्राक्तनभक्तिबलाभावाद्ब्रह्मज्ञानेच्छुर्यदि तत्र मनो धारयितुमनीशः स्यात्तदाधुनाप्येवं कुर्विति योज्यम्। समाचर अर्पय, निरपेक्षो वाञ्छान्तर-रहितः ॥

७२। ततश्च (भा० ११।११।२३-२४)

(७२) "श्रद्धालुर्मत्कथाः शृण्वन् सुभद्रा लोकपावनीः।
गायन्ननुस्मरन् जन्म कर्म चाभिनयन् मुहुः ॥१२३॥
मदर्थे धर्मकामार्थानाचरन् मदपाश्रयः।
लभते निश्चलां भक्तिं मय्युद्धव सनातने ॥"१२४॥

टीका च—"मदर्पणेन कर्मभिर्विशुद्धसत्त्वस्यान्तरङ्गां भक्तिमाह–श्रद्धालुरिति" इत्येषा। अभिनयन् जन्मकर्मलीलयोर्मध्ये येऽंशा निजाभीष्ट-भावभक्तगतास्तान् स्वयमनुकुर्वन् भगवद्-

---

तेषामसौ क्लेशल एव शिष्यते नान्यद् यथा स्थूलतुषावघातिनाम् ॥"

ब्रह्माकृत स्तुति में उक्त है,—जो मानव, निखिल मङ्गल जननी तुम्हारी भक्ति का अनादर करके केवल ज्ञान का आदर करता है, उस को केवल क्लेश ही मिलता है। इस के अनुसार ज्ञान मार्ग के द्वारा निर्विशेष ब्रह्म में मनो धारण करना असम्भव होगा। तज्जन्य स्वभावसिद्ध ज्ञानादि गुण गण सेवित भक्ति मार्ग का आश्रय ग्रहण करो, इस अभिप्राय से ही कहते हैं—'मयि सर्वाणि कर्माणि" अर्थात् मद्विषयक सर्वकर्म्मानुष्ठान करो। इस प्रकार अर्थ सङ्गति करनी होगी। अथवा "यद्यनीशो धारयितुं" श्लोक में "निरपेक्षः समाचर" पदद्वय का प्रयोग है, तत्तत्य 'समाचर" क्रियापद का अर्थ--अर्पण करना, निरपेक्ष पद का अर्थ है--कामनान्तर रहित होना। अर्थात् मेरे ही सन्तोषार्थ निखिल कर्म का अर्पण मुझ को करो ॥७१॥

७१। अनन्तर भा० ११।११।२३-२४ में कहते हैं—

(७२) "श्रद्धालु र्मत् कथाः शृण्वन् सुभद्रा लोकपावनीः।
गायन्ननुस्मरन् जन्म कर्म चाभिनयन् मुहुः ॥१२३॥
मदर्थे धर्मकामार्थानाचरन् मदपाश्रयः।
लभते निश्चलां भक्तिं मय्युद्धव सनातने ॥"१२४॥

टीका—मदर्पणेन कर्मणा विशुद्धसत्त्वस्यान्तरङ्गां भक्तिमाह-श्रद्धालुरिति द्वाभ्याम्। अभिनयन्-स्वय-मनुकुर्वन् ।२३। आचरन्—सेवमानः ।२४।

हे उद्धव! उस प्रकार अनुष्ठान करते करते ऐहिक पारलौकिक सुख भोग में वितृष्णा होती है, अनन्तर सुदृढ़ विश्वासयुक्त हृदय से जगत् पवित्र कारिणी सर्व प्रकार मङ्गलदायिनी मेरा चरित्र श्रवण, गान, एवं निरन्तर स्मरण तथा जन्म कर्म समूह का बारम्बार अभिनय करते करते एवं मदीय सुखार्थ धर्म विषय भोग एवं अर्थोपार्जन करतः एक मात्र मुझ को दृढ़ रूप में अवलम्बन करने से, नित्य आनन्द स्वरूप मुझ में निश्चला भक्ति होती है।

गतान् भक्तान्तरगतांश्च तानन्यद्वारानुकुर्वन्नित्यर्थः । किञ्च, यो धर्मो गोदानादि-लक्षणस्तमपि मदर्थे मदीयजन्मादिमहोत्सवाङ्गत्वेनैव,-यश्च कामो महाप्रासादवासादि लक्षणस्तमपि मदर्थे मदीयसेवाद्यर्थं मन्मन्दिर-वासादिलक्षणत्वेनैव, यश्चार्थो धनसंग्रहस्तमपि मदर्थे मत्सेवामात्रोप--योगित्वेनैवाचरन् सेवमानः, मदपाश्रय आश्रयान्तर-शून्यचेताश्च सन् तामेव कथा-श्रवणादि-लक्षणां भक्तिं मयि निश्चलां सर्वदाव्यभिचारिणीं लभते, तत्-सुखेन कैवल्यादावप्यनादरात् । न च भजनीयस्य चलतया वा सा चलिष्यतीति मन्तव्यमित्याह— सनातन इति ॥

७३-७४ । नन्वेवम्भूत-भक्तिमार्गे प्रवृत्तिर्निष्ठा वा कथं स्यादित्याशङ्क्य तत्र हेतुमाह (भा० ११।११।२५)—

(७३) "सत्सङ्गलब्धया भक्त्या मयि मां स उपासिता" इति ।

भक्त्या भक्तिरुच्या स भक्तो मामुपासिता भजमानो भवति । तस्य च भक्तस्य मदीयं ब्रह्माकारं भगवदाकारञ्च सर्वमपि स्वरूपविज्ञानमनायासेनैव भवतीत्याह—

---

विविध निष्काम कर्मानुष्ठान के द्वारा विशुद्ध चित्त साधक के सम्बन्ध में "श्रद्धालुः" इत्यादि श्लोक में अन्तरङ्गा भक्ति का वर्णन किया गया है । श्लोकस्थ 'अभिनयन' पद की व्याख्या करते हैं । श्रीभगवान् की जन्म, कर्म लीला के मध्य में जो अंश निज अभीष्ट भाव विशिष्ट भक्तगत है, उस अंश का अभिनय स्वयं करे । एवं जो अंश भगवत् गत है, उस अंश का अभिनय अपर के द्वारा कराना चाहिये । लीलाभिनय का अर्थ इस प्रकार ही जानना होगा । और भी कहते हैं, गो दानादि स्वरूप जो धर्म, उसका अनुष्ठान भी मदीय जन्मोत्सव के अङ्ग रूप में करना चाहिये । श्लोकस्थ--काम शब्द से महा अट्टालिका में निवास स्वरूप विषय भोग भी मेरी सेवा के निमित्त मेरा मन्दिर में निवास रूप से ही जानना होगा । श्लोक में धन संग्रह की जो कथा कही गई है,—उसका व्यवहार भी मदीय सेवामात्र उपयोगि रूप में ही करना चाहिये । अर्थात् जितने परिमाण में धन संग्रह करने पर मदीय सेवा परिपाटी की रक्षा सुन्दर रूप होती है, उस प्रकार अर्थ संग्रह करे । निज इन्द्रिय चरितार्थ करने की लालसा से अत्यधिक धन संग्रह का प्रयास न करे । एवं अर्थ सञ्चय बुद्धि का पोषण भी न करे । श्लोक में उक्त "मदपाश्रय" पद की व्याख्या करते हैं । मुझ को छोड़ कर अपर किसी भी देव अथवा देवी का आश्रय ग्रहण न करे ।

मेरी चरितकथा श्रवण करते करते जिस भक्ति लाभ होती है, उस के आस्वादन सुख से मुक्ति प्रभृति में अनादर बुद्धि स्वतः ही होती है, एवं मेरे प्रति निश्चला अर्थात् अव्यभिचारिणी भक्ति होती है । यहाँ संशय हो सकता कि— श्रीभगवान् चञ्चल हैं, अतएव मन्दिर प्रभृति नश्वर हैं, चिरस्थायी नहीं हैं, इस प्रकार कूट तर्क निरास निबन्धन कहते हैं । मैं 'सनातन' हूँ, अर्थात् कालत्रय में एक रूप में ही विद्यमान् रहता हूँ । अतएव मेरी अस्थिरता नहीं है, एवं मत् कर्त्तृक प्रदत्त वैभवादि की भी अस्थिरता नहीं है ॥७२

७३--७४ । उस प्रकार भक्ति मार्ग में प्रवृत्ति एवं निष्ठा किस प्रकार से हो सकती है ? इस प्रकार संशय अपनोदन करने के निमित्त भा० ११।११।२५ में कहते हैं—

(७३) "सत्सङ्ग लब्धया भक्त्या मयि मां स उपासिता ।
स वै मे दर्शितं सद्भिरञ्जसा विन्दते पदम् ॥

टीका—"ततश्च अनेन प्रकारेण मयि सत्सङ्गेन लब्धया भक्त्या स भक्तो माम् उपासिता--ध्याता भवति । स च ध्यानशीलः सद्भिर्दर्शितं वैनिश्चितं सुखेनैव मे पदं स्वरूपं प्राप्नोति ।'

(७४) "स वै मे दर्शितं सद्भिरञ्जसा विन्दते पदम्" इति ।

अञ्जसा भक्त्यनुषङ्गेणैव, पदं स्वरूपम् ॥ श्रीभगवान् ॥

७५ । अग्रे च भक्तियोगस्यैव प्राक्सिद्धता साक्षात्-श्रीभगवत्प्रवर्त्तितता स्वयमेव मुख्यता, परेषान्त्ववर्वाचीनता यथारुचि नानाजनप्रवर्त्तितता तुच्छता चेति, यथा श्रीउद्धव उवाच (भा० ११।१४।१-२) —

(७५) "वदन्ति कृष्ण श्रेयांसि बहूनि ब्रह्मवादिनः ;
तेषां विकल्पप्राधान्यमुताहो एकमुख्यता ॥१२५॥
भवतोदाहृतः स्वामिन् भक्तियोगोऽनपेक्षितः ।
निरस्य सर्वतः सङ्गं येन त्वय्याविशेन्मनः ॥"१२६॥

---

हे उद्धव ! एकमात्र सत्सङ्ग से ही विशुद्ध भक्ति अनुष्ठान में रुचि होती है । एवं रुचि लक्षणा भक्ति के द्वारा मेरी उपासना करने के निमित्त निष्ठा होती है ।

उक्त श्लोक में "सत्सङ्गलब्धया भक्त्या" पद का उल्लेख है, उसका अर्थ यह है-- सत्सङ्ग से जो भजनानुष्ठान करने की रुचि मिलती है, उस रुचि के द्वारा वह भक्त मेरी उपासना करता रहता है । उस भक्त का, मेरा निर्विशेष ब्रह्म स्वरूप का एवं भगवत्तत्त्व का तथा स्वरूप तत्त्व का सर्व प्रकार अनुभव अनायास से ही होता है । उसका विवरण उक्त श्लोक के द्वितीय अंश के द्वारा कहते हैं—

(७४) "स वै मे दर्शितं सद्भिरञ्जसा विन्दते पदम् ॥

वह भक्त, साधुगण कर्त्तृक प्रदर्शित मेरा स्वरूप का निश्चितरूप से अनायास अनुभव करता है । अर्थात् भक्ति के आनुषङ्गिक रूप से अनुभव कर सकता है । "पद" शब्द का अर्थ--स्वरूप है । श्रीभगवान् श्रीउद्धव को कहे थे ॥७३--७४॥

७५ । अग्रिम ग्रन्थ भा० ११।१४ में श्रीकृष्ण, श्रीउद्धव को समस्त साधन के पहले श्रीभक्तियोग की सत्ता को कहेंगे । अर्थात् सृष्टि के प्रारम्भ में ही श्रीभगवान् श्रीब्रह्मा को "एतावदेव जिज्ञास्यं तत्त्व जिज्ञासुनात्मनः ।" श्लोक में भक्ति योग का ही उपदेश प्रदान किये थे । अतएव कर्मादि साधन का संवाद जगत् में प्रचारित होने के पहले ही भक्तियोग का संवाद प्रचारित हुआ था । काल क्रमसे भक्ति योग कर्म साधन के द्वारा आवृत हो जाने से पुनर्वार भगवान् श्रीकृष्ण ने उसका प्रवर्त्तन जगत् में किया । दूसरी बात यह है कि--वह भक्ति योग,--ज्ञान कर्म प्रभृति निरपेक्ष होने से स्वयं ही मुख्य है, अन्य समस्त साधन ही भक्ति योग के मुखापेक्षी है । भक्ति योग व्यतीत अन्य समस्त साधन ही आधुनिक है, एवं निज निज रुचि के अनुसार यक्ष, रक्षः, एवं विभिन्न वासना क्रान्त मुनिगण के द्वारा प्रवर्त्तित हैं । एवं उक्त साधन समूह का फल भी अतितुच्छ है । यह सब कहकर भक्ति की ही अवश्य कर्त्तव्यता का वर्णन भा० ११।१४।१--२॥ में करेंगे ।

(७५) "वदन्ति कृष्ण श्रेयांसि बहूनि ब्रह्मवादिनः ।
तेषां विकल्पप्राधान्यमुताहो एकमुख्यता ॥१२५॥
भवतोदाहृतः स्वामिन् भक्तियोगोऽनपेक्षितः ।
निरस्य सर्वतः सङ्गं येन त्वय्याविशेशमनः ॥"१२६॥

टीका च—"श्रेयांसि श्रेयःसाधनानि । किं विकल्पेन प्राधान्यम्, उताहो किंवा एकस्यैव मुख्यता ? एकमुख्यता-पक्षोत्थापने कारणम्—भवतेति । नापेक्षितमपेक्षा यस्मिन् सोऽहैतुकः । अयमर्थः—भवता यो भक्तियोग उक्तः, अन्ये च यानि निःश्रेयसः-साधनानि वदन्ति, तेषां किं फलसाधनत्वेन प्राधान्यमेव सर्वेषाम्, उत अङ्गाङ्गित्वम् ? प्राधान्येऽपि किं विकल्पेन सर्वेषां तुल्यफलत्वम् ? यद्वा, कश्चिद्विशेषः ? इत्येषा ।।

७६ । अत्रोत्तरं श्रीभगवानुवाच (भा० ११।१४।३) —

(७६) "कालेन नष्टा प्रलये वाणीयं वेदसंज्ञिता ।
मयादौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः ।।"१२७।।

---

टीका—एवं तावद् भगवता भक्त्या मोक्ष इत्युक्तम्,अन्ये तु अन्यानि साधनानि वदन्ति । तत्र विशेष निर्धारणां पृच्छति । वदन्तीति, श्रेयांसि--श्रेयसाधनानि । किं विकल्पेन प्राधान्यम् ? उताहो किंवा एकस्यैव मुख्यता । (१) एकमुख्यता पक्षोत्थाने कारणं भवतेति । न अपेक्षितमपेक्षा यस्मिन् सोऽहैतुकः । अयमर्थः-- भवता यो भक्तियोत उक्तः, अन्ये च यानि श्रेयः साधनाति वदन्ति तेषां किं साक्षात् फल साधनत्वेन प्राधान्यमेव सवषां, उत अङ्गाङ्गित्वम् ? प्राधान्येऽपि किं विकल्पेन सर्वेषां तुल्य फलत्वं यद्वा कश्चिदस्ति विशेष इति । (२)

श्रीउद्धव कृत प्रश्न यह है,—हे कृष्ण ! ब्रह्मवादी ? अर्थात् जो लोक वेद का प्रामाण्य मानकर कहते हैं, वे सब मह त्मावृन्द परम मङ्गल प्राप्ति हेतु विविधसाधन का वर्णन करते हैं । उक्त स.धन समूह के मध्य में एक साधन मुख्य है, अपर साधन समूह गौण हैं, अथवा समस्त साधन ही मुख्य हैं । हे स्वामिन् ! आपने तो निरपेक्ष भक्तियोग का वर्णन ही किया है । जिस भक्ति योग के प्रभाव से अन्यसाधन एव अन्यसाध्य के प्रति आसक्ति रहित होकर एकमात्र आप में मानसिकगाढ़ आवेश होता है ।

उक्त श्लोक द्वय की स्वामिकृत व्याख्या यह है - "श्रेयांसि" विविध प्रकार मङ्गल प्र पक साधना । "विकल्पेन प्राधान्यं" अर्थात् यह भी हो सकता है, वह भी हो सकता है, इस रीति से प्रत्येक साधन का प्राधान्य है । "उता हो" किंवा 'एकमुख्यता' एक साधन मुख्य है, अपर साधन समूह गौण हैं, अर्थात् अङ्गाङ्गि भाव से—अङ्गी—प्रधान, अङ्ग--सहाय कारी रूप में हैं एक मुख्यता पक्ष को पुष्ट करने के निमित्त कहते हैं—

"भवतोदाहृतः स्वामिन् भक्ति योगोऽनपेक्षितः " आपने कहा है कि—भक्ति योग—अनपेक्षित है, अर्थात् भक्ति योग में अपर की अपेक्षा नहीं है । इस प्रकार अहैतुक भक्ति योग का वर्णन आपने किया है । इस प्रकार कहने का अभिप्राय यह है कि आपने भक्ति योग का वर्णन किया है, अपर समस्त मुनिगण-नित्य मङ्गल प्राप्ति हेतु अपर साधन समूह को कहते हैं । उस के मध्य में नित्यमङ्गल लाभ हेतु प्रत्येक साधन स्वतन्त्र है, अथवा एक अङ्गी अर्थात् प्रधान है, अथवा अपर साधन समूह अङ्ग हैं, अर्थात् पारस्परिक अङ्गाङ्गि भाव से प्रत्येक का मङ्गल प्रदान में प्राधान्य है । अर्थात् उक्त साधन समूह के मध्य में कुछ विशेष है ।।७५। ।

७६ । श्रीउद्धव कृत प्रश्न के उत्तर में श्रीभगवान् बोले थे—(भा० ११।१४।३)

(७६) "कालेन नष्टा प्रलये वाणीयं वेदसंज्ञिता ।
मयादौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः ।।"१२७।।

टीका च—"तत्र भक्तिरेव महाफलत्वेन मुख्या, अन्यानि तु स्व-स्व-प्रकृत्यनुसारेण खपुष्पस्थानीय-स्वर्गादि-फलबुद्धिभिः प्राणिभिः प्राधान्येन परिकल्पितानि क्षुल्लकफलानीति विवेक्तुं प्रकृत्यनुसारेण बहुधा वेदार्थ-प्रतिपत्तिमाह--कालेनेति सप्तभिः । मदात्मको मय्येवात्मा चित्तं येन सः" इत्येषा, यद्वा, मदात्मको मत्स्वरूपभूतः, निर्गुणत्वेन प्रतिपादयिष्यमाणत्वात् ।

७७ । तदेवं सति तस्यामेवानेकविध-श्रेयोवदने हेतुमाह (भा० ११।१४।९) —

(७७) "मन्मायामोहितधियः पुरुषाः पुरुषर्षभ ।
श्रेयो वदन्त्यनेकान्तं यथाकर्म यथारुचि ।।"१२८।।

तत्प्रकृतीनां मायागुणमूलत्वात् मन्मायामोहितधियः, अनेकान्तं नानाविधं श्रेयः पुरुषार्थं

---

टीका— तत्र भक्तिरेव महाफलत्वेन मुख्या अन्यानि तु स्वस्व प्रकृत्यनुसारेण पुष्पस्थानीय स्वर्गादि फल बुद्धिभिः प्राणिभिः प्राधान्येन परिकल्पितानि क्षुल्लक फलानीति विवेक्तुं प्रकृत्यनुसारेण बहुधा वेदार्थ प्रतिपत्तिमाह कालेनेति, सप्तभिः, मदात्मकः, मय्येवात्मा चित्तं येन सः ।।(३)।।

हे उद्धव ! प्रलय के समय भक्ति उपदेश ग्रहण करने के निमित्त, मानव न रहने से यह वेद वाणी लुप्त हो गई थी । कारण, उस समय जगद् गत साधक भक्तवृन्द, अनुद्बुद्ध संस्काराक्रान्त होकर प्रकृति में लीन होकर रहते हैं। वह प्रकृति, भगवान् में लीन होती है, अतएव जो सब भक्ति साधन करेंगे, उनके इन्द्रिय समूह सुस्पष्ट रूप में न होने से ही प्रापञ्चिक जगत् में भक्ति साधन का अभाव स्पष्टतः ही रहा । इस अभिप्राय से ही कहते हैं,—वेद जो भक्ति का संवाद प्रदान करते हैं, वह भक्ति, प्रलय काल में विनष्ट हो गई थी । किन्तु उस समय भी अपर ब्रह्माण्ड में एवं श्रीवैकुण्ठ में समस्त साधन सिद्ध भक्त वृन्द, एवं प्राप्त पार्षद देह तथा नित्यसिद्ध पार्षदवृन्द, श्रीभगवान् में भक्ति करते थे। तृतीयस्कन्ध में श्रीविदुर, मैत्रेय को प्रश्न किया थे—'तत्रेमं क उपासीरन् क उ स्विदनुशेरते' हे प्रभो ! महाप्रलय के समय श्रीभगवान् जब शयन करते हैं, उस समय कितने संख्यक् जीव, श्रीभगवान् की सेवा करते हैं, एवं कितने संख्यक मानव, उक्त प्रलय के समय अनुद्बुद्ध संस्कारापन्न होकर प्रकृति में निद्रित होकर रहते हैं ? अर्थात् जीव-नित्यमुक्त एवं नित्यबद्ध रूप में द्विविध हैं, उस के मध्य में नित्यमुक्त जीव, अनादि काल से श्रीकृष्ण सेवा अनुभव करते हैं, महाप्रलय के समय भी श्रीकृष्ण सेवा सुखानुभव का विराम नहीं है,

नित्य बद्ध जीव समूह, साधु सङ्ग एवं साधुकृपा से श्रीभगवान् में भक्ति करने के निमित्त उन्मुख होने पर यदि सिद्धि प्राप्त करने के पहले ही ब्रह्माण्ड ध्वंस हो जाता है तो वे सब उक्त भजन संस्कार के सहित भक्ति में लीन होकर रहते हैं । ब्रह्माण्ड का सृजन होने पर वे सब श्री भगवद् भजन में प्रवृत्त होते हैं । यह सब भक्तों की उपयुक्त इन्द्रियादि की अभिव्यक्त करने के निमित्त श्रीभगवान् में सृष्टि करने का सङ्कल्प उदित होता है । कारण, भक्त सम्बन्ध व्यतीत श्रीभगवान् की कार्य्य में प्रवृत्ति स्वतन्त्र रूप से नहीं होती है । श्लोक के शेषार्द्धका अर्थ यह है—हे उद्धव ! मैंने सृष्टि के प्रारम्भ में ब्रह्मा को भक्ति का संवाद प्रदान किया था ।।७६।।

७७। इस प्रकार स्थिति होने पर भी सृष्टि में समय अनेक विध श्रेयो का कथन होता है, भा० ११।१४।९ में उसका कारण निर्देश करते हैं ।

(७७) "मन्मायामोहितधियः पुरुषाः पुरुषर्षभ ।
श्रेयो वदन्त्यनेकान्तं यथाकर्म यथारुचि ।।"१२८।।

तत् साधनञ्च ॥

७८। यतः (भा० ११।१४।२०)—

(७८) "न साधयति मां योगो न सांख्यं धर्म्म उद्धव।
न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता॥"१२९॥

न साधयति न वशीकरोति, तपो ज्ञानम्, त्यागः सन्न्यासः॥

७९। तथा (भा० ११।१४।२२)

(७९) "धर्म्मः सत्य-दयोपेतो विद्या वा तपसान्विता।
मद्भक्त्यापेतमात्मानं न सम्यक् प्रपुनाति हि॥" १३०॥

धर्म्मो निष्कामः, विद्या शास्त्रीयं ब्रह्मज्ञानम्, तपस्तदीक्षणम्॥

८०। भक्तिलक्षणैस्तु (भा० ११।१४।२६)—

(८०) "यथा यथात्मा परिमृज्यतेऽसौ, मत्पुण्यगाथाश्रवणाभिधानैः।
तथा तथा पश्यति वस्तु सूक्ष्मं, चक्षुर्यथैवाञ्जन-संप्रयुक्तम्॥"१३१॥

---

टीका—तत् प्रकृतीनां मायागुण मूलत्वान्मन्माया मोहितधियः, अनेकान्तं नाना विधम्॥९॥

निखिल श्रेयः साधन का एकमात्र महाफल भक्ति ही है। तज्जन्य भक्ति ही मुख्य श्रेयः साधन हैं॥७७॥

७८। किन्तु वह सब साधन मुझ को वशीभूत करने में सक्षम नहीं हैं। भा० ११।१४।२० में कहते हैं—

(७८) "न साधयति मां योगो न सांख्यं धर्म्म उद्धव।
न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता॥"१२९॥

टीका—"अतएवम्भूतं श्रेयो नान्यदस्तीत्याह न साधयतीति द्वाभ्याम्॥"

"न स्वाध्यायस्तपस्त्यागः" श्लोक स्थित 'तपः' शब्द का अर्थ है ज्ञान साधन। अर्थात् ज्ञान साधन भी मुझ को वशीभूत करने में अक्षम है। त्याग शब्द का अर्थ—सन्न्यास प्रभृति आश्रम धर्म हैं॥७८॥

७९। भक्ति भिन्न अपर साधन समूह के द्वारा चित्त शुद्ध नहीं हो सकता है--उसका वर्णन भा० ११।१४।२२ में करते हैं—

(७९) "धर्म्मः सत्य-दयोपेतो विद्या वा तपसान्विता।
मद्भक्त्यापेतमात्मानं न सम्यक् प्रपुनाति हि॥"१३०॥

टीका--भक्त्यभावे अन्यत् साधनं व्यर्थ मित्याह--धर्म इति द्वाभ्याम्॥

हे उद्धव! भक्ति हीन चित्त को सत्य दया युक्त धर्म एवं चित्त एकाग्रता युक्त शास्त्रीय ज्ञान, सम्यक् रूप से चित्त शोधन करने में अक्षम है। यहाँ–धर्म शब्द से निष्काम धर्म को जानना होगा, विद्या शब्द से शास्त्रीय ब्रह्म ज्ञान, तपः शब्द से--ब्रह्म प्रति पादक शास्त्रानुशीलन, अथवा ब्रह्म स्वरूपानुसन्धान से चित्तैकाग्ररूप अर्थ को जानना होगा॥७९॥

८०। भक्ति लक्षण साधन समूह के द्वारा जिस प्रकार चित्त शुद्धि होती है, उस प्रकार चित्त विशुद्ध अन्य किसी साधन से नहीं होता है। भा० ११।१४।२६ में उसका वर्णन है—

टीका च—"ननु (तै० २।१।२) 'ब्रह्मविदाप्नोति परम्,' (श्वे० ३।८) 'तमेव विदित्वातिमृत्युमेति' इत्यादि-श्रुतिभ्यो ज्ञानादेवाविद्यानिवृत्त्या तत्प्राप्तिरवगम्यते, कुतो भक्तियोगेनेत्युच्यते ? तत्राह यथा यथेति । आत्मा चित्तं परिमृज्यते, शोध्यते मत्पुण्यगाथानां श्रवणैरभिधानैश्च । भक्तेरेव अवान्तर–व्यापारो ज्ञानम्, न पृथगित्यर्थः" इत्येषा ॥ श्रीभगवान् ॥

८१ । अग्रे च कर्म-ज्ञान-भक्तिलक्षणान् योगान् तत्तदधिकारितायां पृथक् हेतूंश्चोक्त्वा ज्ञान-कर्मानादरेण भक्तेरेवाभिधेयत्वमाह पञ्चभिः । तत्र ज्ञानाभ्यासानादरं वक्तुं तदधिकारहेतु-वैराग्याभ्यासानादरं विधत्ते (भा० ११।२०।२६)—

(८१) "प्रोक्तेन भक्तियोगेन भजतो माऽसकृन्मुने, ।

---

(८०) " यथा यथात्मा परिमृज्यतेऽसौ, मत्पुण्यगाथाश्रवणाभिधानैः ।
तथा तथा पश्यति वस्तु सूक्ष्मं, चक्षुर्यथैवाञ्जन-संप्रयुक्तम् ॥"१३१॥

ननु ब्रह्मविदाप्नोति परम् । तमेवविदित्वातिमृत्युमेतीत्यादि श्रुतिभ्यो ज्ञानादेव अविद्या निवृत्त्यात्तत् प्राप्तिरवगम्यते कुतो भक्तियोगेनेत्युच्यते तत्राह यथा यथेति । आत्मा चित्तं परिमृज्यते शोध्यते मत्पुण्य--कथानां श्रवणैरभिधानैश्च, भक्तेरेव अवान्तर व्यापारो ज्ञानं न पृथगित्यर्थः ॥

हे उद्धव ! मेरे जगत् पवित्र कारी नाम, रूप, गुण, लीला, के श्रवण कीर्त्तन, के द्वारा उस प्रकार चित्त शुद्ध होता है । जिस प्रकार दिव्याञ्जन युक्त नयन सूक्ष्मवस्तु दर्शन करने में सक्षम होता है । श्रवण कीर्त्तनात्मिका भक्त्यनुष्ठान के द्वारा चित्त में उस प्रकार सूक्ष वस्तु दर्शन की सामर्थ्य आती है । यहाँपर प्रश्न यह हो सकता है कि—श्रुति में कथित है, "जो मानव, ब्रह्म स्वरूप का अनुभव कर सकता है, वह ही परतत्त्व को प्राप्त कर सकता है, एवं उक्त परमात्म स्वरूप का अनुभव करके मृत्युग्रस्त संसार को अतिक्रम करने में सक्षम होता है।" यह सब प्रमाण से प्रमाणित होता है कि ज्ञान के द्वारा ही अविद्या निवृत्ति होती है, एवं परतत्त्व वस्तु की प्राप्ति होती है । अतएव भक्तियोग के द्वारा माया निवृत्ति होती है, इस प्रकार कथन का औचित्य क्या है ?

उत्तर में श्रीकृष्ण उद्धव को कहते हैं,—'यथा यथा इति' आत्मा 'चित्त' मेरे पवित्र चरित्र समूह के श्रवण कीर्त्तन द्वारा जिस प्रकार परिमार्जित अर्थात् शोधित होता है, उस प्रकार दिव्य अञ्जनयुक्त नेत्र के समान वह सूक्ष्म वस्तु दर्शनकर सकता है । अतएव पाक कार्य्य के निमित्त चुल्ली में अनल प्रज्वालित होकर जिस प्रकार अन्धकारादि को विनष्ट करता है, किन्तु अन्धकारादि विनष्ट करना अग्नि प्रज्वालन का मुख्य उद्देश्य नहीं है, किन्तु वह कार्य्य आनुषङ्गिक रूप से हो जाता है, उस प्रकार भक्ति अनुष्ठान करने का श्री कृष्णचरणों में प्रेमलाभ ही मुख्य उद्देश्य है, परतत्त्वादि अनुभवात्मक ज्ञान का उदय, अवान्तर रूप से हो जाता है । तज्जन्य पृथक् रूप से ज्ञान साधनानुष्ठान की आवश्यकता है ही नहीं । श्रीभगवान् उद्धव को कहे थे ॥८०॥

८१ । भा० ११।२० में कर्म ज्ञान एवं भक्तियोग का उल्लेख करके एवं साधनत्रय के अधिकारी होने के निमित्त पृथक् पृथक् हेतु का विन्यास किया है । एवं ज्ञान कर्म के प्रति आदर परित्याग पूर्बक भक्तियोग की अवश्य कर्त्तव्यता का प्रतिपादन पाँच श्लोकों के द्वारा किये हैं ।

अवश्य कर्त्तव्य भक्ति अनुष्ठान में ज्ञानयोगानुशीलन के प्रति अनादर प्रकट हेतु, ज्ञान साधनानुष्ठान के अधिकार के हेतुरूप वैराग्य अभ्यास के प्रति भी अनादर विधान करते हुये कहते हैं । भा० ११।२०।२६

काामा हृदया नश्यन्ति सर्वे मयि हृदि स्थिते ॥"१३२॥

मा माम् ॥

८१ । ज्ञानाभ्यासानादरं विधत्ते (भा० ११।२०।३०)—

(८२) "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्म्माणि मयि दृष्टेऽखिलात्मनि ॥"१३३॥

भक्त्यैव दृष्टे साक्षात्कृते ॥

८३ । तथैवाह(भा० ११।२०।३१)—

(८३) "तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ।
न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ॥"१३४॥

टीका च "तदेवं व्यवस्थयाधिकारत्रय मुक्तम् । तत्र भक्तेरन्यनिरपेक्षत्वादन्यस्य च तत्-सापेक्षत्वाद्भक्तियोग एव श्रेष्ठ इत्युपसंहरति--तस्मादिति त्रिभिः । मदात्मनो मयि आत्मा

---

(८१) "प्रोक्तेन भक्तियोगेन भजतो माऽसकृन्मुनेः ।
कामा हृदय्या नश्यन्ति सर्वे मयि हृदि स्थिते ॥"१३२॥

टीका—कथं भजेत किंवा ततो भवति ? तदाह,—प्रोक्तेनेतिद्वाभ्याम् । श्रद्धामृत कथायां मे शश्वन्मदनु कीर्त्तनमित्यादिना, तत्र तत्रोक्तेन मा-माम् । असकृन्निरयं भजतो हृदय्या हृद्गताः कामानश्यन्ति ।

हे उद्धव ! मैंने भक्तियोग का वर्णन किया, उक्त भक्ति योग के द्वारा निरन्तर भजनशील मुनि के हृदयस्तित सर्व वासना विनष्ट होते हैं, कारण, मैं सर्वदा उन के हृदय में विराजमान हूँ । में सर्वदा अवस्थित होने पर अपर किसी प्रकार वासना का उद्गम नहीं होता है । श्लोकस्थ "मासकृन्मुनेः में 'मा' पद का अर्थ—मुझ को है ॥८१॥

८२ । सम्प्रति ज्ञानाभ्यास के प्रति अनादर का विधान करते हैं—(भा० ११।२०।३०)

(८२) "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्म्माणि मयि दृष्टेऽखिलात्मनि ॥"१३३॥

टीका—हृदयमेव ग्रन्थिरहङ्कारस्तत् पूर्वकाश्च सर्वे संशया असम्भावनादयः । कर्माण्यनारब्धफलानि संहार हेतु भूतानि च ॥३०॥

हे उद्धव ! भक्तियोग के प्रभाव से ही अखिलात्मा मेरा साक्षात् कार होने पर जड़ चेतनात्मक हृदय ग्रन्थि विनष्ट हो जाती है, ज्ञानगत, ज्ञेयगत, ज्ञातागत, समस्त सन्देह की निवृत्ति होती है । किन्तु यदि भक्ति योग के द्वारा ही श्री भगवान् का साक्षात् कार होता है, तभी यह सब अवान्तर फल होते हैं ।८२।

८३ । उस प्रकार ही ज्ञान एवं वैराग्य के प्रति अनादर का प्रसङ्ग भा० ११।२०।३१ में है—

(८३) "तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ।
न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ॥"१३४॥

टीका—तदेवं व्यवस्थया अधिकार त्रयमुक्तम् । तत्र च भक्तेरन्य निरपेक्षत्वादन्यस्य च तत् सापेक्षत्वाद् भक्तियोग एव श्रेष्ठ इत्युपसंहरति, तस्मादिति त्रिभिः । मदात्मनो मयि आत्मा चित्तं यस्य तस्य,

चित्तं यस्य तस्य, श्रेयः श्रेयःसाधनम्" इत्येषा। अत्र प्रायोग्रहणस्यायं भावः—भजतां ज्ञान-वैराग्याभ्यासेन प्रयोजनं नास्त्येव, तत्र यथा स्थितेऽपि सद्योमुक्तिमार्गे केषाञ्चित् क्रममुक्ति-मार्गे प्रवृत्तिर्जायते, तथा (गी० १८।५४) "ब्रह्मभूतः प्रसन्नात्मा" इत्यादि-श्रीगीतानुसारेण यदि क्रमभक्तिमार्गे प्रवृत्तिः स्यात्, तदा भवत्विति। तदेवं भक्तेः प्रेमलक्षणे सर्वफलराजे स्वफले नास्त्येव ज्ञानाद्यपेक्षा॥

८४। पृथक् पृथग् ज्ञानादिफलेऽपि साध्ये नास्तीत्याह (भा० ११।२०।३२-३३)—

---

श्रेयः—श्रेयः साधनम् ।।३१।।

हे उद्धव! अतएव मुझ में भक्ति युक्त, मद्गत चित्त, योगिवृन्द के पक्ष में ज्ञान एवं वैराग्य प्रायशः ही मङ्गल साधक नहीं होते हैं। इस विषय में कुछ भी संशय नहीं है।

पूर्व वर्णित व्यवस्था के अनुसार त्रिविध अधिकारी का वर्णन हुआ है। अर्थात् जो व्यक्ति ऐहिक पार लौकिक विषय प्रतिष्ठा सुख समूह में विरक्तचित्त है, अतः ऐहिक पारलौकिक सुख प्राप्ति के साधन स्वरूप लौकिक वैदिक कर्म्मानुष्ठान का परित्याग भी उसने किया है, किन्तु भक्ति प्राप्त करने का अभिलाषी है, वह ही ज्ञान योग का अधिकारी है, द्वितीय जो व्यक्ति ऐहिक पारलौकिक सुख भोग में लालसान्वित है, एवं उक्त सुख प्राप्ति के निमित्त साधन समूह के अनुष्ठान में आग्रहान्वित है, वह ही काम्य कर्म साधन का अधिकारी है। तृतीय। जो व्यक्ति, महत्सङ्ग एवं महत् कृपा जनित सौभाग्य से श्रीभगवत् कथा श्रवण कीर्त्तनादि में श्रद्धायुक्त है, अथच विषय में अत्यन्त आसक्त भी नहीं है, विरक्त भी नहीं है, वह ही भक्ति योग का अधिकारी है। इस प्रकार ज्ञान, कर्म, भक्ति रूप साधन त्रय के त्रिविध अधिकारी की कथा कही गई है। उक्त साधन त्रय के मध्य में भक्ति योग ही अन्य निरपेक्ष है, कर्म एवं ज्ञान योग—भक्तिसापेक्ष है। अतएव कर्म, ज्ञान एवं भक्ति योग के मध्य में भक्तियोग ही श्रेष्ठ है। इस प्रकार "तस्मात् मत्भक्तियुक्तस्य" प्रभृति श्लोक त्रय के द्वारा प्रसङ्ग का उपसंहार करते हैं। श्लोकस्थ "मदात्मनः" पद का अर्थ है मुझ में जिन के आत्मा अर्थात् चित्त है, उक्त भक्ति युक्त योगि पुरुष के पक्ष में ज्ञान एवं वैराग्य प्रायशः श्रेयः साधन अर्थात् मङ्गल के प्रति हेतु नहीं होते हैं। यहाँ तक टीका की व्याख्या है। श्लोक में "प्रायशः" पद प्रदान का अभिप्राय यह है—जो लोक, निष्काम भाव से विशुद्ध भजन करते हैं, उन के पक्ष में ज्ञान एवं वैराग्याभ्यास करने का प्रयोजन नहीं है। उस में भी कतिपय साधकों की इच्छा सद्योमुक्ति मार्ग का एवं क्रममुक्ति मार्ग में होती है। उस प्रकार गी० १८।५४ में उक्त है।

"ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति।
समः सर्वेषुभूतेषु मद्भक्तिं लभते पराम्॥"

इस श्लोक के अनुसार प्रतीत होता है कि ब्रह्म स्वरूपानुभूति प्राप्त करने के पश्चात् श्रीभगवान् में पराभक्ति होती है। यहाँपर समझना होगा कि यह सद्योमुक्ति मार्ग नहीं है, किन्तु क्रम मुक्ति मार्ग है, क्रम मुक्ति मार्ग में ही इस प्रकार प्रसङ्ग होता है। इस प्रकार क्रम भक्ति मार्ग में यदि किसी की प्रवृत्ति होती है, तो उस साधक के पक्ष में कथञ्चित् ज्ञान वैराग्य की अपेक्षा रह सकती है। ऐसा होने पर निखिल फल समूह के राजास्वरूप श्रीभगवत् प्रेमलाभ में ही विशुद्ध भक्ति का तात्पर्य्य है। इस प्रकार विशुद्ध भक्ति साधन में ज्ञान वैराग्य की किसी पकार अपेक्षा है ही नहीं ।।८३।।

८४। ज्ञानादि साधन में जो फल निर्दिष्ट है, उक्त प्राप्ति हेतु ज्ञानादि पृथक् साधन करना भी निष्प्रयोजनीय है, कारण, विशुद्ध भक्ति साधन के द्वारा ही उक्त साधन समूह का मुख्य फल लाभ अनायास

(८४) "यत् कर्म्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् ।
योगेन दानधर्म्मेण श्रेयोभिरितरैरपि ॥१३५॥
सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा ।
स्वर्गापवर्गं मद्धाम कथञ्चिद्यदि वाञ्छति ॥"१३६॥

इतरैस्तीर्थयात्राव्रतादिभिरपि यद्भाव्यम्, तत् सर्वं मद्भक्तियोगेन मद्भक्तो लभते । तत्राप्यञ्जसा अनायासेनैव । किं तत् सर्वम् ? तदाह--स्वर्गापवर्गमिति । स्वर्गः प्रापञ्चिकसुखं सत्त्वशुद्धयादिक्रमेणापवर्गो मोक्षसुखञ्च । तदतिक्रमिसुखञ्च भवतीत्याह--मद्धाम वैकुण्ठञ्चेति

---

से ही होता है । उस का वर्णन भा० ११।२०।३२-३३ में करते हैं ।

(८४) "यत् कर्मभिर्यत्तपसा ज्ञान वैराग्यतश्च यत् ।
योगेन दानधर्म्मेण श्रेयोभिरितरैरपि ॥१३५॥
सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा ।
स्वर्गापवर्गं मद्धाम कथञ्चिद्यदि वाञ्छति ॥"१३६॥

टीका—तत्र हेतुः, यत् कर्मभिरित्यादि । इतरैरपि तीर्थ यात्राव्रतादिभिः श्रेयः साधनैर्यद्भाव्यं सत्त्व शुद्धयादि तत् सर्वमञ्जसा अनायासेनैव स्वर्गमपवर्गं मद्धाम वैकुण्ठंलभत एव । वाञ्छातु नास्तीत्युक्तं,—यदि वाञ्छतीति ॥३२।३३।

हे उद्धव ! असंख्य काम्य कर्मानुष्ठान के द्वारा जो फल लाभ होता है, चित्त की एकाग्रता, ज्ञान साधन, दानधर्म एवं अन्यान्य श्रेयः साधन से जो फल लाभ होता है । मदीय भक्त, भक्तियोग के प्रभाव से उक्त साधन समूह के फल समूह को अनायास प्राप्तकर सकते हैं, तदतिरिक्त, स्वर्ग, मोक्ष, एवं सुख मय वैकुण्ठ धाम की, इच्छा होने पर अनायास प्राप्तकर सकते हैं ।

श्लोकस्थ "इतरैरपि" पद का अर्थ-तीर्थ यात्रा, व्रतादि अनुष्ठान के द्वारा जो फल लाभ होगा, मदीय भक्ति के प्रभाव से तत् समुदय फल को मद्भक्त प्राप्त कर सकते हैं । अथच उक्त फल लाभ अवलेश से ही होता है । उक्त साधनों के सर्व फल क्या है ? कहते हैं, "स्वर्गापवर्ग मद्धाम" अर्थात् स्वर्ग—प्रापञ्चिक सुख । क्रमशः चित्त शुद्धि प्रभृति क्रम से मोक्षसुख लाभ भी हो सकता है । यहाँतक कि प्रापञ्चिक सुख एवं मोक्ष सुख को तिरस्कार करता है इस प्रकार सुख लाभ भी होता है । अर्थात् "मद्धाम" वैकुण्ठ लोक में निवास जनित जो सुख है, उसको यदि चाहता है, तो भक्ति प्रभाव से मदीय भक्त अनायास उस सुख का अनुभव करने में सक्षम होंगे ।

जिज्ञासा हो सकती है—कि--जो निष्काम भक्त है, उसकी इच्छा स्वर्ग, मोक्ष, वैकुण्ठ लोक के सुखास्वादन हेतु क्यों होगी ? उत्तर में कहते हैं,—"कथञ्चित् यदि वाञ्छति" अर्थात् भक्ति के सहायक रूप में यदि भक्त की इच्छा होती है तो, उक्त वाञ्छात्रय के मध्य में श्रीचित्रकेतु प्रभृति के समान किसी भक्त की स्वर्गवाञ्छा होती है, श्रीचित्रकेतु महाराज की स्वर्गवाञ्छा भक्ति सहायक रूप में हुई थी । भा० ६।१७।२-३ में उसका उल्लेख है,—"स लक्षं वर्षाणामव्याहतबलेन्द्रियः, रेमे विद्याधर स्त्रीभि र्गापयन् हरि मीश्वरम्" । अर्थात् चित्रकेतु महाराज, अप्रतिहत बलक्रिया होकर लक्ष लक्ष वर्षपर्य्यन्त विद्याधर स्त्रीगण के द्वारा निज प्राण वल्लभ श्रीहरि का कीर्त्तन करवाकर विहार किये थे । यहांपर उनकी स्वर्गीय सुखवाञ्छा का उद्देश्य था, अति दीर्घकाल यावत् वार्द्धक्य रहित भाव से अवस्थित होकर सुकण्ठी विद्याधर रमणी वृन्द के सुकण्ठ से प्रिय श्रीहरि के गुण कीर्त्तन करवाना । मर जगत् में अवस्थित होने से गायक एवं श्रोता

कथञ्चिद्भक्त्युपकरणत्वेनैव यदि वाञ्छति कश्चित्, तत्र श्रीचित्रकेत्वादिवत् स्वर्गवाञ्छा, तस्य भक्त्युपकरणत्वञ्चोक्तम् (भा० ६।१७।२।३)--"स लक्षं वर्षलक्षाणामव्याहत-बलेन्द्रियः" रेमे विद्याधरस्त्रीभिर्गापयन् हरिमीश्वरम्" इति। श्रीशुकादिवदपवर्गवाञ्छा, तत्प्रार्थनया श्रीकृष्णेन दूरीकृतायां मायायां मातृगर्भाद्बहिर्बभुवेति हि ब्रह्मवैवर्त्तीय-कथा। तत्र च भक्त्युपकरणत्वम् (गी० १८।५४) —"ब्रह्मभूतः प्रसन्नात्मा" इत्यादि-श्रीगीता-वचनात्। तथा प्राप्त-भगवत्पार्षदपद-तदीयवृन्दविशेषवद्वैकुण्ठेच्छा। ते हि प्रेरणा साक्षात् श्रीभगवच्चरणारविन्द-सेवेच्छयैव तत् प्रार्थ्यं प्राप्तवन्तः, (भा० ३।१४।२५) "यच्च व्रजन्त्यनिमिषामृषभ नुवृत्त्या" इत्यादिवत्।। श्रीभगवान्।।

---

में वार्द्धक्य आने की सम्भावना रहती है। जिस से उक्त अनुष्ठान में बाधा उपस्थित होती।

कोई कोई भक्त निष्काम होकर भी श्रीशुकदेवादि के समान अपवर्ग की वाञ्छा करते हैं। ब्रह्म-वैवर्त्त पुराण में लिखित है, श्रीशुकदेव, श्रीकृष्ण के निकट मायानिवृत्ति हेतु प्रार्थना करने पर श्रीकृष्ण भी मायापसारित किये थे। उस से श्रीशुकदेव भूमिष्ठ हुए थे। इस प्रार्थना के अभ्यन्तर में पराभक्ति का सहकारित्व है। कारण, "ब्रह्मभूत प्रसन्नात्मा" श्रीभगवद् गीता के वचनानुसार लय विक्षेपादि शून्य पराभक्ति का सहकारित्व का संवाद सुस्पष्ट है। कोई कोई भक्त, निष्काम होकर भी पार्षद वृन्द के समान वैकुण्ठ लोक प्राप्ति की वाञ्छा करते हैं।

यहाँपर 'पार्षदवृन्द' शब्द के पश्चात् 'विशेष' शब्द का प्रयोग है। उस का अभिप्राय यह है,—सालोक्य, सामीप्य, स्वारूप्य, एवं सार्ष्टि रूप चतुर्विध मुक्ति का अधिकारी भक्त ही है। ज्ञानी अथवा योगी उक्त मुक्ति चतुष्टय के अधिकारी नहीं हो सकते हैं। सुखैश्वर्य्योत्तरा एवं प्रेमसेवोत्तरा भेद से उक्त मुक्ति चतुष्टय, द्विविध होते हैं, जिस मुक्ति में सुख ऐश्वर्य्य भोग की लालसा रहती है, उसे सुखैश्वर्य्योत्तरा कहते हैं, एवं जिस में प्रीति पूर्वक साक्षात् श्रीभगवान् के चरणारविन्द की सेवा प्राप्ति की इच्छा रहती है—उसे प्रेमसेवोत्तरामुक्ति कहते हैं। उक्त प्रेमसेवोत्तरा मुक्ति प्राप्ति के निमित्त निष्काम भक्त की लालसा होती है। उक्त निष्काम भक्त वृन्द, प्रीति पूर्वक श्रीभगवान् की साक्षात् सेवा प्राप्ति के निमित्त निज प्रार्थनीय श्रीवैकुण्ठ लोक लाभ करते हैं। जिस वैकुण्ठ लोक का परिचय, देवगण के निकट श्रीब्रह्माने प्रदान किया है। (भा० ३।१५।२५ )

"यच्च व्रजन्त्यनिमिषामृषभानुवृत्त्या दूरे यमाह्युपरि नः स्पृहणीय शिलाः।
भर्त्तुर्मिथः सुयशसः कथनानुरागः वैक्लव्य वाष्प कलया पुलकीकृताङ्गाः॥"

टीका—पुनः कथम्भूतम्? यच्च नः उपरिस्थितं व्रजन्ति। अनिमिषां देवानाम्, ऋषभः श्रेष्ठो हरिः, तस्यानुवृत्त्या, दूरे यमो येषां, यद्वा दूरीकृतयमनियमाः। दूरेऽहमाईति पाटे दूरीकृताहङ्कारा इत्यर्थः। स्पृहणीयं करुणादि शीलं येषाम्। किञ्च भर्त्तुर्हरेर्यन् सुयशस्तस्य मिथकथने योऽनुरागस्तेन वैक्लव्यं-वैवश्यं, तेन वाष्पकला, तथा सह पुलकीकृतमङ्गं येषाम्। यद्वा नः उपरीति व्रजतां विशेषणं, निरहङ्कारत्वात् अस्मत्तोऽपि ये अधिकास्ते यद् व्रजन्तीत्यर्थः॥

वैकुण्ठ लोक को निखिल देवाराध्य श्रीभगवान् के अनुकूल वृत्ति अवलम्बन कारी मृत्युक्षय रहित भक्त वृन्द ही प्राप्त करते हैं, जिन भक्त वृन्द के चरित्र लाभ करने के निमित्त मुनिवृन्द के हृदय में लालसा उत्पन्न होती है। कारण, वे सब श्रीभगवान् के समान परमैश्वर्य्य मण्डित होने पर भी परस्पर निज प्रिय

८५। अन्ते च (भा० ११।२९।२२)—

(८५) "एषा बुद्धिमतां बुद्धिर्मनीषा च मनीषिणाम्।
यत् सत्यमनृतेनेह मर्त्येनाप्नोति मामृतम् ॥" १३७॥

टीका च--"अतो मद्भजनमेव बुद्धेर्विवेकस्य मनीषायाश्चातुर्य्यस्य च फलमित्याह--एषेति तामेव दर्शयति—सत्यममृतञ्च, मा माम्, अनृतेनासत्येन मर्त्येन विनाशिना मनुष्यदेहेन इह अस्मिन्नेव जन्मनि प्राप्नोतीति यत्, सैव बुद्धिर्मनीषा चेति। बुद्धिर्विवेकः, मनीषा चातुर्य्यम्" इत्येषा। (भा० १०।७२।२१)--

"हरिश्चन्द्रो रन्तिदेव उञ्छवृत्तिः शिविर्बलिः।
व्याधः कपोतो बहवो ह्यध्रुवेण ध्रुवं गताः ॥१३८॥

---

श्रीभगवान् के गुण कीर्त्तनानुराग में विभोर होते हैं। इस प्रमाण से प्रतिपन्न होता है कि – निष्काम भक्त वृन्द भी परम प्रिय श्रीहरि की सेवा के निमित्त पार्षद देह प्राप्ति रूप मुक्ति वाञ्छा करते हैं।

श्रीभगवान् उद्धव को कहे थे।८४

८५। एकादश स्कन्ध के अन्तिम अध्याय ११।२९।२२ में श्रीभगवान् उद्धव को कहे थे—

(८५) "एषा बुद्धिमतां बुद्धिर्मनीषा च मनीषिणाम्।
यत् सत्यमनृतेनेह मर्त्येनाप्नोति मामृतम् ।।" १३७॥

टीका—अतोमद् भजनमेव बुद्धे विवेकस्य मनीषायाश्चातुर्य्यस्य च फलमित्याह एषेति। तामेव दर्शयति,—सत्यममृतञ्च मा माम् अनृतेन असत्येन, मर्त्येन, विनाशिना—मनुष्यदेहेन, इह अस्मिन्नेव जन्मनि प्राप्नोतीति यत् सैव बुद्धिर्मनीषाचेति। बुद्धिर्विवेकः। मनीषा—चातुर्य्यम् ॥२२॥

हे उद्धव! अतएव मेरा भजन ही विवेकवती बुद्धि, एवं चातुर्य्य का परम फल है। वह फल क्या है? उसको कहते हैं, विनाश शील क्षणस्थायी शरीर के द्वारा इस संसार में इस जन्म में ही सत्य आनन्द मय मुझ को यदि प्राप्त करलेता है, तो, वह ही बुद्धि—विवेक, एवं मनीषा अर्थात् चातुर्य्य है। और यदि मुझ को प्राप्त न कर अनित्य एवं दुःखमय देह के द्वारा अनित्य एवं दुःखमय वस्तु को प्राप्त करता है तो, समझना होगा कि—वह मानव विवेक शून्य मूर्ख एवं अचतुर है।

उक्त श्लोक की श्रीधर स्वामिकृत व्याख्या इस प्रकार है—अतएव मेरा भजन ही बुद्धि अर्थात् सत् असत् विचार करने की क्षमता है, एवं मनीषा-अर्थात् चातुर्य्य का फल है। उसको कहते हैं-"एषाबुद्धिमतां बुद्धिः" सत्य एवं अमृत स्वरूप मुझ को, अनृत-असत्य मर्त्य – विनाशी, मनुष्य शरीर के द्वारा, इस जन्म में ही जो मुझ को प्राप्त कर लेता है, वह ही बुद्धि है, एवं मनीषा है, बुद्धि का अर्थ -विवेक है, मनीषा शब्द का अर्थ–चातुर्य्य है।

भा० १०।७२।२१ में उक्त है

" हरिश्चन्द्रो रन्तिदेव उञ्छवृत्तिः शिविर्बलिः।
व्याधः कपोतो बहवो ह्यध्रुवेण ध्रुवं गताः ।।"

टीका-विश्वामित्रार्थानृण्याय हरिश्चन्द्रो भार्य्यात्मजादि सर्वं विक्रीय स्वयं चाण्डालतां प्राप्तोऽप्यनिर्विण्णः सहायोध्यावासिभिर्ज्जनैः स्वर्गं गतः। रन्तिदेवः, सकुटुम्बोऽष्टचत्वारिंशदहान्यलब्धोदकोऽपि कथञ्चित्-लब्धान्नोदकादि अर्थिभ्यो दत्वा ब्रह्मलोकं गतः। उञ्छवृत्ति मुद्गलः, षण्मासं सीदत् कुटुम्बोऽप्यातिथ्य

पूर्वं भक्तिप्रकरणगतत्वात् "अतः" इति हेतूपन्यासः कृतः ।। सः (श्रीभगवान्) ।।

८६ । श्रीशुकोपदेशोपसंहारे च श्रवणमुपलक्ष्य (भा० १२।४।४०) –

(८६) "संसारसिन्धुमतिदुस्तरमुत्तितीर्षो, र्नान्यः प्लवो भगवतः पुरुषोत्तमस्य ।
लीलाकथारसनिषेवणमन्तरेण, पुंसो भवेद्विविधदुःखदवार्दितस्य ।।"१३८।।

टीका च–"अन्यः प्लव उत्तरणसाधनं न भवेत्, उपायान्तरासम्भवात्, तत्कथाश्रवणमेव यथाशक्ति निषेव्यम्" इत्येषा । अन्यासामपि भक्तीनां तत्पूर्वकत्वेनैव प्रवृत्तेरुपायान्तरासम्भवत्वं युक्तम् । एतदन्तराध्यायश्च तादृशोपक्रमोपसंहारमय एव, (भा० १२।५।१)-

---

दानेन ब्रह्म लोकं गतः । शिविः, शरणागत कपोतरक्षणाय स्वमांसं श्येनाय दत्त्वा दिवं गतः, बलिः सर्वस्वं ब्राह्मण वेषधारिणे हरये दत्त्वा तमेवात्मसाच्चकारः कपोतश्चातिथये व्याधाय कपोत्यासह आत्ममांसं दत्त्वा विमानेन दिवं गतः । व्याध स्तयोः सत्त्वं वीक्ष्य स्वयमति निर्विण्णो महाप्रस्थाने वनाग्नि दग्धदेहो निष्कल्मषो दिवमारुरोह । एवमन्ये च बहवोऽध्रुवेण शरीरेण ध्रुवं लोकं गता इति ।।"

हरिश्चन्द्र, रन्तिदेव, उञ्छ वृत्ति, शिवि, बलि, व्याध, कपोत प्रभृति अनेक महापुरुष वृन्द,--अस्थायी विनाशी देह के द्वारा नित्य सनातन वस्तु मुझ को प्राप्त किये हैं ।

स्वामिपाद कृत टीका में लिखित है, "अतो मद्भजनमेव" यहाँ अतः शब्द का अर्थ उन्होंने अतएव किया है । इस प्रकार हेतु का उल्लेख करने का तात्पर्य्य यह है--"एषा बुद्धि मत्तां बुद्धिः" इस श्लोक के पूर्व में भक्ति प्रसङ्ग वर्णित हुआ है, तज्जन्य ही 'अतः' इस प्रकार हेतु का उपन्यास किया गया है ।

प्रवक्ता श्रीभगवान् हैं ।८५।

८६ । श्रीशुकोपदेश के उपसंहार में भी श्रीकृष्ण लीलाकथा श्रवण को उपलक्ष्य कर कहा गया है कि श्रीहरि कथा श्रवण व्यतीत संसार सिन्धु उत्तीर्ण होने का अपर कोई उपाय नहीं है । भा० १२।४।४०

(८६) "संसारसिन्धुमतिदुस्तरमुत्तितीर्षो
र्नान्यः प्लवो भगवतः पुरुषोत्तमस्य ।
लीलाकथा रस निषेवण मन्तरेण
पुंसो भवेद्विविध दुःखदवार्द्दितस्य ।।" १३८।।

टीका—ननु यदि साकल्येनाभिधातुं न शक्यन्ते तर्हि किं तदभिधानेन, तत्राह,--संसारेति । विविधं दुःखमेव दवो दावानलस्तेन अर्दितस्य पीडितस्य, अत उत्तितीर्षोः पुंसः भगवतो या लीला स्तासां कथास्तासां रसस्तन्निषेवणमन्तरेण अन्यः प्लवस्तरणसाधनं न भवेत् । उपायान्तरासम्भवात् । तत्कथा श्रवणमेव यथा शक्ति निषेव्यमित्यर्थः ।।४०।

हे राजन् ! विविधदुःख दावानल से दन्दह्यमान देहाभिमानी जीवके हृदय में अतिदुस्तर संसारसिन्धु उत्तीर्ण होने की इच्छा जागरुक होने पर श्रीभगवान् की लीलाकथा रूप तरणी की ही अवलम्बन करना चाहिये, कारण, भगवान् पुरुषोत्तम की लीलाकथा निषेवण भिन्न अपर कोई संसार समुद्र तरण साधन तरणी नहीं है ।

उपायान्तर की असम्भवना के कारण अन्य प्लव अर्थात् उत्तरण साधन नहीं हो सकता है । स्वामि पाद का अभिप्राय यह ही है । यहाँपर श्रीधर स्वामि पाद कर्त्तृक व्याख्यात उपायान्तर की असम्भवना का कथन अतिशय युक्ति युक्त है । कारण, अपर जितने भी भक्त्यङ्ग साधन हैं, उन में श्रीहरि कथा श्रवण ही

"अत्रानुवर्ण्यतेऽभीक्ष्णं विश्वात्मा भगवान् हरिः ।
यस्य प्रसादजो ब्रह्मा रुद्रः क्रोधसमुद्भवः ॥"१४०॥

इत्युपक्रमे, (भा० १२।५।१३)—

"एतत्ते कथितं तात यदात्मा पृष्टवान्नृप ।
हरेर्विश्वात्मनश्चेष्टां किं भूयः श्रोतुमिच्छसि ॥"१४१॥

इत्युपसंहारेऽपि तादृश-महिमत्वेन पूर्वोक्त-लीलाकथाश्रवणस्यैव प्राधान्यात्, तत उपक्रमोपसंहारनिर्दिष्टत्वात् श्रवणोपलक्षित-भक्तेरेवात्रापि प्राधान्यम् । यस्तु तन्मध्ये (भा० १२।५।२) "त्वन्तु राजन् मरिष्येति" इत्यादिना ज्ञानोपदेशः, स च तस्य या प्रागवगता

---

प्रधान है, उस से ही अपर भक्तयङ्ग साधन में प्रवृत्ति होती है । जबतक साधु के मुखारविन्द से श्रीहरि कथा श्रवण करने के निमित्त रुचि उत्पन्न नहीं होती है, तबतक अपर भक्तयङ्ग साधनमें प्रवृत्ति का उद्गम नहीं होता है ।

इस के परवर्त्ती अध्याय भा० १२।५।१ में उपक्रमोपसंहार के द्वारा पूर्व वर्णित विषय का उल्लेख हुआ है ।

"अत्रानुवर्ण्यतेऽभीक्ष्णं विश्वात्मा भगवान् हरिः ।
यस्य प्रसाद जो ब्रह्मा रुद्रः क्रोधसमुद्भवः ।"१४०॥

टीका—एतत् पुराणं श्रृण्वनभयं प्राप्नोतीत्यभिप्रेत्य पुराणार्थमनुस्मारयति— अत्रेति - अयं भावः । जगतः कर्त्ता ब्रह्मापि यस्य प्रसादजः । प्रसादोऽत्र रजोवृत्तिर्हर्षः । ततो जगतत्वात् परतन्त्रः । सर्व संहर्त्ता रुद्रश्च यस्य क्रोध सम्भवो नतु स्वतन्त्रः । स विश्वस्यात्मा नियन्ता, भगवान् अत्रानुवर्ण्यते । अत एवम्भूतं भागवतं श्रृणुतः । कुतोऽन्यस्माद् भयशङ्केति । (१)

हे राजन् ! जो मानव, श्रीमद् भागवत श्रवण करता है, उस को भय अपर से कसे हो सकता है ? कारण, ब्रह्मा जिनके प्रसादज है, अर्थात् रजोगुण वृत्ति हर्ष से उत्पन्न होने के कारण परतन्त्र हैं, सवसंहार कर्त्ता रुद्र भी जिनके क्रोध समुत्पन्न हैं, अतएव आप भी जिन के अधीन हैं, उन विश्व नियन्ता भगवान् श्रीहरि, निरन्तर जिस के प्रतिश्लोक में क्रमशः वर्णित हैं । इस प्रकार उपक्रम करके भा० १२।५।१३ में निज प्रियतम शिष्य श्रीपरीक्षित् महाराज को कृतार्थ करने के निमित्त प्रश्न करते हैं—

"एतत्ते कथितं तात् यदात्मा पृष्टवान्नृप ।
हरेर्विश्वात्मनश्चेष्टां किं भूयः श्रोतुमिच्छसि ।।"१४१॥

टीका—हरेश्चेष्टामात्मा त्वं यत् पृष्टवान् तदेतत् ते कथितम् । शिष्यस्य कृतार्थता परीक्षणाय पृच्छति किमिति ॥१३॥

हे राजन् ! हे वत्स ! तेमने सर्वात्मा प्रियतम श्रीहरि की लीला का श्रवण के निमित्त जो प्रश्न किया था, उसका वर्णन मैंने किया, पुनर्वार तुम क्या सुनना चाहते हो ? इस उपसंहार वाक्य में हरिकथा श्रवण की महिमा अतिशय प्रकाशित होने से पूर्व वर्णित लीला कथा श्रवण का प्राधान्य वर्णित हुआ है । अतएव उपक्रम उपसंहार में हरि कथा श्रवण का प्राधान्य निर्दिष्ट होने के कारण, यहाँपर श्रीहरि कथा श्रवणोपलक्षिता भक्ति का ही प्राधान्य को जानना होगा । इस अभिप्राय से ही श्रीस्वामिपादने उपायान्तर का असम्भव के कारण,—श्रीहरि कथा श्रवण कीर्त्तन महिमा वर्णन प्रसङ्ग के मध्य में भी "त्वन्तु राजन् मरिष्येति पशुबुद्धिमिमां जहि । न जातः प्रागभूतोऽद्यदेहवत् त्वं न नङ्क्ष्यसि (भा० १२।५।२) टीका । त्वं

भक्तिनिष्ठा, तस्याः सम्प्रत्यपि स्थैर्य्यप्रकटनार्थं एव, एकान्तिभक्तेषु भगवता मोक्षवरच्छन्दनवत् पूर्व्वमपि तन्निष्ठया स्वतः एव मरणभयपरित्यागात्, अनन्तरञ्च श्रुत्वापि तं ज्ञानोपदेशं स्वस्य भक्तिनिष्ठाया एव स्वयं दर्शयिष्यमाणत्वात् । तत्र प्राचीना तन्निष्ठा, यथा प्रथमे (भा० १।१९।५) "कृष्णाङ्घ्रिसेवामधिमन्यमानः" इति, (भा० १।१९।७) "दध्यौ मुकुन्दाङ्घ्रिमनन्यभावः" इत्यादि च तन्निष्ठयैव तद्भय परित्यागो यथा तद्वाक्ये (भा० १।१९।१५) "द्विजोपसृष्टः

---

पुनः कृतार्थ एवेत्यनु स्मारयति त्वन्त्विति । पशु बुद्धिमविवेकम । यस्मात् न नङ्क्ष्यसि कुत इत्यत अ ह— न जात इति । यथा देहः प्रागभूत् एवाद्यजातो नङ्क्ष्यति । न चैवं त्वं पूर्वं नाभूर्नचाद्य जातोऽसि अतो न नङ्क्ष्यसि ॥२॥

हे राजन् ! 'तुम मरोगे' इस प्रकार अविवेक त्याग करो, इस प्रकार ज्ञानोपदेश किया गया है । उक्त उपदेश का तात्पर्य्य यह है—पहले श्रीशुकदेव ने परीक्षित् महाराज की जिस भक्ति निष्ठा को अवगत हुये थे, सम्प्रति उस भक्ति की स्थिरता प्रकटन के निमित्त ही उस प्रकार ज्ञानोपदेश किया गया है । एकान्ति भक्त वृन्द के निकट श्रीभगवान् जिस प्रकार मोक्षवर ग्रहण करने के निमित्त अनुरोध करते हैं, यहाँपर भी उस प्रकार परीक्षित् महाराज की भक्ति निष्ठा का उदय किस प्रकार हुआ है, उस की परीक्षा करने के निमित्त ही ज्ञानोपदेश किया है । कारण, पहले भी भक्ति में गाढ़ निष्ठा हेतु स्वतः ही मरणमय को परित्याग श्रीपरीक्षित् महाराज किये थे । अनन्तर उक्त ज्ञानोपदेश श्रवण के पश्चात् भी स्वीय भक्ति निष्ठा को ही व्यक्त किये थे ।

इसके मध्य में भक्ति के प्रति निष्ठा की वार्त्ता महाराज की भा० १।१९।५ में इस प्रकार है—

"अथो विहायेममनुञ्च लोकं विमर्शितौ हेयतया पुरस्तात् ।
कृष्णाङ्घ्रि सेवामधिमन्यमान उपाविशत् प्रायममर्त्यनद्याम् ॥"

टीका—अथो अनन्तरम् । उभौ लोकौ, पुरस्ताद्राज्यमध्य एव हेयतया विचारितौ विहाय । श्रीकृष्णाङ्घ्रिसेवामेवाधिमन्यमानः सर्व पुरुषार्थेभ्योऽधिकां जानन्, प्रायमनशनं तस्मिन्नित्यर्थः । तत् सङ्कल्पेनोपाविशदिति यावत् । यद्वा, प्राय प्रकृष्टमयनं शरणं यथा भवति तथा ॥५॥

महाराज परीक्षित् श्रीकृष्ण चरणारविन्द की सेवा को ही सार मानकर गङ्गातीर में प्रायोपवेशन किये थे । भा० १।१९।७ में उक्त है—

"इति व्यवच्छिद्य स पाण्डवेयः प्रायोपवेशं प्रति विष्णुपद्याम् ।
दध्यौ मुकुन्दाङ्घ्रि मनन्यभावो मुनिव्रतो मुक्त समस्तसङ्गः ।"

टीका—इति- एवं विष्णुपद्यां गङ्गायां प्रायोपवेशं प्रति व्यवच्छिद्य निश्चित्य । पाण्डवेय इति तत् कुलौचित्यंदर्शयति । नास्त्यन्यस्मिन् भावोयस्य सः । कुतः ? मुनिव्रतः--उपशान्तः । तत् कुतः ? मुक्त समस्त सङ्गो येन सः । (७)

इस में "सर्वसङ्ग विनिर्मुक्त मौनी महाराज परीक्षित् के द्वारा अनुष्ठित श्रीकृष्ण के चरण युगल का ध्यान का वर्णन है । उक्त श्लोक द्वय के द्वारा महाराज की भक्ति निष्ठा वर्णित हुई है । भा० १।१९।१५ श्लोक में सर्प दंशन से भय निवृत्ति की वार्त्ता लिखित है—

" तं मोपयातं प्रतियन्तु विप्रा गङ्गा च देवी धृतचित्तमीशे ।
द्विजोपसृष्टः कुहकस्तक्षको वा दशत्वलं गायत विष्णुगाथाः ॥१५॥

टीका— तान् प्रार्थयते द्वाभ्याम् । तं मा माम्, उपयातं, शरणागतं प्रतियन्तु--जानन्तु । देवी देवता

कुहकस्तक्षको वा, दशत्वलं गायत विष्णुगाथाः" इति। तज्ज्ञानोपदेश-श्रवणानन्तरमपि तादृश-स्वनिष्ठायाः स्थैर्य्यदर्शनं यथा तत्र तावत् पद्यत्रयेण तज्ज्ञानोपदेशमबहु मत्वा श्रवण-लक्षणया भक्त्यैव स्वकृतार्थत्वमुक्तम् (भा० १२।६।२-४)—

"सिद्धोऽस्म्यनुगृहीतोऽस्मि भवता करुणात्मना।
श्रावितो यच्च मे साक्षादनादिनिधनो हरिः ॥१४२॥
नात्यद्भुतमहं मन्ये महतामच्युतात्मनाम्।
अज्ञेषु तापतप्तेषु भूतेषु यदनुग्रहः ॥१४३॥
पुराणसंहितामेतामश्रौष्म भवतो वयम्।
यस्यां खलूत्तमश्लोको भगवाननुवर्ण्यते ॥"१४४॥ इति

---

रूपा गङ्गा च प्रत्येतु। वा शब्द प्रतिक्रियाऽनादरे। गाथाः कथा--गायत ॥५॥

ब्राह्मण कर्त्तृक प्रेरित कुहक अथवा यथार्थ तक्षक मुझ को यथेष्ट दंशन करे। आप सब श्रीकृष्ण की गुण कथा का गान करें। इस प्रकार निज प्रार्थना के द्वारा स्पष्ट रूप से मृत्युभय निवृत्ति का विवरण प्रकाशित हुआ है।

द्वादशस्कन्ध के पञ्चम अध्याय में वर्णित "त्वन्तु राजन् मरिष्यति" हे राजन्! 'तुम मरोगे' इस प्रकार अविवेक प्राप्त होना ठीक नहीं है।' इस से आरम्भकर जो ज्ञानोपदेश किया गया है। उसके पहले भी महाराज में श्रीहरिभक्ति की अव्यभिचारिता प्रदर्शित हुई है। उस के मध्य में (भा० १-२।६।२-४) तीन श्लोकों के द्वारा ही महाराज कृतार्थ हुए है इस का उल्लेख है।

"सिद्धोऽस्म्यनुगृहीतोऽस्मि भवता करुणात्मना।
श्रावितो यच्च मे साक्षादनादिनिधनो हरिः ॥१४२॥
नात्यद्भुतमहं मन्ये महतामच्युतात्मनाम्।
अज्ञेषु तापतप्तेषु भुतेषु यदनुग्रहः ॥१४७॥
पुराणसंहितामेतामश्रौष्म भवतो वयम्।
यस्यां खलूत्तमश्लोका भगवाननुवर्ण्यते ॥"१४४॥ इति।

टीका—सिद्धं, कृतार्थोऽस्मि। यतोऽनुगृहीतोऽस्मि। अनुग्रहमेवाह—यद् यस्मात् श्रावितः। च शब्दात् प्राप्ति साधन श्रावितम्। (२)

करुणात्मतामभिनन्दति— नात्यद्भुतमिति द्वाभ्याम्।२ अश्रौष्म श्रुतवन्तः, भवतः सकाशात् ॥४॥

हे प्रभो! आप साक्षात् करुणा की मूर्त्ति हैं। आप के द्वारा मैं कृतार्थ एवं अनुगृहीत हूँ। कारण, आपने कृपा करके मुझ को अनादि निधन श्रीहरि की कथा का श्रवण कराये हैं। जो श्रीहरि गत प्राण हैं, उन महापुरुषों के पक्ष में त्रिताप दग्ध अज्ञ देहाभिमानी जीव के प्रति एतादृश अनुग्रह—अद्भुत नहीं है। आप के वदन चन्द्र से विनिःसृत--यह पुराण संहिता रूप अमृत का पान हमने किया। जिस में उत्तम श्लोक श्रीभगवान् सर्वत्र अनुक्रम से वर्णित हुये हैं। अर्थात् अन्वय व्यतिरेक के द्वारा एवं मुख्य, गौण वृत्ति के द्वारा श्रीमद् भागवत में सर्वत्र भगवान् श्रीकृष्ण ही वाच्य एवं लक्ष्य रूप में वर्णित हैं।

इस प्रकार ज्ञानोपदेश श्रवण के पश्चात् भी श्रीहरि भक्ति अनुष्ठान के द्वारा ही महाराज परीक्षित की चित्तैकतानता प्रदर्शित हुई है। पुनर्वार एक श्लोक के द्वारा श्रीगुरुवाक्य की गौरवरक्षा हेतु ब्रह्म ज्ञान

पुनश्चैकेन पद्येन तद्वाक्यगौरवमात्रेणाङ्गीकृतस्य ब्रह्मज्ञानस्य तक्षकादिभय-निवृत्ति-हेतुत्वमुक्त्वाप्यन्येन तदूर्ध्वमधोक्षज एव वाक्चेतसोस्तन्नामकीर्त्तन-ध्यानावेशानुज्ञा प्रार्थिता (भा० १२।६।५--६)

"भगवंस्तक्षकादिभ्यो मृत्युभ्यो न बिभेम्यहम् ।
प्रविष्टो ब्रह्मनिर्वाणमभयं दर्शितं त्वया ॥१४५॥
अनुजानीहि मां ब्रह्मन् वाचं यच्छाम्यधोक्षजे ।
मुक्तकामाशयं चेतः प्रवेश्य विसृजाम्यसून् ॥" १४६॥

अथ पुनरन्येन पद्येनाज्ञाननिरासक-ज्ञानविज्ञानसिद्धिश्च भगवत्पदारविन्द-दर्शन-सुखान्त-र्भूतैव मम स्फुरतीति विज्ञापितम्, यथा (भा० १२।६।७)

"अज्ञानञ्च निरस्तं मे ज्ञान-विज्ञान-निष्ठया ।
भवता दर्शितं क्षेमं परं भगवतः पदम् ॥" १४७॥ इति ।

अत्र पद-शब्दस्य चरणारविन्दविधायकत्वे (भा० ११।१८।१६) "ज्ञानेन वैयासकि-शब्दितेन,

---

को तक्षक दंशन से भयनिवृत्ति के हेतु रूप में अङ्गीकार करके भी अपर श्लोक द्वय (भा० १२।६।५--६) के द्वारा ब्रह्म ज्ञान के उपरिस्थित अधोक्षज श्रीकृष्ण में ही वाक्य एवं चित्त में श्रीकृष्ण के नाम कीर्त्तन एवं ध्यान के द्वारा आवेश प्राप्त करने की अनुज्ञा की प्रार्थना भी उन्होंने की है।

'भगवंस्तक्षकादिभ्यो मृत्युभ्यो न बिभेम्यहम् ।
प्रविष्टो ब्रह्मनिर्वाणमभयं दर्शितं त्वया ॥१४५॥
अनुजानीहि मां ब्रह्मन् वाचं यच्छाम्यधोक्षजे ।
मुक्तकामाशयं चेतः प्रवेश्य विसृजाम्यसून् ॥"१४६॥

टीका—सिद्धोऽस्मीत्युक्तं, तदेवाविष्करोति भगवन्निति । यत स्त्वया दर्शितं ब्रह्म, प्रविष्टः । कथम्भूतम् ? अभयम् । यतो निर्वाणं कैवल्य रूपम् ।५। किं भूयः श्रोतु मिच्छसीति यदुक्तं तत्र सिद्धोऽहं न किञ्चित् श्रोतुमिच्छामि, केवलं अनुज्ञां देहीत्याह,—अनुजानीहीति । वाचमित्युपलक्षणम् । सर्वेन्द्रियाणाम् । वाचं नियम्य किं करिष्यति । तदाह—मुक्ताः कामाशयास्तद्वासना येन तच्चेतोऽधोक्षजे प्रवेश्य असून् विसृजामि ॥६॥

हे भगवन् ! मैं तक्षकादि मृत्युगण से किञ्चिन्मात्र भीत नहीं हो रहा हूँ । कारण, आप के द्वारा प्रदर्शित अभय ब्रह्म निर्वाण में मैं प्रविष्ट हो गया हूँ। इस वाक्य के द्वारा श्रीगुरुवाक्यानुरोध से ब्रह्म ज्ञानाङ्गीकार भी सूचित हुआ है । इस के परवर्त्ती श्लोक (भा० १२।६।७)

"अज्ञानञ्च निरस्तं में ज्ञानविज्ञान निष्ठया ।
भवतादर्शितं क्षेमं परं भगवतः पदम् ॥"१४७॥

में ब्रह्म ज्ञान से भी अधिक आस्वादन युक्त अधोक्षज तत्त्व श्रीकृष्ण हैं, उनके पदारविन्द दर्शन सुख को एवं अज्ञान निरासक ज्ञान विज्ञान सम्पन्नता को भी उन्होने सूचित किया है । भा० १२.६.६ श्लोक में ब्रह्म ज्ञान से भी अधिक आस्वादन युक्त श्रीकृष्ण में वाक्य एवं चित्त का गाढ़ आवेश की प्रार्थना है । "हे वेदज्ञ शिरोमणे ! आप मेरे प्रति यह कृपा करें, जैसे मैं अधोक्षज श्रीकृष्ण में वागिन्द्रिय समर्पण कर सकूँ ।

भेजे खगेन्द्रध्वजपादमूलम्" इत्येवास्ति प्रथमे साधकम्। तदेतत्प्रकरणार्थस्तत्र श्रीसूतेनैव स्पष्टीकृतः, (भा० १।१८।२-४) --

"ब्रह्मकोपोत्थिताद्यस्तु तक्षकात् प्राणविप्लवात्।
न संमुमोहोरुभयाद्भगवत्यर्पिताशयः ॥१४८॥
नोत्तमश्लोकवार्त्तानां जुषतां तत्कथामृतम्।
स्यात् संभ्रमोऽन्तकालेऽपि स्मरतां तत्पदाम्बुजम् ॥"१४९॥ इति।

तथा पूर्वं द्वादशस्यैव तृतीये प्रथमस्कन्धान्तःस्थस्य (भा० १।१९।३७)

---

अर्थात् सर्वदा श्रीकृष्ण नाम कीर्त्तन कर सकूँ। एवं सर्व भोग वासना शून्य चित्त को श्रीकृष्ण के चरणों में स्थापन कर प्राण त्याग कर सकूँ। इस के बाद पुनर्वार अन्य एक श्लोक के द्वारा अज्ञान निवर्त्तक परोक्ष एवं अपरोक्ष ज्ञान सिद्धिकी स्फूर्त्ति श्रीभगवत् पदारविन्द साक्षात् कार रूप आनन्द के अन्तर्भूत रूप में हुई थी इसका वर्णन हुआ है। ( भा० १२।६।११ ) हे प्रभो! यदि आप कहें, कि--प्राण त्याग के समय ज्ञान निष्ठ हो जाओ' उस के उत्तर में निवेदन करता हूँ। आप की कृपा से ज्ञान विज्ञान निष्ठ हेतु मेरा अज्ञान विदूरित हो गया है। यहाँतक कि अज्ञान का संस्कार पर्य्यन्त भी विनष्ट हो गया है। कारण आपने ही श्रीभगवान् के अभय श्रीचरणारविन्द का दर्शन कराया है। इस श्लोक में उल्लिखित 'पद' शब्द का अर्थ-'चरणार विन्द' होना सुसङ्गत है। कारण भा० १।१८।१६ में उक्त है—

"सवै महाभागवतः परीक्षिद् येनापवर्गाख्यमदभ्र बुद्धिः।
ज्ञानेन वैयासकि शब्दितेन भेजे खगेन्द्रध्वज पाद मूलम् ॥"

टीका—तच्च शुक परीक्षित् संवादेन कथितेन येन इत्याह-- स वा इति द्वाभ्याम्। वैयासकिना, श्रीशुकेन, शब्दितेन येन ज्ञानेन, ज्ञानसाधनेन, अपवर्ग इत्याख्या यस्य तत्, खगेन्द्रध्वजस्य हरेः पादमूलं भेजे ॥"१६।

अर्थात् वैयासकि श्रीशुकदेव कर्त्तृक कथित ज्ञान साधन के द्वारा परीक्षित् महाराज गरुड़ ध्वज श्रीकृष्ण के पाद मूल लाभ किये थे। अतएव इस प्रकरण का अर्थ प्रथम स्कन्ध के अष्टादश अध्याय के द्वारा श्रीसूतने सुस्पष्ट रूप से किया है॥ भा० १।१८।२।-४

"ब्रह्म कोपोत्थिताद् यस्तु तक्षकात् प्राणविप्लवात्।
न संमुमोहोरुभयाद् भगवत्यर्पिताशयः ॥१४८॥
नोत्तमश्लोक वार्त्तानां जुषतां तत्कथामृतम्।
स्यात् संभ्रमोऽन्तकालेऽपि स्मरतां तत्पदाम्बुजम् ॥"१४९॥

टीका—ब्रह्म कोपादुत्थितात् तक्षकाद्, यः प्राण विप्लवः, प्राण नाशस्तस्माद् यदूरुभयं तस्मान्न सम्मुमोह। अत्र हेतुः, यस्तु भगवत्यर्पिताशय इति ॥२॥

न चैतच्चित्रमित्याह, उत्तमः श्लोकस्यैव वार्त्ता येषु अतएव नित्यं तत् कथारूपममृतं जुषतां सम्भ्रमो मोहो न स्यात् ॥४॥

"हे शौनक! परीक्षित् महाराज, ब्रह्म शापोत्थित तक्षक से प्रचुरतरभय हेतु प्राण नाश जन्य किसी प्रकार मोह प्राप्त नहीं हुए थे। कारण, परीक्षित्,--भगवान् श्रीकृष्ण में प्राणमन प्रभृति अर्पण किये थे। हे शौनक! यह कुछ आश्चर्य्य कर नहीं है। जो मानव,आसक्ति पूर्वक श्रीहरि कथामृतका आस्वादन करते हैं,

"अतः पृच्छामि संसिद्धिं योगिनां परमं गुरुम् ।
पुरुषस्येह यत् कार्य्यं म्रियमाणस्य सर्व्वथा ॥"१५०॥

इत्यस्य राजप्रश्नस्योत्तरत्वेन भगवद्ध्यान-कीर्त्तने एव स्वयं श्रीशुकदेवेनाप्युपदिष्टे (भा० १२।३।४९--५१)—

तस्मात् सर्वात्मना राजन् हृदिस्थं कुरु केशवम् ।
म्रियमाणो ह्यवहितस्ततो यासि परां गतिम् ॥१५१॥
म्रियमाणैरभिध्येयो भगवान् परमेश्वरः ।
आत्मभावं नयत्यङ्ग सर्वात्मा सर्वसम्भवः ॥१५२॥
कलेर्दोषनिधे राजन्नस्ति ह्येको महान् गुणः ।
कीर्त्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेत् ॥"१५७॥

इत्यादिना । ततस्तत्र केशवे, अवहितः कृतावधानः, आत्मभावमात्मनो भक्तिम् । अस्तु

---

हैं, उन सब की महिमा भी श्रीभगवान् की महिमा के समान अति पवित्र है । उन सब महाभागवत के मृत्यु समय में भी किसी प्रकार सम्भ्रम उपस्थित नहीं होता है, कारण, वे सब निरन्तर श्रीकृष्ण चरण कमल का स्मरण करते हैं, अतः उन सब को देहानुसन्धान करने का अवसर नहीं रहता है । जिनका देहानुसन्धान है, उनको ही मृत्यु से भय होता है ।

प्रथम स्कन्ध के अन्त में अर्थात् १।१९।३७ में

" अतः पृच्छामि संसिद्धिं योगिनां परमं गुरुम् ।
पुरुषस्येह यत् कार्य्यं म्रियमाणस्य सर्व्वथा १५०॥॥"

टीका—सम्यक् सिद्धि र्यस्मात् तम् । कार्य्यं कर्त्तुं योग्यं, कर्त्तव्यन्तु— आवश्यकमिति तयोर्भेदः । अतएव सर्वथा म्रियमाणस्य पुरुषस्य यस्मिन् कृते संसिद्धिर्मोक्षलक्षणा सिद्धि र्भवति तत् त्वां योगिनां गुरुं पृच्छामि ।

श्रीपरीक्षित् महाराज, श्रीशुकदेव के निकट प्रश्न किये थे,—जिस से सम्यक् सिद्धि प्राप्ति होती उस संसिद्धि को जानना चाहता हूँ । मुमुर्षु मानवों को जो कर्त्तव्य है, उसका कथन आप करें । श्रीपरीक्षित् कृत प्रश्न के उत्तर में श्रीशुकदेव, द्वादश स्कन्ध के तृतीय अध्याय में वर्णित श्रीभगवद्ध्यान एवं कीर्त्तन का उपदेश, अवश्य कर्त्तव्य रूप में किये थे । ( भा० १२। ।४९-५१)

"तस्मात् सर्वात्मना राजन् हृदिस्थं कुरु केशवम् ।
म्रियमाणो ह्यवहित स्ततो यासि परां गतिम् ॥१५१॥
म्रियमाणैरभिध्येयो भगवान् परमेश्वरः ।
आत्मभावं नयत्यङ्ग सर्वात्मा सर्वसम्भवः ॥१५२॥
कलेर्दोषनिधे राजन्नस्ति ह्येको महान् गुणः ।
कीर्त्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेत् ॥"१५३॥

क्रमसन्दर्भ ।

तदेवं तत्र स्पृष्टार्थान् सर्वान् समापयिष्यंस्तत्र कर्त्तव्यमुपदिशति तस्मादिति । सर्वात्मना-सर्वेणैव

तावदायाससाध्यं ध्यानम्, हि यस्मादनायास-साध्यात् कीर्त्तनादेवेत्यर्थः। द्वितीयस्कन्धेऽपि (भा० २।२।३३) "न ह्यतोऽन्यः शिवः पन्थाः" इत्यादिना, (भा० २।३।१) "एवमेतन्निगदितम्" इत्यन्तेन ग्रन्थेन नानाङ्गवान् शुद्धभक्ति-योग एव तत्रोत्तरत्वेन पर्य्यवसितः। तत्रापि (भा० २।२।३७) "पिबन्ति ये भगवतः' इत्यादिना लीलाकथा-श्रवण एव परमपर्य्यवसानं दृश्यते। तस्मात् साधुक्तं (भा० १२।५।२) "त्वं तु राजन् मरिष्येति" इत्यादिकं तद्भक्तिनिष्ठाप्रकटनार्थ-मेवेति, यतो भक्तावेव तदुपदेशस्य तात्पर्य्यम्, अतएव द्वितीयस्याष्टमे राजप्रार्थना च नान्यथा

---

प्रयत्नेन। तत्रैव कैमुत्येन हेतुमाह, म्रियेति। हि-यस्मादन्येऽपि यः कश्चिन् म्रियमाणोऽप्यवहितस्तस्मिन् कृतावधानश्चेत्तन्मात्रादेव परां सर्वोत्कृष्टा गतिं याति। त्वं पुनस्तस्य परमान्तरङ्गः किमुतेत्यर्थः ।।४६।।

अतएवान्यैरपि म्रियमाणैरभिध्येयः आत्म भावं आत्मनो भक्तिम्। यद्वा, परम प्रेमात्मतुल्यतामित्यर्थः।

(भा० ११।५।३६) 'कलिम्" इत्यादिनैव कलेरित्यादि व्याख्यातमेव। कलिदोष प्रशमनत्वेन नाम कीर्त्तन--स्मरण माहात्म्यमुक्त्वोपसंहरति, कलेरिति। अस्तु तावदायास साध्यं ध्यानम्, हि यस्मादनायास साध्यात् कीर्त्तनादेवेत्यर्थः। स च कलिः श्रेयोऽतिक्रम हेतूनां दोषाणां निधिरपि कलेरेको गुणः, कीर्त्तनादर रूपो महामेवास्ति, कंसादेः श्रीनारदादर इव। अतस्तस्य विघ्नोद्यमाभावात् सिध्यत्येव नामकीर्त्तयितेत्य ह कीर्त्तनादेवेति ।।५१।।

हे राजन्! विद्या, तपस्या, प्राणनिरोध, सर्व जीवों में बन्धुभाव, तीर्थ यात्रा, व्रत, दान, जप प्रभृति साधन समूह के द्वारा भी जब अन्तरात्मा 'जीव' की उस प्रकार शुद्धि नहीं होती है, भगवान् श्रीहरि की चिन्ता हृदय में करने से जिस प्रकार शुद्धि होती है। अतएव सर्व प्रकार से श्रीकेशव को हृदय में धारण करो। मुमुर्षु समय में भी यदि श्रीहरि को हृदय में धारण कर सकते हो, तो भी अवश्य ही परमागति प्राप्ति होगी, इस में किसी प्रकार संशय नहीं है। म्रियमाण जन के पक्ष में परमेश्वर श्रीहरि का ध्यान करना प्रधान कर्त्तव्य है। कारण, सर्वात्मा, सर्वसम्भव श्रीभगवान् निज स्मरण कारी भक्त को स्वरूप प्रदान अर्थात् भक्ति प्रदान अवश्य ही करते हैं।

हे राजन्! यद्यपि कलियुग, अशेष दोष का आकर है, तथापि उसका एक महीयान् गुण है, जिस प्रकार कंस का श्रीनारद समादर रूप महान् गुण था। वह यह है—एकमात्र श्रीकृष्णनाम कीर्त्तन से ही समस्त आसक्ति बन्धन से निर्म्मुक्त होकर परमपद लाभ होता है। उक्त श्लोकों के द्वारा श्रीशुकदेव ने सुस्पष्ट रूप से ही श्रीभगवद्ध्यान एवं कीर्त्तन का उपदेश प्रदान किया है। तन्मध्ये "केशवे अवहित" शब्द से 'कृतानुसन्धान' अर्थ जानना होगा। एवं "आत्मभाव" शब्द से आत्म भक्ति रूप अर्थ को जानना होगा। उस में भी अर्थात् ध्यान एवं कीर्त्तन के मध्य में भी श्रमसाध्य ध्यान से भी अनायास साध्य कीर्त्तन से समस्त बन्धन से मुक्त होकर परम पद लाभ होता है। कारण, कीर्त्तन की ही उस प्रकार विशेष महिमा है। इस प्रकार भा० २।२।३३ में उक्त है—

"न ह्यतोऽन्यः शिवः पन्था विशतः संसृताविह।
वासुदेवे भगवति भक्ति योगो यतो भवेत् ।।"

टीका—सन्ति संसरतः पुंसो बहवो मोक्षमार्गास्तपोयोगादयः समीचीन स्त्वयमेवेत्याह— नहीति। यतोऽनुष्ठितात् भक्तियोगो भवेत्, अतोऽन्यः शिवः सुख रूपो निर्विघ्नश्च नास्त्येव। (३३)

हे महाराज! इस से श्रेष्ठ अपर कोई भी मङ्गल मय पन्था है ही नहीं। उक्त श्लोक से आरम्भ कर भा० १२।३।१ श्लोक पर्य्यन्त-विविध अङ्ग युक्त शुद्ध भक्ति का वर्णन करके श्रीपरीक्षित् कृत--"मुमुर्षु व्यक्ति

स्यात् (भा० २।८।२) "कृष्णे निवेश्य निःसङ्गं मनस्त्यक्ष्ये कलेवरम्" इति। तदेवं (भा० १२।५।१)

का कर्त्तव्य क्या है'।—इस प्रकार प्रश्न का उत्तर प्रदान श्रीशुकदेव किये थे। भा० २।३।१

"एवमेतन्निगदितं पृष्टवान् यद् भवान् मम।
नृणां यन् म्रियमाणानां मनुष्येषु मनीषिणाम्॥

टीका—इदानीमन्य देवता भजनस्यादि पुत्रापि भजनवदेव तुच्छ फलत्वेन हेयत्वं वक्तुं पूर्वोक्तमनुवदति। एवमिति। ममेति—माम्। कदाचिद् दैवयोगेन मनुष्यत्वं प्राप्तेषु जीवेषु ये मनीषिणस्तेषां, तत्रापि ये म्रियमाणास्तेषां विशेषतः, एवम्, एतत् हरिकथा श्रवणादिकं निगदितं— विहितमित्यर्थः। (१)

उस में भा० २।२।३७ में "साधुवृन्द के मुख से जो लोक श्रीकृष्ण लीला कथा श्रवण करते हैं" कह कर लीला कथा श्रवण में ही उपदेश का चरम पर्य्यवसान उन्होंने किया है।

"पिबन्ति ये आत्मनः सतां कथामृतं श्रवण पुटेषु संभृतम्।
पुनन्ति ते विषय विदूषिताशयं व्रजन्ति तच्चरण सरोरुहान्तिकम्॥"

टीका—श्रवणादि फलमभिनयेनाह--पिबन्तीति। सताम्--आत्मनः आत्मत्वेन प्रकाशमानस्य। कथैव अमृतम्। विषयै विदूषितं मलिनीकृतमाशयं, पुनन्ति--शोधयन्ति। तस्य चरण पद्मान्तिकं—विष्णुपदं व्रजन्ति॥ (३७)

"त्वन्तु राजन् मरिष्येति पशुबुद्धिमिमां जहि।
न जातः प्रागभूतोऽद्य देहवत् त्वं न नङ्क्ष्यसि॥"

टीका—त्वं पुनः कृतार्थ एवेत्यनुस्मारयति त्वन्त्विति। पशुबुद्धिमविवेकम्। यस्मात् न नङ्क्ष्यसि। कुत इत्यत आह—न जात इति। यथा देहः प्रागभूत एवाद्य जातोनङ्क्ष्यति न चैवं त्वं पूर्वं नाभून चाद्य जातोऽसि अतो न नङ्क्ष्यसि।

"हे राजन्! तुम मरोगे, इस प्रकार पशु बुद्धि त्याग करो।' इस प्रकार श्रीशुक का कथन, परीक्षित् की भक्ति निष्ठापरीक्षा हेतु हुआ है। यह अति सुन्दर है। कारण, भक्ति में ही श्रीशुकोपदेश का तात्पर्य्य है। इस प्रकार व्याख्या न करने से श्रीपरीक्षित् कृत प्रश्न का उत्तर यथायथ रूप से नहीं होता है। कारण भा० २।८।३ में उक्त है—

"कथयस्व महाभाग यथाहमखिलात्मनि।
कृष्णे निवेश्य निःसङ्गं मनस्त्यक्ष्ये कलेवरम्॥

टीका—निःसङ्गं मनः, श्रीकृष्णे निवेश्येति—स्व प्रयत्नो दर्शितः।

महाराज ने प्रश्न किया—"हे महाभाग! आप यही कृपा करें, जैसे मैं अन्यवासना को छोड़कर निःसङ्ग मन को श्रीकृष्ण चरणों में निविष्ट करके देह त्याग कर सकूँ।" जब भक्ति विषयक प्रश्न हुआ था, तब उत्तर भी तदनुरूप न होने से प्रश्न ही व्यर्थ होता। अतएव भा० १२।५।१ उपसंहार वाक्य के द्वारा सुष्ठु प्रतिपादन हुआ है कि-

"अत्रानुवर्ण्यतेऽभीक्ष्णं विश्वात्माभगवान् हरिः।
यस्य प्रसादजो ब्रह्मा रुद्रः क्रोधसमुद्भवः॥"

टीका—एतत् पुराणं श्रृण्वन्नभयं प्राप्नोतीत्यभिप्रेत्य पुराणार्थमनुस्मारयति, अत्रेति, अयं भावः। जगतः कर्त्ता ब्रह्मापि यस्य प्रसादजः। प्रसादोऽत्र रजो वृत्तिर्हर्षः। ततो जातत्वात्--परतन्त्रः। सर्व संहर्त्ता रुद्रश्च यस्य क्रोध सम्भवो न तु स्वतन्त्रः। स विश्वस्यात्मा नियन्ता भगवान् अत्रानुवर्ण्यते। अत एवम्भूतं भागवतं शृण्वतः कुतोऽन्यस्माद् भयशङ्केति॥

"अत्रानुवर्ण्यतेऽभीक्ष्णम्" इत्याद्यनुसारेणापि साध्वेव स्थापितम् "संसारसिन्धुमतिदुस्तरम्" इत्यादि ।। श्रीशुकः ।।

८७ । श्रीसूतोपदेशान्तेऽपि पञ्चभिः (भा० १२।१२।५३)—

(८७) "नैष्कर्म्म्यमप्यच्युतभाववर्जितं, न शोभते ज्ञानमलं निरञ्जनम् ।
कुतः पुनः शश्वदभद्रमीश्वरे, न चार्पितं कर्म्म यदप्यकारणम् ।।"१५४।।

टीका च—"इदानीं ज्ञानकर्मादरादपि भगवत्कीर्त्तनादिष्वेवादरः कर्त्तव्य इत्याह— नैष्कर्म्म्यं ब्रह्म, तत्प्रकाशकं यज्ज्ञानम्, यतो निरञ्जनमुपाधिनिवर्त्तकं तदप्यच्युतभक्तिवर्जितं

---

अतएव भा० १२।४।४० उपसंहार वाक्य में सुन्दर वर्णित है कि—
"संसारसिन्धुमतिदुस्तर मुत्तितोर्षोर्नान्यप्लवोभगवतः पुरुषोत्तमस्य ।
लीलाकथा रसनिषेवण मन्तरेण पुंसोभवेद्विविध दुःखदवार्द्दितस्य ।।"

श्रीहरि की लीलाकथा का श्रवण व्यतीत संसार सिन्धु उत्तरण के अपर कोई भी उपाय है ही नहीं । प्रवक्ता श्रीशुक हैं—८६)

(भा० १२।१२।५३) में उक्त है—

(८७) "नैष्कर्म्म्यमप्यच्युतभाववर्जितं, न शोभते ज्ञानमलं निरञ्जनम् ।
कुतः पुनः शश्वदभद्रमीश्वरे, न चार्पितं कर्म्म यदप्यकारणम् ।।"१५४।।

टीका—इदानीं ज्ञान कर्मादरादपि भगवत् कीर्त्तनादिष्वादरं कर्त्तव्य इत्याह—त्रिभिः, नैकर्म्यं ब्रह्म, तत् प्रकाशकं--यज्ज्ञानं, यतो निरञ्जनं उपाधि निवर्त्तकं, तदपि अच्युत भक्ति वर्जितं चेत् न शोभते ना परोक्ष पर्य्यन्तं भवतीत्यर्थः ईश्वरे न चेदर्पितं तर्हि यदनुत्तमं सर्वोत्तममपि कर्म तदपि पुनः कुतः शोभते । अतः शश्वत् साधन काले, फल काले च अभद्रं दुःखात्मकम् ।

श्रीशौनकादि ऋषि वृन्द के निकट विविध उपदेश करने के पश्चात् श्रीसूत, वेद व्यास के प्रति देवर्षि नारद कर्त्तृक उपदिष्ट वचनों के द्वारा उपसंहार कर रहे हैं।

उक्त उपदिष्ट पाँच श्लोकों में श्रीभगवद् भक्ति की अवश्यकर्त्तव्यता सुव्यक्त हुई है । हे शौनक ! निष्कर्मतारूप ब्रह्म प्रकाशक रूप जो अज्ञान है, वह ज्ञान, यदि निरुपाधि अवस्थापन्न होकर भी भक्ति शून्य होता है तो, वह ज्ञान, कतिशय शोभित नहीं होता है । अर्थात् अपरोक्ष ज्ञान का साधक नहीं होता है । अतएव जो कर्म, साधन एवं साध्य, उभय काल में ही दुःखद एवं अमङ्गल स्वरूप है, वह कर्म यदि निष्काम भाव से अनुष्ठित होकर भगवदर्पित नहीं होता है, तो वह कर्म— चित्त शोधन करने में अक्षम ही होगा, इस विषय में कहना ही क्या है ?

अर्थात् निष्काम भाव से अनुष्ठित कर्म भी यदि श्रीभगवान् में अर्पित नहीं होता है, तो, उक्त निष्काम कर्म अनुष्ठान से ऐहिक एवं पारलौकिक सुख भोग तुच्छ बुद्धि रूप चित्त शुद्धि नहीं हो सकती है । और सकाम कर्म, यदि भगवान् में अर्पित नहीं होता है तो, उस कर्म अनुष्ठान मङ्गलमय फल लाभ नहीं होगा, उस विषय में वक्तव्य ही क्या है ? स्वामिपाद कृत टीका की व्याख्या करते हैं— सम्प्रति ज्ञान एवं कर्म के प्रति आदर होने पर भी श्रीभगवत् भक्ति रूप कीर्त्तनादि में ही आदर करना कर्त्तव्य है । उस को कहते हैं । नैष्कर्म्म्य, निष्कर्मता रूप ब्रह्म प्रकाशक जो ज्ञान, कारण, यह ज्ञान, निरञ्जन अवस्था प्राप्त है, अर्थात् ज्ञान, ज्ञाता, एवं ज्ञेय—उपाधित्रय का निवर्त्तक है । अतएव एतादृश ज्ञान में ब्रह्म स्वरूप आविर्भाव

चेत्, न शोभते, नापरोक्षपर्य्यन्तं भवतीत्यर्थः" इत्यादिका ॥

८८ तथा (भा० १२।१२।५४)—

(८८) "यशः श्रिय मेव परिश्रमः परो, वर्णाश्रमाचारतपःश्रुतादिषु ।
अविस्मृतिः श्रीधरपादपद्मयो-र्गुणानुवाद-श्रवणादिभिर्हरेः ॥"१५५॥

टीका च—"किञ्च, वर्णाश्रमाचारादिषु यः परो महान् परिश्रमः, स यशोयुक्तानां श्रियामेव कीर्त्तौ सम्पदि वा केवलम्, न परमपुरुषार्थ इत्यर्थः । गुणानुवादादिभिस्तु श्रीधर-पादपद्मयोरविस्मृतिर्भवति" इत्येषा ॥

८९ । तथा (भा० १२।१२।५५)—

(८९) "अविस्मृतिः कृष्णपदारविन्दयोः क्षिणोत्यभद्राणि च शं तनोति ।
सत्त्वस्य शुद्धिं परमाञ्च भक्तिं, ज्ञानञ्च विज्ञानविरागयुक्तम् ॥"१५६॥

---

कराने की, योग्यता है, किन्तु वह ज्ञान भी यदि अच्युत भक्ति शून्य होता है, तो वह शोभित नहीं होता है । अर्थात्—अपरोक्षानुभूति सम्पादक नहीं होता है । टीकाका तात्पर्य्य यह ही है ।८७॥

८८ । अनन्तर भा० १२।१२।५४ में श्रीहरि कीर्त्तन की अवश्य कर्त्तव्यता का वर्णन करते हैं—

(८८) "यश श्रिय मेव परिश्रमः परो, वर्णाश्रमाचारतपःश्रुतादिषु ।
अविस्मृतिः श्रीधरपादपद्मयो,-र्गुणानुवाद-श्रवणादिभिर्हरेः ॥"१५५॥

टीका—किञ्च वर्णाश्रमाचारादिषु यः परो महान् परिश्रमः स यशोयुक्तायां श्रियामेव । कीर्त्ति-सम्पत्तिश्च केवलं परः पुरुषार्थ इत्यर्थः । गुणानुवादादिभिस्तु श्रीधर पादपद्मयोरविस्मृति र्भवति ॥

हे शौनक ! वण एवं आश्रमोचित आचार, ऐवं तपस्या तथा अध्ययनादि कर्म में जो महान् परिश्रम है, उस परिश्रम से केवल यशः एवं सम्पत् प्रभृति की प्राप्ति होती है । किन्तु उसके द्वारा आत्यन्तिक दुःख त्रय निवृत्ति एवं परमानन्द प्राप्ति रूप परम पुरुषार्थ लाभ नहीं होता है । श्रीहरि गुणानुवाद श्रवण कीर्त्तन प्रभृति के द्वारा श्रीधर पादपद्म युगल की अविस्मृतिरूप परम पुरुषार्थ लाभ होता है ।

उक्त श्लोक में श्रीधर स्वामिकृत व्याख्या का अभिप्राय यह है,—हे शौनक ! और भी कहता हूँ, वर्ण एवं आश्रमोचित आचारादि प्रति पालन करने में जो महीयान् परिश्रम होता है, वह केवल, निज सुयशः एवं सम्पत्ति प्राप्तिका कारण ही होता है किन्तु परम पुरुषार्थ प्राप्ति का हेतु नहीं होता है ।

श्रीहरि का गुणानुवाद श्रवण कीर्त्तन प्रभृति के द्वारा किन्तु श्रीधर पादपद्म युगल में अविस्मृति होती है । तात्पर्य्य यह है कि—अखण्ड आनन्द मूर्त्ति स्वरूप परम पुरुषार्थ है । श्रीहरि कथा श्रवण कीर्त्तनादि के द्वारा श्रीधर पाद पद्म की अनवरतः स्मृति रूप परम पुरुषार्थ प्राप्ति होती है । अतएव अपर किसी प्रकार साधन के प्रति महत्त्व स्थापन न करके श्रीहरि कथा श्रवण कीर्त्तनादि में श्रद्धा करनी चाहिये ।८८॥

८९ । भा० १२।१२।५६ श्लोक के द्वारा श्रीकृष्ण चरण कमल स्मृति की विशेष महिमा का कीर्त्तन करते हैं ।

(८९) "अविस्मृतिः कृष्णपदारविन्दयोः, क्षिणोत्यभद्राणि च शं तनोति ।
सत्त्वस्य शुद्धिं परमाञ्च भक्तिं, ज्ञानञ्च विज्ञानविरागयुक्तम् ॥"१५६॥

स्पष्टम् ॥

९० । तथा (भा० १२।१२।५६) —

(९०) "यूयं द्विजाग्र्या वत भुरिभागा, यत् शश्वदात्मन्यखिलात्मभूतम् ।
नारायणं देवमदेवमीश,--मजस्रभावा भजताविवेश्य ॥" १५७॥

टीका च — "तदेवं श्रोतृ नात्मानञ्चाभिनन्दन्नाह— यूयमिति द्वाभ्याम् । हे द्विजाग्र्याः, यद् यस्मादात्मन्यन्तःकरणे श्रीनारायणमाविवेश्य शश्वद्भजत, सम्भावनायां लोट्, अतो भुरिभागा बहुपुण्याः । कथम्भूतम् ? अखिलात्मभुतं सर्वान्तर्यामिनम्, अतएव देवं सर्वोपास्यम् अदेवं न देवोऽन्यो यस्य तम् । कुतः ? ईशम्, यद्वा, यस्माद्यूयं भुरिभागास्तपआदिना सम्पन्नास्ततो नारायणं भजतेति विधिः" इत्येषा । अत्र तपआदिसम्पत्तेः सार्थकत्वं नारायण भजनेनैव भवतीति स्वाम्यभिप्रायः ॥

९१ । तथा (भा० १२।१२।७५)—

---

टीका—ततः किमत आह—अविस्मृतिरिति क्षिणोति-नाशयति ।

हे शौनक ! अनवरतः श्रीकृष्णचरणारविन्द युगल की स्मृति, निखिल अमङ्गलराशि को विदूरित करती है । यहाँतक कि—समस्त अमङ्गल की मूल जननी जो भगवद् विमुखता है, उसकी निवृत्ति भी उस से होती है । एवं श्रीकृष्ण चरणारविन्द का अतुलनीय माधुर्य्यारिव द का विस्तार भी उक्त स्मृति करती है । ऐहिक-पारलौकिक सुख भोग के प्रति वितृष्णा की कथा दूर है, मुक्ति के प्रति भी अन दर बुद्धि उत्पन्न करती है । तत् पश्चात् श्रीकृष्णचरणारविन्द में परम आवेश मयी परा भक्ति का आविर्भाव कराती है । एवं अनुभव पूर्ण परोक्ष ज्ञान, तथा विषय वैराग्य भी उत्पन्न करादेती है ।८९।

९० । अनन्तर भा० १२।१२।५६ में

(९०) "यूयं द्विजाग्र्या वत भुरिभागा , यत् शश्वदात्मन्यखिलात्मभूतम् ।
नारायणं देवमदेवमीश,—मजस्रभावा भजताविवेश्य ॥" १५७॥

श्रोतृवृन्द को अभिनन्दित करते हुये कहते हैं—आप सब प्रचुरतर भाग्यवान् हैं, अर्थात् तपस्या प्रभृति के द्वारा परिपूर्ण हैं, अतएव श्रीनारायण का भजन आप सब करें । यहाँपर मूल श्लोक में लिखित (भजत) क्रिया पद का प्रयोग विधिलिङ्ग अर्थ में हुआ है । टीकाकार का कथनाभिप्राय यह है कि— तपस्या प्रभृति सम्पत्ति की यथार्थं सफलता श्रीनारायण भजन से ही होती है । यदि तपस्या ज्ञान वैराग्यादि सम्पत्ति युक्त होकर भी श्रीनारायण का भजन नहीं करते हैं तो उक्त सम्पत्ति समूह माया बन्धन निवृत्ति का कारण नहीं होते हैं, अतएव वे सब विफल होते हैं । हे द्विज वृन्द ! आप सब के सहित प्रसङ्ग होने से मैं भी धन्य हो गया हूँ, कारण, पहले जिस समय महाराज परीक्षित् प्रायोपवेशन किये थे, उस समय जिस सभा में ऋषिकुल मुकुटमणि श्रीशुकदेव के मुखारविन्द से विगलित जिस आत्म तत्त्व का श्रवण, महात्मा गण, कर रहे थे, मैं भी वहाँ पर उस प्रसङ्ग का श्रवण किया था । सम्प्रति आप सब के सहित कथा प्रसङ्ग होने पर श्रीनारायण के प्रति मेरा हृदय अत्यन्त उत्कण्ठित हुआ है ।।९०।।

९१ । कारण, श्रीनारायण ही, निखिल पदार्थों का आश्रय स्वरूप आत्म तत्त्व है । यह आत्मतत्त्व श्रीनारायण के प्रति उत्कण्ठा उद्बोधन का एकमात्र कारण ही है, आप सब के सहित श्रीभगवत् कथा प्रसङ्ग ।

(९१) "अहञ्च संस्मारित आत्मतत्त्वं, श्रुतं पुरा मे परमर्षिवक्त्रात् ।
प्रायोपवेशे नृपतेः परीक्षितः, सदस्यृषीणां महताञ्च शृण्वताम् ॥"१५८॥

एतत्प्रसङ्गेनाहञ्चात्मतत्त्वमखिलात्मभूतं श्रीनारायणं स्मारितः, सम्प्रति परमोत्कण्ठितीकृतोऽस्मीत्यर्थः । यदात्मतत्त्वं मे मया महर्षिमुखात् श्रुतम् ॥ श्रीसूतः

९२ । तदेवमस्मिन् श्रीमति महापुराणे गुरुशिष्यभावेन प्रवृत्तानामुपदेशशिक्षावाक्येषु भक्तेरेवाभिधेयत्वं साधितम् । तथा (भा० १।१६।६)—

"तत् कथ्यतां महाभाग यदि कृष्ण कथाश्रम ।
अथवास्य पदाम्भोज-मकरन्दलिहां सताम् ॥"१५९॥

इत्यनुसारेण सर्वेषामितिहासानामपि तन्मात्र-तात्पर्य्यत्वं ज्ञेयम् । विस्तरभिया तु न विव्रियते । अथान्यत्र च तदेव दृश्यते । तत्रान्वयेन यथा (भा० ६।३।२२)—

---

(९१) "अहञ्च संस्मारित आत्मतत्त्वं, श्रुतं पुरा मे परमर्षिवक्त्रात् ।
प्रायोपवेशे नृपतेः परीक्षितः, सदस्यृषीणां महताञ्च शृण्वताम् ॥"१५८॥

भा० ११।१२।५३ 'नैष्कर्म्यमप्यच्युत भाव वर्जितं" श्लोक से आरम्भ कर 'अहञ्च संस्मारित आत्म तत्त्वं" पर्य्यन्त पाँच श्लोक का कथन श्रीसूत, श्रीशौनकादि ऋषि वृन्द के निकट किये थे ॥९१॥

९२ । परम सुन्दर श्रीमद्भागवत महापुराण में गुरु शिष्य भाव से जो जो कथा प्रसङ्ग हुये हैं, उन में गुरुभाव से जो उपदेश हुआ है, एवं शिष्य भाव से जो शिक्षा गृहीत हुआ है, उन समुदय वाक्य में ही एकान्त कर्त्तव्यता, श्रीभगवद् भक्ति की ही सुनिश्चित रूप से स्थापित हुई है । अन्य कथा प्रसङ्ग में भी भगवद् भक्ति की एकान्त कर्त्तव्यता निरुपित है ।

भा२ १।१६।६ में उक्त है --

"तत् कथ्यतां महाभाग यदि कृष्ण कथाश्रयम् ।
अथवास्य पदाम्भोज-मकरन्दलिहां सताम् ॥"१५९॥

टीका—अस्य विष्णोः पदाम्भोजयो र्यो मकरन्द स्तं लिहन्ति आस्वादयन्ति ये तेषां सतां महतां वा कथाश्रयमिति समासान्निष्कृष्यानुषङ्गः । तर्हि कथ्यताम् ।

हे शौनकादि ऋषिवृन्द श्रीसूत के समीप में श्रीहरि कथा वर्णन करने के निमित्त जो निवेदन किये थे उस का विवरण यह है, हे महाभाग ! आप उस प्रसङ्ग का वर्णन करें । अर्थात् परीक्षित् महाराज दिग् विजय करने के समय कलि निग्रह किये थे, उस कथा प्रसङ्ग में यदि श्रीकृष्ण का प्रसङ्ग हो, अथवा श्री कृष्ण चरणारविन्दमकरन्द आस्वादन कारी भक्तवृन्द का प्रसङ्ग हो तो उसका वर्णन आप करें ।

किन्तु यदि उक्त कलिनिग्रह प्रसङ्ग में श्रीभगवान् का अथवा उनके भक्तवृन्द का प्रसङ्ग--न हो तो उसका वर्णन आप न करें । इस प्रकार प्रार्थना के अनुसार समझना होगा कि—श्रीमद् भागवत में वर्णित समस्त इतिहास प्रकरणों का मुख्य तात्पर्य्य,--भगवान् एवं तदीय जनगण का चरित्र वर्णन में ही है । अर्थात् श्रीमद् भागवत के इतिहास प्रसङ्ग में भी श्रीभगवान् एवं तदीय भक्तजन के प्रसङ्ग व्यतीत साधारण काव्य के समान विफल विरस प्रसङ्ग का वर्णन नहीं हुआ है । प्रत्येक इतिहास वर्णन प्रसङ्ग में जो भगवान् एवं भक्त जन का चरित्र वर्णन करना ही मुख्य तात्पर्य्य है, उस का विस्तार–ग्रन्थ बाहुल्य के भय से नहीं

(९२) "एतावानेव लोकेऽस्मिन् पुंसां धर्म्मः परः स्मृतः ।
भक्तियोगो भगवति तन्नामग्रहणादिभिः ।।"१६०।।

पुंसां जीवमात्राणां परो धर्म्मः सार्वभौमो धर्म्म एतावान् स्मृतः, नैतदधिकः । एतावन्त्व-मेवाह,--तन्नाम ग्रहणादिभिर्यो भक्तियोगः साक्षाद्भक्तिरिति । एव-कारेणान्यव्यावृत्तत्वं स्पष्टयति--भगवतीति । नामग्रहणादीन्यपि यदि कर्म्मादौ तत्साद्‌गुण्याद्यर्थं प्रयुज्यन्ते, तदा तस्य परत्वं नास्ति, तुच्छफलार्थं प्रयुक्तत्वेन तदपराधादित्यर्थः । तथैव क्षयिष्णुफलदातृत्वञ्च भवतीति भावः ।। श्रीयमः स्वभटान् ।।

---

किया गया है । एतद्भिन्न—अर्थात् श्रीसूत शौनक संवाद भिन्न अन्यसंवाद में भी भक्ति की अवश्य कर्त्तव्यता का वर्णन दृष्ट होता है । तन्मध्ये अन्वय मुख से अर्थात् अवश्य कर्त्तव्यता मुख से भा० ६।३।२२ में श्रीयमराज, निज भृत्यवृन्द के प्रति भी भक्ति योग की ही अवश्य कर्त्तव्यता का उपदेश दिये थे ।

(९२) "एतावानेव लोकेऽस्मिन् पुंसां धर्म्मः परः स्मृतः ।
भक्तियोगो भगवति तन्नामग्रहणादिभिः ।।" १६।।

हे भृत्य वृन्द ! इस जगत् में मानव मात्र का एकमात्र परम धर्म, यह ही शास्त्र में वर्णित है–कि, श्रीभगवान् के नाम श्रवण कीर्त्तन प्रभृति के द्वारा श्रीहरि में भक्ति करना । इस से भक्ति योग की अवश्य कर्त्तव्यता सुष्ठु प्रदर्शित हुई है । पुरुष समूह का परम धर्म भक्ति योग है, अर्थात् जीव मात्र का परमधर्म--सार्वभौम धर्म भक्ति योग ही है, यह सर्व शास्त्र सम्मत है, इस से अधिक धर्म और कुछ भी नहीं हो सकता है, वह सार्वभौम धर्म है क्या ? अर्थात् जिस धर्म में समस्त जीवों का समान अधिकार है, वह किस प्रकार है ? उसका वर्णन करते हैं, – उक्त श्रीहरि के नाम ग्रहण प्रभृति के द्वारा श्रीहरि में भक्ति योग प्राप्त करना अर्थात् श्रीहरि नाम प्रभृति ग्रहण के द्वारा साक्षात् भक्ति योग का अनुष्ठान करना ।

तात् पर्य्य यह है कि--जो भी मानव, जो कुछ भी धर्मानुष्ठान क्यों न करें, उस धर्मानुष्ठान के समय श्रीभगवत् प्राप्ति के निमित्त यदि जीवन में व्याकुलता नहीं आती है तो वह धर्मानुष्ठान पण्डश्रम में पर्य्यवसित होता है । मूल श्लोक में "एतावानेव" 'एव' कारका उल्लेख होने के कारण-अपर साधनों का व्यावृत्ति—निरास सुस्पष्ट रूप से हुआ है । मूल श्लोक में 'भगवति" पद का भी प्रयोग है । उस से प्रतीति होती है कि---कर्म, ज्ञान, योगादि साधन की सफलता सम्पादन के निमित्त यदि श्रीभगवन्नाम कीर्त्तन प्रभृति का अनुष्ठान होता है तो, उस नाम कीर्त्तनादि के द्वारा जो भक्ति अनुष्ठित होती है, उसकी श्रेष्ठता नहीं है । कारण, भक्ति योग, अन्यनिरपेक्ष है, कर्म ज्ञानादि साधन का भोग मोक्ष रूप फल अति तुच्छ है, उस तुच्छ फल सम्पादन हेतु भक्ति योग प्रयुक्त होने से भक्ति योग के निकट अपराध ही होता है । अर्थात् उक्त अनुष्ठित भक्ति योग से नामापराध ही होता है, एवं उक्त रीति से नाम कीर्त्तन से विनाश शीलता प्रशस्त होती है । श्रीहरि चरणों में प्रीति लाभ उक्त अनुष्ठान नहीं होता है, नश्वर भौतिक पदार्थों में अत्यधिक आसक्ति बढ़ती है । कारण, अन्यसाधन के सहित मिश्रित करके श्रीनामादि कीर्त्तन करने से उक्त श्रवण कीर्त्तनादि रूप भक्ति योग--उस साधक के प्रति अप्रसन्न होता है । सुतरां साक्षात् भक्तियोग का जो मुख्य फल—श्रीकृष्ण चरणों में प्रीति लाभ है, उस से वह साधक सम्पूर्ण वञ्चित हो जाता है । उक्त अभिप्राय को प्रकट करने के निमित्त ही मूल श्लोक में 'भगवति' पद का उल्लेख हुआ है ।

श्रीयमराज—निज भक्त वृन्द को कहे थे ।।९२।।

६३ । तथा (भा० ६।१।१७)—

(६३) "सध्रीचीनो ह्ययं लोके पन्थाः क्षेमोऽकुतोभयः ।
सुशीलाः साधवो यत्र नारायण-परायणाः ॥"१६१॥

अयं पन्थाः श्रीनारायणभक्तिमार्गः ॥ श्रीशुकः ॥

६४ । तत्रैवान्वयेन सर्वशास्त्रश्रवणफलत्वं सकैमुत्यमाह (भा० ३।१३।४)—

(६४) "श्रुतस्य पुंसां सुचिरश्रमस्य, नन्वञ्जसा सूरिभिरीड़ितोऽर्थः ।
तत्तद्गुणानुश्रवणं मुकुन्द,-पादारविन्दं हृदयेषु येषाम् ॥"१६२॥

पुंसां श्रुतस्य वेदार्थविगतेरयमेवार्थः प्रयोजनम्, ईड़ितः श्लाघितः । कोऽसौ ? मुकुन्दस्य

---

६३ । साक्षात् भक्ति योग की अवश्य कर्त्तव्यता भा० ६।१।१७ श्लोक में श्रीशुकदेव श्रीपरीक्षित् महाराज को कहे थे ।

(६३) "सध्रीचीनो ह्ययं लोके पन्थाः क्षेमोऽकुतोभयः ।
सुशीलाः साधवो यत्र नारायण-परायणाः ॥"१६१॥

टीका— अत्र हेतुः, सध्रीचीनः समीचीनः, अयं पन्था भक्तिमार्गः । यतः क्षेमः । क्षेमत्वे हेतुः, न कुतश्चिद् विघ्नादेर्भयं यस्मिन् । तदेवाह— सुशीलाः--कृपालवः, साधवो निष्कामाः यत्र यस्मिन् मार्गे । अतो न ज्ञान मार्ग इव असहायता निमित्तं भयं, नापि कर्म मार्गवत् मत्सरादि युक्तेभ्यो भयमितिभावः ॥

हे राजन् । श्रीनारायण के भक्ति योग के प्रभाव से महा पापीवृन्द भी परम पवित्र होते हैं, कारण, भक्तिमार्ग, अति समीचीन, अर्थात् अति सुन्दर एवं अति पवित्र है, भक्ति मार्ग ही अतिक्षेम एवं मङ्गलमय है, जो लोक भक्तिमार्ग को अवलम्बन करते हैं, उनको विघ्न से अभिभूत नहीं होना पड़ता है, कारण, भक्तिमार्ग में विचरणकारी व्यक्ति गण, परम कृपालु निष्काम एवं एकमात्र श्रीनारायण परायण होते हैं । अतएव, ज्ञानमार्ग में जिस प्रकार असहायता दोष है, कर्म मार्ग में जिस प्रकार परश्रीकातरता दोष हैं, भक्ति मार्ग में उक्त दोष नहीं है । तात्पर्य्य यह है कि—ज्ञान मार्ग में "मैं ईश्वर हूँ अथवा ब्रह्म हूँ" इस प्रकार अभेद भावना होती है, अतः ज्ञानी का स्खलन पतन में ईश्वर सहायक नहीं होते हैं । भक्तिमार्ग में साधक अपने को श्रीहरि दास मानते हैं, एवं श्रीहरि को निज प्रभु मानते हैं, श्रीहरि का अनुग्रह ही साधक का एकमात्र जीवातु होता है, तज्जन्य भक्ति मार्ग स्थित भक्त वृन्द के प्रति श्रीहरि एवं तदीय भक्त वृन्द की सर्वदा अत्यधिक अनुकम्पा होती रहती है । कर्म मार्ग में कर्म्मिगण, पर श्री कातर होते हैं, अतएव अपर कर्मिगण--उन्नति के बाधक होते हैं । भक्ति पथ में निज स्वार्थ के प्रति दृष्टि नहीं रहती है । श्रीहरि की परिचर्य्या ही लक्ष्य होती है, अतः भक्त एवं भगवान् भक्तिमार्गावलम्बन कारी के प्रति सर्वदा करुणामयी दृष्टि निःक्षेप करते रहते हैं । उक्त कारण समूह से ही भक्ति मार्ग--सर्वथा अकुतोभय--मङ्गल स्वरूप है । मूल श्लोकस्थ—"अयं पन्थाः" पद का अर्थ श्रीनारायण भक्ति मार्ग है ।

श्रीशुक—परीक्षित् को कहे थे ॥६३॥

६४ । भा० ३।१३।४ में अन्वय मुख से निखिल शास्त्राध्ययन के मुख्य फल रूप में भक्ति की ही अवश्य कर्त्तव्यता कैमुत्यिक न्याय से वर्णित है ।

(६४) 'श्रुतस्य पुंसां सुचिरश्रमस्य, नन्वञ्जसा सूरिभिरीड़ितोऽर्थः ।
तत्तद्गुणानुश्रवणं मुकुन्द, पादारविन्दं हृदयेषु येषाम् ॥'१६२॥

टीका—अतस्तस्य चरितं श्रोतव्यमित्याह । सुचिरं श्रमो यस्मिन् तस्य पुंसां श्रुतस्य अञ्जसा

पादारविन्दं येषां हृदयेषु वर्त्तते, तेषां तत्तद्गुणानां भगवद्भक्त्यात्मकानामनुश्रवणं यत् सोऽर्थमिति । ततः सुतरामेव श्रीमुकुन्दस्येत्यर्थः । एवमेवोक्तम् (भा० १।२।२८) "वासुदेवपरा वेदाः" इत्यादि, (भा० २।२।३४) "भगवान् ब्रह्म कार्त्स्न्येन" इत्यादि । तथा च पाद्म-बृहत्-सहस्रनाम्नि—

"स्मर्त्तव्यः सततं विष्णुर्विस्मर्त्तव्यो न जातुचित् । सर्वे विधिनिषेधाः स्युरेतयोरेव किङ्कराः ॥"१६३॥

तथा च स्कान्दे प्रभासखण्डे; लिङ्गपुराणे च–

"आलोडच सर्वशास्त्राणि विचार्य्य च पुनः पुनः । इदमेव सुनिष्पन्नं ध्येयो नारायणः सदा ॥१६४॥

---

मुख्यत्वेन अयमेवार्थ ईड़ितः स्तुतः । ननु मुकुन्द पादारविन्दं येषां येषां हृदयेष्वस्ति तेषां तेषां भागवतानां गुणानुश्रवणमिति यत् ॥

---

सुदीर्घ काल व्यापी श्रमसाध्यन वेदार्थ ज्ञान का यह ही फल है, जिसकी प्रशंसा उच्चैःस्वर से समस्त विद्वज्जनों ने किया है । वह मुख्य फल क्या है ? कहते हैं—जिनके हृदय में अनवरत श्रीभगवच्चरनारविन्द विराजमान है, उन सब महापुरुष वृन्द के मुखचन्द्र विनिःसृत श्रीहरि की गुण कथा श्रवण करना । अर्थात् श्रीहरि में जात रति भक्त जन के मुख से श्रीहरि कथा श्रवण करना ही निखिल वेद एवं वेदानुगत शास्त्राध्ययन का मुख्य फल है ।

श्रीगोस्वामि चरण कृत उक्त श्लोक की व्याख्या—पुरुष मात्र का वेद तात्पर्य्य बोध का यह ही मुख्य फल है, जिसकी प्रशंसा साधुजनों ने मुक्त कण्ठ से की है । वह फल, क्या है ? कहते हैं । जिन के हृदयों में मुकुन्द चरण विद्यमान है । उनसब महापुरुष भक्त वृन्द के मुख से श्रीकृष्णगुणावली का अनवरत जो श्रवण है, वह ही वेदादि शास्त्र अध्ययन का मुख्य फल है, साधुवृन्द उसकी भूयोभूयः प्रशंसा करते रहते हैं ।

अतएव भक्त जन वृन्द के समीप से श्रीकृष्ण गुण कथा श्रवण को ही साधुवृन्द, अवश्य कर्त्तव्यतारूप में साधु वाद प्रदान करते हैं । ऐसा होनेपर श्रीमुकुन्द के गुण कथा श्रवण ही वेदादि निखिल शास्त्राध्ययन का मुख्य फल रूप में जो उद्घोषित हुआ है, इस के सम्बन्ध में अधिक कहने की आवश्यकता ही क्या है ?

"श्रुतस्य पुंसां सुचिरश्रमस्य, नन्वञ्जसा सुरिभिरीड़ितोऽर्थः"

श्लोक का तात्पर्य्य इस प्रकार ही जानना होगा । इस अभिप्राय से ही भा० १।२।२८ में "वासुदेव परावेदाः" इत्यादि एवं भा० २।२।३४ में "भगवान् ब्रह्म कार्त्स्न्येन" इत्यादि श्लोकों का कथन हुआ है । अतः श्रीभगवद् भक्ति की ही अवश्य कर्त्तव्यता का वर्णन, पद्म पुराण के बृहत् सहस्रनामस्त्रोत्र में अन्वय व्यतिरेक मुख से स्पष्टतः हुआ है ।

"स्मर्त्तव्यः सततं विष्णु र्विस्मर्त्तव्यो न जातुचित् ।
सर्वे विधि निषेधाः स्युरेतयोरेव किङ्कराः ॥"

सर्वदा श्रीविष्णु का स्मरण करना कर्त्तव्य है, कभी भी उनको भूलना नहीं चाहिये । शास्त्र के निखिल कर्त्तव्य उपदेश, सतत श्रीविष्णु स्मरण रूप कर्त्तव्य विधि के अनुगत किङ्कर हैं । एवं शास्त्र के निखिल निषेध, अर्थात् अकर्त्तव्य उपदेश, श्रीविष्णु विस्मरण रूप निषेध विधि के अनुगत किङ्कर है ।

जिस प्रकार उक्त स्थल में अन्वय एवं विधि मुख से श्रीहरि भक्ति की अवश्य कर्त्तव्यता विहित हुई उस प्रकार ही स्कन्द पुराण के प्रभाष खण्ड में एवं लिङ्ग पुराण में अन्वय मुख से श्रीविष्णु भक्ति की ही अवश्य कर्त्तव्यता उपदिष्ट हुई है ।

अतएव वेदार्पणमन्त्रः–

"इति विद्यातपोयोनिरयोनिविष्णुरीड़ितः। ब्रह्मज्ञस्तपते देवः प्रीयतां मे जनार्द्दनः॥"१६५॥

श्रीविदुरः॥

९५। यतो यश्च शास्त्रे वर्णाश्रमाचारो विधीयते; तस्याप्यनुपम-चरितं फलं भक्तिरेव, यथा (भा० १०।४७।२४)–

(९५) "दान-व्रत-तपो-होम-जप-स्वाध्याय-संयमैः।
श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते॥"१६६॥

दानादिभिः श्रीकृष्णसन्तोषार्थैरिति ज्ञेयम्। तदुक्तम् (भा० ४।३१।९) "तज्जन्म तानि कर्म्माणि तदायुस्तन्मनो वचः" इत्यादि, वृहन्नारदीये—

---

"आलोड्य सर्वशास्त्राणि विचार्य्य च पुनः पुनः।
इदमेव सुनिष्पन्नं धेयो नारायणः सदा" १६४॥

यह श्लोक उभय पुराण में समान रूप से है। समस्त शास्त्र मन्थन एवं पुनः पुनः विचार करके यही सुसिद्धान्त किया गया है कि—सर्वदा श्रीनारायण का ध्यान करे। अतएव वेद अध्ययन करके उसका अर्पण मन्त्र में भी श्रीविष्णु भक्ति का प्रसङ्ग ही उपलब्ध है।

"इति विद्या तपोयोनिरयोनिविष्णु रीड़ितः।
ब्रह्मज्ञस्तपतेदेवः प्रीयतां मे जनार्द्दनः॥१६५॥

इस प्रकार विद्या एवं तपस्या का उद्गमस्थान श्रीविष्णु हैं, अथच श्रीविष्णु, अयोनि रूप से समस्त शास्त्रों में कीर्त्तित हैं। ब्रह्मज्ञानिवृन्द, जिन श्रीविष्णु की तपस्या करते रहते हैं, उन सर्वाराध्य जनार्दन श्री विष्णु मेरे प्रति प्रसन्न होवें॥

प्रकरण प्रवक्ता श्रीविदुर हैं।९४॥

९५। तज्जन्य शास्त्र में वर्ण एवं आश्रमोचित जो आचरण विहित है, उस आचरण का भी अतुलनीय फल श्रीभगवद् भक्ति ही है, भा० १०।४७।२४ में श्रीउद्धव महाशय व्रजदेवी वृन्दको कहे थे—

(९५) "दान व्रत तपो होम जप स्वाध्याय संयमैः।
श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते॥१६६॥

टीका—श्रेयोभिः—श्रेयः साधनैः।

क्रमसन्दर्भ। (भा० १०।२१।९) "गोप्यः किमाचरद्" इतिवद् भक्तिः श्रवणादि--रुचिः साध्यते॥

हे व्रजदेवीवृन्द! दान, व्रत, तपस्या, होम, जप, स्वाध्याय—निज अधिकारोचित अध्ययन, एवं इन्द्रिय संयम प्रभृति द्वारा एवं जितने भी माङ्गलिक अनुष्ठान हैं, उक्त समस्त साधन समूह का साध्य अर्थात् फल,—श्रीकृष्ण चरणों में भक्ति है।

उक्त श्लोक में दानादि साधनों का जो उल्लेख है, उक्त साधन समूह श्रीकृष्णार्पित होना चाहिये। कारण, जो, दान व्रत तपस्या प्रभृति साधन श्रीकृष्णार्पित नहीं होते हैं, वह सब साधन द्वारा श्रीकृष्ण भक्ति की प्राप्ति नहीं होती है। तज्जन्य ही महर्षि श्रीनारद भा० ४।३१।९ में कहे हैं—

तज्जन्म तानि कर्माणि तदायुस्तन्मोवचः।
नृणां येन हि विश्वात्मा सेव्यते हरिरीश्वरः॥"

"जन्मकोटिसहस्रेषु पुण्यं यैः समुपार्जितम् । तेषां भक्तिर्भवेच्छुद्धा देवदेवे जनार्द्दने ॥"१६७॥ इति ।

**अगस्त्यसंहितायाम्—**

"व्रतोपवासनियमैर्जन्मकोटयाप्यनुष्ठितैः । यज्ञैश्च विविधैः सम्यग्भक्तिर्भवति माधवे ॥१६८॥ इति ।

**एतदेव व्यतिरेकेणोक्तम्** (भा० १।८)--**"धर्म्मः स्वनुष्ठितः पुंसाम्" इत्यादौ,** (भा० १२।१२।५४) **"यशः श्रियामेव" इत्यादौ च ॥ श्रीउद्धवः श्रीव्रजदेवीः ॥**

---

टीका—अहो गृहाप्रसक्तया हरि सेवां विना सर्वं जन्मकर्मादिकं व्यर्थीकृतमिति ताननुशोचन्नाह तज्जन्मेति चतुर्भिः । यतो जन्मादे र्हरि सेवैव फलम् । अतस्तद्विहीनं सर्वं व्यर्थमित्यर्थः ॥

क्रमसन्दर्भ—तत्र तेषां ब्रह्मनिष्ठां त्याजयितुं श्रीभगवन्निष्ठां प्रशंसन्ति--तज्जन्मेति ।

अर्थात् मानववृन्द वह जन्म ही जन्म है, वह कर्म ही यथार्थतः कर्म है, वह जीवन ही यथार्थतः जीवन है, वह मन–वाक्य, यथार्थतः धन्य हैं, जिस जन्म, जिस कर्म, जिस जीवन, जिस मन, एवं जिस वचन के द्वारा श्रीहरि सेवित होते हैं । अतएव इस प्रमाण के द्वारा समझना होगा कि— दान व्रतादि साधन समूह श्रीकृष्णार्पित होने चाहिये ।

वृहन्नारदीय पुराण में लिखित है—

"जन्मकोटि सहस्रेषु पुण्यं यैः समुपार्जितम् ।
तेषां भक्ति र्भवेच्छुद्धा देवदेव जनार्दने ॥१६७॥

समस्त पुण्यों का एकमात्र सर्वश्रेष्ठ फल श्रीभगवद् भक्ति ही है । अर्थात् जिन्होंने सहस्र सहस्र कोटि कोटि जन्म में पुण्योपार्जन किया है, देव देव श्रीजनार्दन में उनकी विशुद्धा भक्ति होती है । अगस्त्य संहिता में भी लिखित है—

"व्रतोपवासनियमै र्जन्म कोटयाप्यनुष्ठितैः ।
यज्ञैश्च विविधैः सम्यग् भक्तिर्भवति माधवे ॥"१६८॥

जिन्होंने कोटि कोटि जन्म के द्वारा व्रत, उपवास, नियम प्रभृति का अनुष्ठान किया है, एवं कोटि कोटि जन्म में यज्ञ समूह का अनुष्ठान किया है, श्रीमाधव के श्रीचरणों में उनकी भक्ति होती है । इस प्रकार भगवद् भक्ति की अवश्य कर्त्तव्यता के विषय में भा० १।२।८ में श्रीसूतने भी व्यतिरेक मुख से कहा है—

"धर्मः स्वनुष्ठितः पुंसां विष्वक् सेनकथासु यः ।
नोत्पादयेद् यदि रतिं श्रमएव हि केवलम् ।"

टीका—व्यतिरेक माह धर्म इति । यो धर्म इति प्रसिद्धः, स यदि विष्वक् सेनस्य कथासु रतिं नोत्पादयेत् तर्हि स्वनुष्ठितोऽपि सन्नयं श्रमज्ञेयः । ननु मोक्षार्थस्यापि धर्मस्य श्रमत्वमस्त्येव अत आह केवलं विफल श्रम इत्यर्थः । नन्वस्ति तत्रापि स्वर्गादि फलमित्याशङ्क्य एव कारेण निराकरोति, क्षयिष्णुत्वान्न तत् फल मित्यर्थः । नन्वक्षय्यं ह वै चातुर्म्मास्य याजिनः सुकृतं भवतीत्यादि श्रुतेर्न तत् फलस्य क्षयिष्णुत्वमित्याशङ्क्य हि शब्देन साधयति । तत् यथेह कर्मजितो लोकः क्षीयते, एवमेरात्र पुण्यजितो लोकः क्षीयत इति तर्कानुगृहीतया श्रुत्या क्षयिष्णुत्व प्रतिपादनात् ।"

सुन्दर रूप से धर्मानुष्ठान करने पर भी यदि उससे श्रीकृष्ण चरणों में प्रीति नहीं होती है तो, वह अनुष्ठान श्रममात्र में पर्य्य वसित होता है । इस प्रकार ही भा० १२।१२।५४ में भी कहा गया है--

"यशः श्रियामेव परिश्रमः परो वर्णाश्रमाचारतपः श्रुतादिषु ।

९६। यच्च तत्र ज्ञानमभिधीयते, तदपि भक्तयन्तर्भूततयैव लभ्यम्, यथा (भा० १०।१४।५)

(९६) "पुरेह भूमन् बहवोऽपि योगिन,-स्त्वदर्पितेहा-निजकर्मलब्धया।
विबुध्य भक्त्यैव कथोपनीतया, प्रपेदिरेऽञ्जोऽच्युत ते गतिं पराम्॥"१६९॥

हे भूमन्, इह लोके पूर्वं बहवो योगिनोऽपि सन्तो योगैर्ज्ञानमप्राप्य पश्चात्त्वयि अर्पिता ईहा लौकिक्यपि चेष्टा तथार्पितानि यानि निजानि कर्म्माणि तैर्लब्धया कथा-रुचिरूपया

---

अविस्मृतिः श्रीधर पाद पद्मयो गुणानुवाद श्रवणादरार्दिभिः॥

श्रीउद्धव---श्रीव्रजदेवीवृन्द को कहे थे ॥९५॥

९६। श्रीमद् भागवत ग्रन्थ के प्रकरण के बीच बीच में जो ज्ञान साधन का उपदेश हुआ है, वह ज्ञान भी भक्ति साधन के अन्तर्भूत करके ही उपदिष्ट हुआ है। अर्थात् विशुद्ध भक्ति का अनुष्ठान न करने से श्रीमद् भागवत में वर्णित विमल ज्ञान को स्वतन्त्र रूप से प्राप्त करने की सम्भावना नहीं है। भा० १२।१४।५ में श्रीब्रह्मा कहे हैं—

(९६) "पुरेह भूमन् बहवोऽपि योगिनस्त्वदर्पितेहा निजकर्मलब्धया।
विबुध्यभक्त्यैव कथोपनीतया, प्रपेदिरेऽञ्जोच्युत ते गतिं पराम्॥"१६९॥

टीका—हे भूमन्! अपरिच्छिन्न! इह लोके पूर्वं योगिनोऽपि सन्तो योगैर्ज्ञानमप्राप्य पश्चात् त्वदर्पितेहाः त्वय्यर्पितेहानिजकर्मलब्धया विबुध्य भक्त्यैव कथोपनीतया प्रपेदिरेऽञ्जोऽच्युत ते गतिं पराम्॥१६९॥

टीका—भक्त्यैव ज्ञानं नान्यथेत्यत्र सदाचारं प्रमाणयति पुरेति। हे भूमन्! अपरिच्छिन्न! इह लोके पूर्वं योगिनोऽपि सन्तो योगै ज्ञानमप्राप्य पश्चात् त्वदर्पितेहाः त्वय्यर्पिता लौकिक्यपि ईहा चेष्टा यै स्तं। निज कर्म लब्धया। त्वदर्पितै निजैः कर्मभिर्लब्धया। त्वय्यर्पिता ईहा निजानि कर्माणि च तै लब्धया इत्येकं पदं वा। कथोपनीतया कथया त्वत् समीपं प्रापितया भक्त्यैव विबुध्य, आत्मानं ज्ञात्वा, अञ्जः सुखेनैव, ते परां गतिं प्राप्ताः।

हे भूमन्! अर्थात् स्वरूप एवं गुणों से सर्वथा परिपूर्ण स्वरूप! इस जगत् में कुछ वस्तु स्वरूप में बृहत् है, जिस प्रकार आकाश, किन्तु गुण-एक मात्र उसमें शब्द है, कुछ वस्तु गुण से पूर्ण होने पर भी स्वरूप में क्षुद्र है, जिस प्रकार पृथिवी में शब्द स्पर्शादि पञ्चगुण होने पर भी स्वरूपतः क्षुद्र है। उस प्रकार पारमार्थिक जगत् में निर्विशेष ब्रह्म स्वरूपतः सर्वथा पूर्ण होने पर भी गुण हीन है, अर्थात् प्राकृत अप्राकृत कुछ भी गुण,--निर्विशेष ब्रह्म में नहीं है।

हे नाथ! तुम जिस प्रकार स्वरूपतः पूर्ण हो, इस प्रकार स्वरूपभूत अप्राकृत गुण राशि से भी परिपूर्ण हो। इस अभिप्राय से ही श्रीब्रह्मा ने श्रीकृष्ण को 'भूमन्! शब्द से सम्बोधन किया। पूर्वकाल में इस जगत में अनेकानेक महात्मा वृन्द योग साधन में प्रवृत्त होकर भी योग साधन के द्वारा ज्ञानलाभ करने में अक्षम हुये थे। पश्चात् तुम को लौकिक वैदिक उभय विध कर्म अर्पण करके निज कर्म्माचरण के द्वारा तुम्हारी कथा में रुचिलक्षणा भक्ति प्राप्त कर पश्चात् तुम्हारी परमा भक्ति प्राप्त कर अतिसुख पूर्वक तुम्हारे सान्निध्यरूप परम गति को प्राप्त किये थे।

स्वामि पाद कृत व्याख्या का तात्पर्य्य—हे भूमन्! इस जगत् में प्राक्तन समय में अनेक महात्मा वृन्द योगी होकर भी बहु विध योग साधन के द्वारा विमल ज्ञान प्राप्त करने में असमर्थ होकर पश्चात् लौकिकी चेष्टा को भी तुम को अर्पण किये थे, तुम को अर्पित निज कर्मवृन्द के फल से तुम्हारी कथा श्रवण में रुचि लक्षणा भक्ति लाभ किये थे। अनन्तर तुम्हारी कथा में रुचिलक्षणा भक्ति लाभ के फल से तुम्हारी

पुनश्च कथोपनीतया कथया तत्समीपं प्रापितया कथनीयरुचिरूपया भक्त्यैव अञ्जः सुखेन विबुध्य आत्मतत्त्वमारभ्य श्रीभगवत्तत्त्वपर्यन्तमनुभूय तव परमान्तरङ्गां गतिं प्राप्ताः। श्रीगीतोपनिषत्सु च ( १०।८ )--"अहं सर्वस्य प्रभवः" इत्यादिभिः शुद्धां भक्तिमुपदिश्याह (गी० १०।११) ---

---

सान्निध्य प्रापिका तुम्हारी रुचिलक्षणा -भक्ति प्राप्ति हुई थी, उक्त भक्ति के फल स्वरूप सुख से आत्म तत्त्व से प्रारम्भ कर श्रीभगवत्तत्त्व का अनुभव कर तुम्हारी परमा अन्तरङ्ग गति को प्राप्त किये थे। यहाँ समझने की बात यह है कि—भगवदर्पित कर्म फल से श्रीभगवत कथा में रुचि होती है, अर्थात् भगवान् में कर्मार्पण करते करते यदि सत्सङ्ग रूप सौभाग्यलाभ होता है। तो, उक्त सौभाग्य से श्रीहरि कथा में रुचि होती है। यदि सत्सङ्ग रूप सौभाग्य लाभ नहीं होता है तो, केवल मात्र भगवदर्पित कर्म के द्वारा श्रीहरि कथा में रुचिका उदय नहीं होता है। श्रीहरि कथा में रुचिलाभ के फल से कथनीय पदार्थ श्रीहरि में रुचिलक्षणा भक्ति का आविर्भाव होता है।

"आदौ श्रद्धा ततः साधुसङ्गोऽथ भजन क्रियाः।
ततोऽनर्थ निवृत्तिः स्यात् ततो निष्ठा ततोरुचिः"

इस लक्षण के अनुसार निष्ठा के पश्चात् रुचि का उदय होता है, श्रीहरि कथा में रुचि रूपा यह प्रथम प्रथम रुचि है, इस प्रकार रुचि होने के पश्चात् ही श्रीहरि में रुचिका उदय होता है। जब तक कथनीय श्रीहरि में रुचि नहीं होती है, तब तक श्रीहरि के निमित्त यथार्थ व्याकुलता जीवन में नहीं आ सकती है। इस प्रसङ्ग में श्रीभगवद् भक्ति के अन्तर्भूत रूप से ही ज्ञान लाभ की कथा कही गई है। अर्थात् भगवद् भक्ति का अनुष्ठान व्यतीत स्वतन्त्र रूप से किसी भी अनुष्ठान के द्वारा स्वरूपावबोधक विमल ज्ञान लाभ की सम्भावना नहीं की जा सकती है।

श्रीमद् भगवद् गीता के त्रयोदश अध्याय में भी उस प्रकार उल्लेख दृष्ट होता है।

"विविक्त देशसेवित्वमरति र्जनसंसदि।
मयि चानन्य योगेन भक्ति रव्यभिचारिणी।
एतज् ज्ञानमिति प्रोक्तमज्ञानं यत् ततोऽन्यथा॥"

इस श्लोक में विशुद्धा भक्ति भिन्न साधन को अज्ञान कहा गया है। गी० १०।८ में भी उक्त है—

"अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते।
इति मत्वा भजन्ते मां बुधाः भावसमन्विताः॥"

टीका—तत्र महैश्वर्य्य लक्षणां विभूतिमाह—,अहं सर्वस्य--प्राकृता प्राकृत वस्तु मात्रस्य प्रभवः, उत्पत्तिप्रादुर्भावयोः—हेतुः। मत्त एवान्तर्य्यामि स्वरूपात् सर्वं जगत् प्रवर्त्तते-चेष्टते, तथा मत्त एव नारदाद्यवतारात्मकत्वात् सर्वं भक्ति ज्ञान तपः कर्मादिकं साधनं तत्तत् साध्यञ्च प्रवृत्ति भवति। ऐकान्तिक-भक्ति लक्षणं योगमाह इति मत्वा, आस्तिक्यतो ज्ञानेन निश्चित्य इत्यर्थः। भावो दास्य सख्यादि स्तद्युक्ताः।

इत्यादि श्लोकों के द्वारा शुद्धाभक्ति का उपदेश प्रदानकर गी० १०।१०।११ में कहते हैं—

"तेषां सततयुक्तानां भजतां प्रीति पूर्वकं।
ददामि बुद्धि योगं तं येन मामुपयान्ति ते॥"

टीका—ननु तुष्यन्ति च रमन्ति चेति त्वदुक्त्या त्वद् भक्तानां भक्त्यैव परमानन्दो गुणातीत इत्यवगतं किन्तु तेषां त्वत् साक्षात् प्राप्तौ कः प्रकारः, स च कुतः सकाशात्तैरवगन्तव्य इत्यपेक्षायामाह—तेषामिति।

"तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ।।"१७०।। इति ।। ब्रह्मा श्रीभगवन्तम् ।।

९७। यान्यन्यानि सर्वाणि तत्र पुरुषार्थ-साधनान्युच्यन्ते, तान्यपि तथैव भक्तिमूलान्येव, यथा (भा० १०।८१।१९)—

(९७) "स्वर्गापवर्गयोः पुंसां रसायां भुवि सम्पदाम् ।
सर्वासामपि सिद्धीनां मूलं त्वच्चरणार्च्चनम् ।।"१७१

(भा० ८।२३।१६) "मन्त्रतस्तन्त्रतश्छिद्रम्" इत्यादि-न्यायेन (भा० ११।५।२) "मुखबाहूरुपादेभ्यः"

---

सतत युक्तानां, नित्यमेव मत् संयोगाकाङ्क्षिणां तं बुद्धि योगं ददामि, तेषांहृदवृत्तिष्वहमेव उद् भावयामीति स बुद्धियोगः स्वतोऽन्यस्माच्च कुतश्चिदप्यधिगन्तुमशक्यः, किन्तु मदेकदेयस्तदेक ग्राह्य इति भावः। मामुपयन्ति--मामुपलम्भन्ते— साक्षान्मन्निकटं प्राप्नुवन्ति ।।१०।।

नित्य भक्ति योग के द्वारा जो प्रीति पूर्वक मेरा भजन करते हैं -मैं उन सब को शुद्ध ज्ञान जनित विमल प्रेम योगदान करता हूँ, वे सब उस के द्वारा मेरापरमानन्द धाम को प्राप्त करते हैं ।

गी० १०।११ "तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ।।"

टीका—"ननु च विद्यादि वृत्ति विना कथं त्वदधिगमः, तस्मात्तैरपितदर्थं यतनीयमेव, तत्र नहीनहीत्याह, तेषामेव, नत्वन्येषां योगिनां, अनुकम्पार्थं, मदनुकम्पा येन प्रकारेण स्यात्तदर्थमित्यर्थः। तैर्मदनुकम्पा प्राप्तौ कापिचिन्ता न कार्य्या,यत, स्तेषां बुद्धिवृत्तौ स्थितः। ज्ञानं मदेकप्रकाश्यत्वान्न सात्विकं, निर्गुणत्वेपि भक्त्युत्थ ज्ञानतोऽपि विलक्षणं यत्तदेव दीपस्तेन। अहमेव नाशयामीति तैः कथं तदर्थं प्रयतनीयम् तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहमिति मदुक्तेस्तेषां व्यावहारिकः पारमार्थिकश्च सर्वोऽपि भारो मया वोढ़ुमङ्गीकृत एवेति भावः। श्रीमद् गीता सर्वसम्भूता भूतापतापहृत्। चतुः श्लोकीयमाख्याता, ख्याता सर्वनिशर्मकृत् ।"

इस प्रकार भक्ति योगानुष्ठान कारियों में अज्ञान नहीं रह सकता है। कतिपय व्यक्ति मानते हैं कि- अतत् निरसन क्रम से तत् वस्तु का अनुसन्धान करने से ही ज्ञानोदय होता है, केवल भक्ति भाव का अनुशीलन करने से उक्त दुर्ल्लभ ज्ञान लाभ कैसे हो सकता है ? उत्तर में कहते हैं-हे अर्जुन ! निज बुद्धि का अनुशीलन क्रम से क्षुद्रजीव असीम सत्यवस्तु का ज्ञान लाभ कैसे कर सकता है ।

विचार के द्वारा पर तत्त्वविषयक विशुद्ध ज्ञान लाभ करने में समक्ष है। मेरी कृपा से क्षुद्र जीव,सम्यक् ज्ञान लाभ करने में सक्षम है। भक्त गण,मेरा अलौकिक ज्ञानदीपके द्वारा निरन्तर उद्भासित होते हैं। मैं विशेष अनुकम्पा के द्वारा भक्त वृन्द के हृदयस्थित अज्ञानान्धकार विनष्ट कर देता हूँ। जिस शुद्ध ज्ञान में जीव का अधिकार है, वह ज्ञान, भक्ति अनुशीलन से ही लभ्य है। तर्कादि अपर साधन के द्वारा लभ्य नहीं है।

ब्रह्मा—श्रीभगवान् को कहे थे ।।९६।।

९७। श्रीमद् भागवत में जो सब अन्य पुरुषार्थ साधनों की कथा उल्लिखित हैं, उन सब साधनों का मूल भक्ति ही है, अर्थात् भक्ति की सहायता से ही समस्त पुरुषार्थ सिद्ध होता है। भा० १०।८१।१९ में उक्त है—

(९७) "स्वर्गापवर्गयोः पुंसां रसायां भुवि सम्पदाम् ।
सर्वासामपि सिद्धीनां मूलं त्वच्चरणार्च्चनम् ।।"१७१।।

इत्यादुचक्तनित्यत्वेन च सर्वथा तद्वहिर्मुखानां तु तत्तदलाभ एव स्यादित्यर्थः । यथा स्का:दे-

"विष्णुभक्तिविहीनानां श्रौताः स्मार्त्ताश्च याः क्रियाः ।
कायक्लेशः फलं तासां स्वैरिणी व्यभिचारवत् ॥१७२॥ इति ।

तदुक्तं श्रीयुधिष्ठिरेण (भा० १०।७२।४) --

"त्वत्पादुके अविरतं परि ये चरन्ति, ध्यायन्त्यभद्रनशने शुचयो गृणन्ति ।
विन्दन्ति ते कमलनाभ भवापवर्ग,-माशासते यदि च आशिष ईश नान्ये ॥"१७३॥

इति । अत उक्तं वृहन्नारदीये-

---

टीका—एवं सम्पूज्यापि धनस्यादाने कारणं कल्पयति,-स्वर्गापवर्गयोरिति, द्वाभ्याम् ॥

श्रीदाम विप्र के वाक्य से प्रकाशित है कि—स्वर्ग में, मुक्ति में, रसातल में एवं भूतल में जितनी सम्पत्ति है, एवं जितनी सिद्धियां हैं, श्रीभगवान् के चरणार्चन ही उन सबका मूल है। अर्थात् श्रीकृष्ण चरणार्च्चन के विना उक्त समस्त पुरुषार्थ का लाभ नहीं हो सकता है।

काम्य कर्मानुष्ठान में मन्त्रगत एवं साधनगत अनेक त्रुटि उपस्थित होती हैं भा० ८।२३।१६ में उक्त है।

"मन्त्रतस्तन्त्रतश्छिद्रं देश कालार्ह वस्तुतः ।
सर्वं करोति निश्छिद्रमनुसङ्कीर्त्तनं तव ॥"

टीका—आस्तां तावत् पूजा यस्मान्मन्त्रतः स्वरादि भ्रंशेन, तन्त्रतो व्युत्क्रमादिना देशतः कालतः अर्हतः, पात्रतः, वस्तुतश्च दक्षिणादिना यच्छिद्रं न्यूनं तत् सर्वं तवानुकीर्त्तनमात्रमेव निश्छिद्रं करोति।

एवं भा० ११।५।२ में उक्त है—

"मुखबाहूरुपादेभ्यः पुरुषस्याश्रमैसह ।
चत्वारो जज्ञिरेवर्णा गुणैर्विप्रादय पृथक् ॥

टीका—स्व जनकस्य गुरोर्भगवतोऽनादराद् गुरुद्रोहेण दुर्गतिं यान्तीति वक्तुं भगवतः सकाशाद्वर्णाश्रमाणामुत्पत्तिमाह मुखेति। गुणैः सत्त्वेन विप्रः, सत्त्व रजोभ्यांक्षत्रियः, रजस्तमोभ्यां वैश्यः, तमसा शूद्र इति।

उक्त श्लोक के द्वारा भगवद् भजन का नित्यत्व विहित हुआ है। अतः भगवद् वहिर्मुख व्यक्ति गण कभी भी स्वर्गादिसुख अथवा किसी प्रकार पुरुषार्थ प्राप्त करने में सक्षम नहीं हैं। स्कन्द पुराण में वर्णित है।

"विष्णुभक्ति विहीनानां श्रौताः स्मार्त्ताश्च याः क्रियाः ।
कायक्लेशः फलं तासां स्वैरिणी व्यभिचारवत् ॥"१७२॥

वेश्यावृन्द का व्यभिचार जिस प्रकार काय क्लेश में पर्य्यवसित होता है, उस प्रकार श्रीविष्णु भक्ति हीन जन गण जो कुछ अनुष्ठान करते हैं, किम्बा स्मृति शास्त्रोक्त अनुष्ठान करते हैं, तत् समुदय अनुष्ठान काय क्लेश में ही पर्य्यवसित होता है। केवल कर्मानुष्ठान द्वारा परिश्रम फल लाभ होता है। श्रीयुधिष्ठिर भा० १०।७२।४ में कहे हैं—

"त्वत् पादुके अविरतं परि ये चरन्ति, ध्यायन्त्यभद्रनशने शुचयो गृणन्ति ।
विन्दन्ति ते कमलनाभ ! भवापवर्ग,माशासते यदि त आशिष ईश नान्ये ॥"१७३॥

टीका—एष चक्रवर्त्तिनां मनोरथः कथं त्वया क्रियत इति चेदत आह—त्वत् पादुके--इति। परि ये चरन्तीति यच्छब्द व्यवधानमार्षम्। ये परिचरन्ति देहेन। ध्यायन्ति—मनसा। अभद्रस्य नशने नाशके।

"यथा समस्तलोकानां जीवनं सलिलं स्मृतम् । तथा समस्तसिद्धीनां जीवनं भक्तिरिष्यते ॥१७४॥ इति ।

**श्रीदामविप्रः ॥**

**९८ । तदेवं तानि साधनानि भक्तिजीवनान्येवेति भक्तेरेव सर्वत्राभिधेयत्वम् । तानि विनापि च भक्तेरेव तत्र साधकत्वमपि दर्शितं तत्र** (भा० २।३।१०) **"अकामः सर्वकामो वा" इत्यादौ । यथा श्रीविष्णुपुराणे पुलह वाक्यम्** (वि० पु० १।११।४६) --

"यो यज्ञपुरुषो यज्ञे योगे यः परमः पुमान् । तस्मिंस्तुष्टे यदप्राप्यं किं तदस्ति जनार्द्दने ॥"१७५॥

**अतएव मोक्षधर्मे–**

"या वै साधनसम्पत्तिः पुरुषार्थ चतुष्टये । तया विना तदाप्नोति नरो नारायणाश्रयः ॥"१७६॥ इति ।

**तस्मात् साधूक्तं सर्वशास्त्रश्रवणफलत्वेन तदभिधेयत्वम् । अतएव प्रथमं स्वयंभगवता**

---

गृणन्ति-वाचा । तथा भवस्य अपवर्ग नाशं मोक्षं विन्दन्ति--यद्याशासते तर्हि आशिषोऽपि त एव विन्दन्ति नान्ये चक्रवर्त्तिनोऽपि ।

हे कृष्ण ! सर्व अमङ्गल विनाश कारी तुम्हारी पादुका युगल की परिचर्य्या जो लोक पवित्र भावसे देह के द्वारा करते हैं, मन के द्वारा नियत ध्यान करते हैं । एवं वाक्य के द्वारा तुम्हारी लीला कथा का कीर्त्तन करते हैं, हे कमल नाभ ! वे सब मोक्षपर्य्यन्त प्राप्त करने में समर्थ होते हैं । यदि वे सब अपर विषय के इच्छुक होते हैं, तो आप की सेवा से वह भी सिद्ध होता है । किन्तु तुम्हारे भक्त व्यतीत अपर कोई भी व्यक्ति तत् समुदय को प्राप्त करने में समर्थ नहीं होते हैं । तज्जन्य वृहन्नारदीय पुराण में उक्त है--

"यथा समस्त लोकानां जीवनं सलिलं स्मृतम् ।
तथा समस्त सिद्धानां जीवनं भक्तिरिष्यते ॥"१७४॥

जल, जिस प्रकार समस्त प्राणियों का जीवन है, उस प्रकार भक्ति भी अखिल सिद्धियों का जीवन स्वरूप है ।
श्रीदाम विप्र--कहे थे ॥८७॥

९८ । अतएव भक्ति ही उक्त समस्त साधनों का जीवन होने के कारण, सर्वत्र ही भक्ति का अभिधेयत्व सिद्ध होता है । किन्तु उक्त साधन समूह को छोड़कर ही भक्ति स्वयं ही पुरुषार्थ प्रदान करने में समर्थ है । इस का वर्णन भा० २।३।१७ में हुआ है ।

"अकामः सर्वकामो वा मोक्षकाम उदारधी ।
तीव्रेण भक्तियोगेन भजेत पुरुषं परम् ॥"

टीका–अकामः–एकान्त भक्तः । उक्तानुक्तसर्वकामो वा, पुरुषं पूर्णं, परं--निरुपाधिम् ॥

श्रीविष्णु पुराण में पुलह ऋषि का कथन है–

"यो यज्ञ पुरुषो यज्ञे योगे यः परमः पुमान् ।
तस्मिंस्तुष्टे यदप्राप्यं किंतदस्ति जनार्दने ॥"१७५॥

जो, यज्ञ में यज्ञ पुरुष नाम से कथित हैं, एवं जो योग साधना में परम पुरुष शब्द से अभिहित हैं, उन श्रीजनार्द्दन को सन्तुष्ट करने में समर्थ होने पर कुछ भी अप्राप्य नहीं रहते हैं । मोक्ष धर्म में भी उक्तहै-

या वै साधन सम्पत्तिः पुरुषार्थ चतुष्टये ।
तया विना तदाप्नोति नरो नारायणाश्रयः ॥"१७६॥

चतुर्वर्ग प्राप्त करने का अभिलाषी होने पर जो सब साधन उसको प्राप्त करने के निमित्त विहित है, उक्त समुदय साधन व्यतीत भी मानव गण, श्रीनारायण का आश्रय लाभ करने पर उक्त पुरुषार्थ को प्राप्त

सैव प्रवर्त्तितेत्युक्तम् (भा० ११।१४।३) --"कालेन नष्टा प्रलये वाणीयम्" इत्यादिना। तदेवं सति ये तु नातिकोविदास्ते तत्तदर्थं कर्म्माद्यङ्गत्वेनैव श्रीविष्णूपासनां कुर्वते, ततः तदपराद्धेन निज-निजकामनामात्रफलप्रदत्वं तत्रानियतत्वञ्च तस्याः, तत्तदर्थमपि स्वतन्त्रत्वेन क्रियमाणाया भक्तेस्त्ववश्यं तत्तत्फलप्रदत्वम्। न च तत्तन्मात्रदानेन पर्य्याप्तिः, किन्तु पर्य्यवसाने परमफल-प्रदत्वमेवेति। ततस्तस्या एव परमहितत्वेनाभिधेयत्वमाह (भा० ५।१९।२६) —

(९८) "सत्यं दिशत्यर्थितमर्थितो नृणां, नैवार्थदो यत् पुनरर्थिता यतः।
स्वयं विधत्ते भजतामनिच्छता-,मिच्छापिधानं निजपादपल्लवम् ॥"१७७॥

अर्थितःप्रार्थितः सन् नृणामर्थितं सत्यमेव ददाति, न तत्र कदाचिदपि व्यभिचार इत्यर्थः।

---

कर सकते हैं।

अतएव समस्त शास्त्र श्रवण का फल रूप में भक्ति का जो अभिधेयत्व कहा गया है, वह कथन अतीव सुन्दर है। तज्जन्य ही श्रीभगवान् सृष्टि के प्रारम्भ में भक्ति का प्रवर्त्तन किये थे। भा० ११।१४।३ में उक्त है श्रीभगवान् उद्धव को कहे थे—

"कालेन नष्टा वाणीयं प्रलये वेद संज्ञिता।
मयादौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः ॥"

टीका—तत्र भक्तिरेव महाफलत्वेन मुख्या, अन्यानि तु स्व प्रकृत्यनुसारेण पुष्पस्थानीय स्वर्गादि फल बुद्धिभिः प्राणिभिः प्राधान्येन परिकल्पितानि, क्षुल्लक फलानीति विवेक्तुं प्रकृत्यनुसारेण बहुधा वेदार्थ प्रतिपत्तिमाह,—कालेनेति सप्तभिः। मदात्मकः,—मय्येवात्मा चित्तं यस्य सः ॥(३)

महाप्रलय के समय कालक्रम से मेरा आदेश स्वरूप वेदोपदेश, जगत् में तदनुरूप ग्राहक के अभाव हेतु विलुप्त प्राय हो गया था। अनन्तर महाप्रलय के अन्त में सर्व प्रथम मैं ने ब्रह्मा को वेद संज्ञिता वाणी का उपदेश किया था। जिस में मदात्मक धर्म वर्णित है। अर्थात् मेरी जिस आदेश वाणी में ह्लादिनी शक्ति के वृत्तिरूप भक्ति नाम से अभिहित धर्म का विवरण कहा गया है। अतएव जो लोक विशेष अभिज्ञ नहीं है, वे अब धर्मादि रूप पुरुषार्थ प्राप्ति के निमित्त कर्मादि अनुष्ठान के अङ्ग रूप में श्रीविष्णु की पूजा करते रहते हैं। इस से भक्ति देवी की अमर्य्यादा होती है, अतः भक्ति, केवलमात्र कामनानुरूप फल प्रदान कर्मानुष्ठानकारी को करती है। किन्तु वह फल भी चिरस्थायी नहीं होता है। किन्तु यदि उक्त अनभिज्ञ व्यक्तिगण, अभिलषित फललाभ हेतु स्वतन्त्ररूप से भक्ति का अनुष्ठान करते तो, अवश्य ही भक्ति देवी उन सब को अन्यान्य साधन के फल समूह प्रदान करती। अधिकन्तु पर्य्यवसान में परम फल जो श्रीकृष्ण प्रीति उस को भी प्रदान करती। अनन्तर परमहित-कारित्व रूप में भक्ति का अभिधेयत्व की वर्णना करते हैं, भा० ५।१९।२६ में देवगण परस्पर को कहते हैं,—

(९८) "सत्यं दिशत्यर्थितमर्थितो नृणां, नैवार्थदो यत् पुनरर्थिता यतः।
स्वयं विधत्ते भजतामनिच्छता,-मिच्छापिधानं निजपादपल्लवम् ॥"१७७॥

टीका—तत्रापि निष्कामः कृतार्था इत्याहुः सत्यमिति। प्रार्थितः सन् अर्थित ददातीति सत्यं तथापि परमार्थदो न भवत्येव। यद् यस्मात् यतो दत्तानन्तरं पुनरपि अर्थिता भवति। ननु नार्थितश्चेत्, किमपि न दद्यात्, इत्याशङ्क्याहुः, अनिच्छतां निष्कामाणान्तु इच्छानां पिधानमाच्छादकं सर्वकाम परिपूरकं-निज पाद पल्लवं स्वयमेव सम्पादयति ॥

मानववृन्द, भक्ति का अनुष्ठान करके यदि श्रीभगवान् के निकट अपर कुछ पुरुषार्थ वस्तु प्रार्थी होते

किन्तु, तथापि तन्मात्रेणार्थदो न भवति, तन्मात्रं दत्त्वा निवृत्तो न भवतीत्यर्थः, यत उपासकस्तत्रापूर्णत्वाद्भोगक्षये सति तदेव पुनरर्थिता भवति, (भा० ९।१९।१४) "न जातु कामः कामानाम्" इत्यादेः । तदेतमभिप्रेत्य स तु परमकारुणिकस्तत्पादपल्लव-माधुर्य्याज्ञानेन तदनिच्छतामपि भजतामिच्छापिधानं सर्वकामसमापकं निजपादपल्लवमेव विधत्ते, तेभ्यो ददातीत्यर्थः । यथा माता चर्व्यमाणां मृत्तिकां बालकमुखादपसार्य्य तत्र खण्डं ददाति, तद्वदिति भावः । एवमप्युक्तम् (भा० २।३।१०)–"अकामः सर्वकामो वा" इत्यादौ तीव्रत्वं भक्तेः । तथोक्तं गारुड़े—

---

हैं, तो परमदयालु श्रीहरि, उनके प्रार्थना के अनुरूप धर्मादि पुरुषार्थ वस्तु प्रदान करते हैं, किन्तु मन में विचार भी करते हैं, मैं ने जो कुछ दिया है, वह परमार्थ वस्तु नहीं है, कारण, उक्त कामित वस्तु प्राप्त करने के पश्चात् हृदय में अभाव बुद्धि होगी, और मेरे निकट पुनर्वार वे सब धन जन की प्रार्थना करेंगे । इस प्रकार विचार कर उक्त सकाम भक्त गण के हृदय में जिस से वासना का उद्गम नहो, तज्जन्य वासना उद्गमस्थान में भगवान् निज पाद पल्लव प्रदान करते हैं ।

उक्त श्लोकस्थित स्वामिकृत टीका काअभिप्राय यह है--सकाम भक्त गण कर्त्तृक प्रार्थित होकर भगवान् उसके अभिलषित पदार्थ सत्य ही प्रदान करते हैं । इस में कभी भी अन्यथा नहीं होती है । किन्तु भगवान् अभिलषित वस्तु प्रदान कर ही निवृत्ति नहीं होते हैं, कारण, उपासक गण, जिस कामित वस्तु को प्राप्त करते हैं, वे सब अपूर्ण हैं, अतः क्षय होने के पश्चात् पुनर्वार वे सब उस प्रकार वस्तु की प्रार्थना करते रहते हैं, कारण, भा० ९।१९।१४ में उक्त है—

"न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूयएवाभिवर्द्धते ॥"

टीका—हविषा घृतेन, कृष्णवर्त्मा अग्निरिव ।

अर्थात् घृत निक्षेप से अग्नि जिस प्रकार वर्द्धित होता है । उस प्रकार काम्यवस्तु का उपभोग से काम कदापि शान्त नहीं होता है,केवल वर्द्धित ही होता है । इस अभिप्राय से ही परम कारुणिक श्रीभगवान् निज पाद पल्लव के माधुर्य्य विषय में अनभिज्ञता निबन्धन तद्विषय में अनिच्छा कारी भक्त वृन्द के सम्बन्ध में इच्छा पिधान कारी—अर्थात् सर्वाभिलाष पूर्णकारी निज पाद पल्लव प्रदान करते हैं । अर्थात् श्रीभगवान् निज भक्त के हृदय से अन्य वासना विदूरित करके निज चरण माधुर्य्य का आस्वादन प्रदान करते हैं । जिस प्रकार माता निज बालक को मृत्तिका चर्वण करते देखकर उस के मुख से मृत्तिका अपसारित करके खण्ड मिश्री भक्षण करने को देती है, यहाँपर भी उस प्रकार जानना होगा ।

अभिप्राय यह है कि—जो भक्त,—भक्ति साधन का अनुष्ठान कर्म ज्ञान योगादि के सहित अमिश्रित भाव से करते हैं अर्थात् विशुद्ध भक्ति का अनुष्ठान करते हैं, अथच भगवत् सेवा रूप परम पुरुषार्थ लाभ की वासना के सहित स्वर्गादि त्रिवर्ग पुरुषार्थ की वासना भी रहती है, उनके सम्बन्ध में श्रीभगवान् निज चरणामृत आस्वादन कराकर अपर वस्तु में वितृष्णा उत्पन्न करते हैं । कारण, विशुद्ध, भजन कारी भक्त गण के कल्याण विधान करना ही भगवान् का कार्य्य है ।

श्रीभगवच्चरण माधुर्य्य आस्वादन का भी इस प्रकार प्रभाव है, एकवार उसका आस्वाद प्राप्त करने से तदतिरिक्त वस्तु में आसक्ति नहीं जगाती है, भा० २।३।२० में कहा भी है ।

"यद्दुर्लभं यदप्राप्य मनसो यन्न गोचरम् । तदप्यप्रार्थितं ध्यातो ददाति मधुसूदनः ।।" १७८ ।। इति ।

एवं श्रीसनकादीनामपि ब्रह्मज्ञानिनां भक्त्युनुवृत्त्या तत्पादपल्लवप्राप्तिर्ज्ञेया ।। देवाः परस्परम् ।।

९९ । अथ व्यतिरेकेण कर्म्मानादरेणाह—तत्र कर्म्मणः फलप्राप्तावनिश्चयत्वं दुःखरूपत्वञ्च, भक्तेस्तु तस्यामावश्यकत्वं साधक-दशायामपि सुखरूपत्वञ्चेत्याह (भा० ११८।१२) —

(९९) "कर्म्मण्यस्मिन्ननाश्वासे धूमधूम्रात्मनां भवान् ।
आपाययति गोविन्द-पादपद्मासवं मधु ।।" १७९।।

अस्मिन् कर्म्मणि सत्रेऽनाश्वासेऽविश्वसनीये, वैगुण्य-बाहुल्येन कृषिवत् फलनिश्चयाभावात् । अनेन भक्तेर्विश्वसनीयत्वं ध्वनितम् । धूमेन धूम्रौ विरञ्जितौ विवर्णावात्मानौ शरीर-चित्ते

---

"अकामः सर्वकामो वा मोक्षकाम उदारधीः ।
तीव्रेण भक्ति योगेन यजेत पुरुषं परम् ।।"

टीका—अकामः—एकान्त भक्तः । उक्तानुक्त सर्वकामो वा, पुरुषं पूर्णं, परं--निरुपाधिम् ।।

इत्यादि श्लोक में भक्ति की तीव्रत्व की कथा कही गई है । गरुड़ पुराण में भी उक्त है—

"यद् दुर्लभं यदप्राप्यं मनसो यन्न गोचरम् ।
तदप्य प्रार्थितं ध्यातो ददाति मधुसूदनः ।।"१७८।।

जो वस्तु दुर्ल्लभ, दुष्प्राप्य, एवं मनका अगोचर है, इस प्रकार वस्तु की प्रार्थना न करने पर भी श्रीमधुसूदन का ध्यान करने से मधुसूदन उसको प्रदान करते हैं । इस प्रकार रीति के अनुसार ही श्री सनकादि चतुः सनकी भक्तिकी अनुवृत्तिसे श्रीभगवच्चरण पल्लव प्राप्ति हुई थी । इस प्रकार जानना होगा । देववृन्द परस्पर को कहे थे ।।८९।।

९९ । अनन्तर व्यत्तिरेक मुख से कर्म का आस्वादन करके व्यतिरेक मुख से भक्ति का अभिधेयत्व स्थापन करते हैं । उसके मध्य में फल प्राप्ति विषय में कर्म साधन का अनिश्चयत्व एवं दुःख रूपत्व है, किन्तु भक्ति साधन का अवश्य फल दायकत्व एवं सिद्धावस्था की बात तो दूर है । साधनावस्था में भी भक्ति का सुख रूपत्व है । उसका वर्णन भा० १।१८।१२ में है--

(९९) "कर्मण्यस्मिन्ननाश्वासे धूमधूम्रात्मनां भवान् ।
आपाययति गोविन्द पाद पद्मासवं मधु ।।१२।।

टीका—किञ्च, अस्मिन् कर्मणि सत्रे अनाश्वासे--अविश्वसनीये । वैगुण्यं बाहुल्येन फलति, निश्चया भावात् । धूमेन धूम्रः, विवर्ण आत्मशरीरं येषां तानस्मान् । कर्मणि षष्ठी । आसवं मकरन्दं, मधु मधुरम् ।।१२।।

नैमिषारण्य निवासी मुनिगण, श्रीसूत को कहे थे । हम सब जो यज्ञ का अनुष्ठान कर रहे थे, वह अविश्वसनीय है, कारण, उस में अनेक वैगुण्य उपस्थित होते रहते हैं । अतः फल प्राप्ति की किसी प्रकार निश्चयता नहीं है । अधिकन्तु यज्ञानुष्ठान के प्रज्वलित अग्नि से उत्थित धूम द्वारा हमारे शरीर विवर्ण हो गये हैं । इस प्रकार स्थिति में आप हम सब को श्रीगोविन्द के श्रीचरण पद्म के मधुर मकरन्द आस्वादन करा रहे हैं ।

यज्ञ रूप इस कर्म अनाश्वास है, अर्थात् अविश्वसनीय है, विघ्न बाहुल्य वशतः फल प्राप्ति की निश्चयता

येषाम्, कर्म्मणि षष्ठी, तानस्मानित्यर्थः। पादपद्मस्य यशोरूपमासवं मकरन्दम्, मधु मधुरम्। अत्र सत्रवत् कर्म्मान्तरं यशः-श्रवणवद्भक्त्यन्तरञ्चेति ज्ञेयम्। तदेवं भक्तिविनाभूतानां कर्म्मादिभिरस्माकं दुःखमेवासीदिति व्यतिरेक-त्वमत्र गम्यते। तदुक्तम् (भा० १२।१२।५४) "यशःश्रियामेव परिश्रमः परः" इत्यादि, (भा० १।२।२२) "अतो वै कवयो नित्यम्" इत्यादि च। ब्रह्मवैवर्त्ते च शिवं प्रति श्रीविष्णुवाक्यम्—

"यदि मां प्राप्तुमिच्छन्ति प्राप्नुवन्त्येव नान्यथा। कलौ कलुषचित्तानां वृथायुः प्रभृतीनि च। भवन्ति वर्णाश्रमिणां न तु मच्छरणार्थिनाम्।।"१८०।। इति।। श्रीऋषयः सूतम्।।

---

नहीं है। इस से भक्ति की विश्वसनीयता सूचित हुई है। धूम के द्वारा धुम्र--अर्थात् विरञ्जित आत्मा, अर्थात् विवर्ण शरीर एवं चित्त जिनके हैं, उस प्रकार हम सब को श्रीगोविन्द पाद पद्म मकरन्द पान करा रहे हैं। यहाँपर "धूमधूम्रात्मनां" पद में कर्म में षष्ठी विभक्ति हुई है। अर्थात् हम सब को उस प्रकार जानना होगा। पाद पद्म के यशरूप—आसव, अर्थात् मकरन्द। मधु का अर्थ मधुर है। यहाँ यज्ञ के समान ही अन्य यावतीय कर्मकाण्ड के साधन को उस प्रकार जानना होगा। अर्थात् निखिल काम्य कर्म साधन ही दुःखकर हैं, एवं अभीप्सित फल प्रदान में अनिश्चय कर हैं। किन्तु भक्ति के यावतीय अङ्ग समूह, साधन एवं सिद्ध अवस्था में सुखप्रद हैं, एवं फल प्रदान विषय में किसी प्रकार सन्देह स्थल नहीं है। शौनकादि ऋषिगण, व्यतिरेक मुख से श्रीसूत के समीप में कह रहे हैं—कि--हम सबने भक्ति का साहाय्य ग्रहण नहीं किया है, केवल कर्मानुष्ठान के द्वारा दुःख भोग ही किया है॥

इस प्रकार भा० १२।१२।५४ में श्रीसूत ने भी कहा है—

"यशः श्रियामेव परिश्रम परो वर्णाश्रमाचार तपः श्रुतादिषु।
अविस्मृतिः श्रीधर पादपद्मयो गुणानुवाद श्रवणादरादिभिः।।

अर्थात् वर्ण एवं आश्रम के अनुरूप आचरण, तपस्या एवं वेदादि शास्त्राध्ययन के द्वारा मानवगण जिस प्रकार परिश्रम करते हैं, वह परिश्रम, यशः एवं सम्पत्ति अर्जन में पर्य्यवसित होता है। अर्थात् यशः एवं सम्पत्ति लाभ को परम पुरुषार्थ, वे सब मानते हैं तज्जन्य ही वर्णाश्रमोचित आचरण पालन भी वे सब करते हैं। यहाँपर दर्शाया गया है कि - श्रीभगवत् सन्तोष के प्रति लक्ष्य न रखकर वर्णाश्रमोचित आचरण एवं तपस्या प्रभृति के द्वारा केवल परिश्रम ही सार होता है। भक्ति का परम सुख प्रदत्व पति पादन हेतु श्रीसूत ने भा० १.२.२२ में कहा है—

"अतो वै कवयो नित्यं भक्ति परमया मुदा।
वासुदेवे भगवति कुर्वन्त्यात्म प्रसादनीम्।।

अतएव कविगण, परमानन्द के सहित वसुदेव भगवान् में आत्म प्रसन्नता सम्पादक भक्ति का विधान नित्य ही करते रहते हैं। ब्रह्म वैवर्त्त पुराण में श्रीशिव के प्रति 'श्रीविष्णु का कथन इस प्रकार है—

"यदि मां प्राप्तुमिच्छन्ति प्राप्नुवन्त्येव नान्यथा।
कलौ कलुष चित्तानां वृथायुः प्रभृतीनि च।
भवन्ति वर्णाश्रमिणां न तु मच्छरणार्थिनाम्।।"१८०।।

यदि कोई व्यक्ति मुझ को प्राप्त करने के इच्छुक हैं, तो वे अवश्य ही मुझ को प्राप्त कर सकते हैं, इस में अन्यथा नहीं है। कलिकाल में जो लोक केवल वर्णाश्रमोचित आचरण करते हैं, वे सब अति कलुष चित्त के होते हैं, उन सबकी आयुः व्यर्थ अति वाहित होती है। किन्तु जो मेरा आश्रय ग्रहण करते हैं, वे सब

१०० । तथा, (भा० ११५।१७)--"त्यक्त्वा स्वधर्म्मम्" इत्यादिकमनुसन्धेयम् । एवं महावित्त-महायासादि-साध्येन कर्म्मादिना तुच्छं स्वर्गादिफलम्, स्वल्पायास-स्वल्पवित्तादि--साध्यया भक्त्या तदाभासेन च परम-महत्फलं तत्र तत्रानुसन्धाय भक्तावेव शास्त्रतात्पर्य्यं पर्य्यालोचनीयम् । तस्मात् तत्तच्छास्त्राणामपि भक्तिविधेयक- तत्तदनुवादेन प्रवृत्तत्वान्न वैफल्यमित्यपि ज्ञेयम् । किञ्च, (भा० ७।६।१०)—

---

ही कृतार्थ होते हैं ।

श्रीशौनकादि ऋषिगण श्री सूत को कहे थे ।।९९।।

१०० । इस प्रकार भा० ११५।१७ के

"त्यक्त्वास्वधर्मं चरणाम्बुजं हरे र्भजन्न पक्वोऽथ पतेत् ततो यदि ।
यत्र क्व वा भद्रमभूदमुष्य किं को वार्थ आप्तोऽभजतां स्वधर्मतः ।।"

टीका—"एवं तावत् काम्य कर्मादेरनर्थ हेतुत्वात् तं विहाय हरेर्लीलैव वर्णनीयेत्युक्तम् । इदानीन्तु नित्य नैमित्तिक स्वधर्म निष्ठामपि अनादृत्य केवलं हरिभक्तिरेव उपदेष्टव्येत्याशयेनाह त्यक्त्वेति तदा न कदाचिच्चिन्ता, यदि पुनरपक्क एवम्रियेत ततो भ्रश्येद्वा तदा च स्वधर्म त्याग निमित्तोऽनर्थः स्यादित्या-शङ्क्याह ततो भजनात् पतेत् कथञ्चित् भ्रश्येत् म्रियेत वा यदि तथापि भक्ति रसिकस्य कर्मानधिकरात् नानर्थ शङ्का । अङ्गीकृत्याप्याह । वा शब्दः कटाक्षे । यत्र क्व वा नीचयोनावपि अमुष्य भक्तिरसिकस्य अभद्रमभूत् किं, नाभूदेवेत्यर्थ । भक्ति वासना सद् भावादिति भावः । अभजद्भिस्तु केवलं स्वधर्मतः को वा अर्थः आप्तः प्राप्तः । अभजतामिति षष्ठी तु सम्बन्ध मात्र विवक्षया ।।

अर्थात् भजन करते करते यदि कोई साधक निज साधन पथ से दैव क्रम से अपराध वशतः विभ्रष्ट हो जाता है । उस से भी विशेष अमङ्गल उपस्थित नहीं होता है । किन्तु जो लोक श्रीभगवान् के श्रीचरण पद्म का भजन को परित्याग कर केवल स्वधर्माचरण ही करते हैं, वे सब कुछ भी मङ्गल लाभ करने समर्थ नहीं होते हैं । इस से कर्म साधन से भक्ति का सुखकरत्व एवं सुफल दातृत्व प्रदर्शित हुआ है ।

पूर्व पूर्व शास्त्र वाक्य से यह प्रतीत होता है कि बहु अर्थ एवं बहु परिश्रम के द्वारा अति तुच्छ स्वर्गादि फल लाभ होते हैं, किन्तु स्वल्प अर्थ एवं अल्प परिश्रम के द्वारा साध्या जो भक्ति है, उसके आभास मात्र के द्वारा भी परम महत् फल लाभ कर सकते हैं । उक्त वाक्य समूह से बोध होता है कि-निखिल शास्त्र का तात्पर्य्य भक्ति में ही है ।

यहाँपर संशय हो सकता है कि—यदि काम्य कर्मादि साधन एवं फल में पर्य्याप्त दोष है, तो परम कारुणिक शास्त्र उक्त साधनानुष्ठान करने के निमित्त आदेश प्रदान क्यों करते हैं ? उत्तर में कहते हैं—

जब तक महत् सङ्ग नहीं होता है, तब तक भक्ति के प्रति आदर बुद्धि नहीं हो सकता है । अथच आदर बुद्धि न होने पर भक्ति अनुष्ठान करने पर भी उस में आवेश नहीं होता है । तज्जन्य यावत् पर्य्यन्त महत् सङ्ग जनित सौभाग्य वशतः भक्ति में आदर बुद्धि नहीं होता है, तावत् पर्य्यन्त भक्ति सम्बलित कर्मादि साधनानुष्ठान करना पड़ेगा । उक्त कर्मानुष्ठान करते करते सत्सङ्ग लाभ की सम्भावना होती है । उक्त सत्सङ्ग से श्रीहरि कथा में रुचि प्राप्त करने के पश्चात् विशुद्ध भक्ति में प्रवेशाधिकार लाभ होता है । इस अभिप्राय से ही कर्म ज्ञान योगादि अनुष्ठान करने का उपदेश बारम्बार दिया गया है । इस से शास्त्रोपदेश का वैफल्य नहीं होता है । किन्तु निखिल शास्त्र का मुख्य तात्पर्य्य क्रममुक्ति प्राप्ति उपाय के समान भक्ति अनुष्ठान में ही है ।

(१००) "विप्राद्द्विषड् गुणयुतादरविन्दनाभ,-पादारविन्द-विमुखात् श्वपचं वरिष्टम् ।
मन्ये तदर्पित-मनोवचनेहितार्थ,-प्राण पुनाति स कुलं न तु भूरिमानः ॥"१८१॥

टीका च—"भक्त्यैव केवलया हरेस्तोषः सम्भवतीत्युक्तम् । इदानीं भक्तिं विना नान्यत् किञ्चित्तोष-हेतुरित्याह—विप्रादिति । (भा० ७।९।९) "मन्ये धनाभिजन-रूप-तपः श्रुतौज,-स्तेजः-प्रभाव-बल-पौरुष-बुद्धि-योगाः" इत्यादौ पूर्वोक्ता ये धनादयो द्विषट् द्वादश गुणास्तै-र्युक्ताद्विप्रादपि श्वपचं वरिष्ठं मन्ये, यद्वा, सनत्सुजातोक्ता (महा० भा० उ० प० ४३ अ० २०) द्वादश धर्म्मादयो गुणा द्रष्टव्याः,—

'धर्म्मञ्च सत्यञ्च दमस्तपश्च, अमात्सर्य्यं ह्रीस्तितिक्षानसूयाः ।

---

भा० ७।९।१० में श्रीप्रह्लाद ने कहा भी है—

विप्राद्द्विषड् गुण युतादरविन्दनाभपादारविन्दविमुखात् श्वपचं वरिष्ठम् ।
मन्ये तदर्पितमनोवचने हितार्थ प्राणं पुनाति सकुलं नतु भूरिमानः ॥"१८१॥

टीका—"एवं भक्त्यैव केवलया हरेस्तोषः सम्भवतीत्युक्तम् । इदनीं भक्ति विना नान्यत् किञ्चित् तोष हेतु रित्याह विप्रादिति पूर्वोक्ता धनादयो ये द्विषट् द्वादश गुणास्तैर्युक्ताद् विप्रादपि श्वपचं वरिष्ठं मन्ये यद्वासनत्सुजातोक्ता द्वादश धर्मादयो गुणा द्रष्टव्याः । तदुक्तं महाभारते धर्मश्च सत्यञ्च दमस्तपश्च मात्सर्य्यं ह्रीस्तितिक्षानसूया । यज्ञश्च दानञ्च धृतिः श्रुतञ्च व्रतानि वै द्वादश ब्राह्मणस्य इति । यद्वा, शमोदमस्तपः शौचं क्षान्त्यार्जव विरक्तताः । मौन विज्ञान सन्तोषाः सत्यास्तिक्ये द्विषड् गुणा इति । कथम्भुतात् विप्रात् ? अरविन्दनाभस्य पादारविन्दात् विमुखात् । कथम्भूतं श्वपचम् ? तस्मिन्नरविन्द नाभेऽर्पिता मन आदयो येन तम् । ईहितं कर्म । वरिष्ठत्वे हेतुः, स एवम्भूतः श्वपचः सर्वं कुलं पुनाति । भूरिर्म्मानो गर्वो यस्य सतु विप्रः आत्मानमपि न पुनाति, कुतः कुलम् । यतो भक्ति हीनस्यैते गुणा गर्वायैव भवन्ति न तु शुद्धये । अतो हीन इति भावः ॥"

हे नाथ ! धनाभिजन प्रभृति अथवा धर्म सत्य प्रभृति द्वादश गुण समन्वित ब्राह्मण से श्वपच को मैं श्रेष्ठ मानता हूँ । कारण, वह ब्राह्मण, द्वादश गुण समन्वित होने पर भी हे कमल नाभ ! यदि आप के पादारविन्द से विमुख होता है, एवं श्वपच, जाति दोष दुष्ट होकर भी यदि आपके चरणों में कायिक वाचिक मानसिक व्यापार एवं अर्थ प्राण, अर्पण करता है तो वह भगवद् वहिर्मुखता दोष दुष्ट ब्राह्मण से भी आप में अर्पित मनः प्राण हेतुः श्वपच को मैं श्रेष्ठ मानता हूँ । कारण, भगवत् वहिर्मुख ब्राह्मण, जितने साधनानुष्ठान क्यों न करे, अथवा गुण सम्पन्न हो, न क्यों, उस के प्रत्येक साधनानुष्ठान के मध्य में मायिक अभिमान रहता है, उस से वह अपने को पवित्र कर नहीं सकता, कुलको पवित्र करना तो दूर है । और भक्ति अनुष्ठान हेतु दीनता प्राप्त वह श्वपच निजको पवित्र तो करता ही है, निज कुल को भी पवित्र करने में समर्थ होता है ।

स्वामिपाद कृत टीका की व्याख्या—केवल भक्ति के द्वारा ही श्रीहरि सन्तुष्ट होते हैं, इसका विवरण "भक्त्या तुतोष भगवान् गजयूथपाय श्लोक में है । भक्ति के बिना श्रीहरि को सन्तुष्ट करने में कोई व्यक्ति सक्षम नहीं होता है—व्यतिरेक मुख से उसका विवरण—'विप्र द्द्विषड् गुणयुतात्' श्लोक में कहते हैं । ब्राह्मण के द्वादश गुण इस प्रकार है, धन, आभिजात्य, रूप, तपस्या, श्रुत, ओज, तेजः, प्रभाव, बल, पौरुष, बुद्धि एवं अष्टाङ्ग योग प्रभृति हैं, यह द्वादश गुण युक्त ब्राह्मण, से श्वपच को मैं श्रेष्ठ मानता हूँ । अथवा सनत् सुजातीय में कथित धर्म सत्य प्रभृति गुण सम्पन्न ब्राह्मण को जानना होगा । द्वादश गुण इस प्रकार है—

यज्ञश्च दानञ्च धृतिः श्रुतञ्च, व्रतानि वै द्वादश ब्राह्मणस्य ।।"१८२।। इति।

कथम्भूताद्विप्रात् ? अरविन्दनाभ-पादारविन्द-विमुखात् । कथम्भूतं श्वपचम् ? तस्मिन्नरविन्दनाभे अर्पिता मनआदयो येन तम्, ईहितं कर्म । वरिष्ठत्वे हेतुः–स एवम्भूतः श्वपचः सर्वं कुलं पुनाति, भूरि मानो गर्वो यस्य स तु विप्र आत्मानमपि न पुनाति, कुतः कुलम् ? यतो भक्तिहीनस्यैते गुणाः गर्वायैव भवन्ति, न तु शुद्धये, अतो हीन इति भावः' इत्येषा । मुक्ताफल-टीका च–"द्विषट् द्वादश गुणाः धनाभिजनादयः, यद्वा,--

'शमो दमस्तपः शौचं क्षान्त्यार्ज्जव–विरक्तयः । ज्ञान-विज्ञान-सन्तोषाः सत्यास्तिक्ये द्विषड् गुणाः ।'१८३।

इत्यप्युक्ता" इत्येषा । स्कान्दे श्रीनारद-वाक्यम्--

"कुलाचारविहीनोऽपि दृढ़भक्तिजितेन्द्रियः । प्रशस्तः सर्वलोकानां न त्वष्टादशविद्यकः ।
भक्तिहीनो द्विजः शान्तः सज्जातिर्धार्मिकस्तथा ।।"१८४।।

काशीखण्डे च--

---

धर्म, सत्य, दम, तपस्या, अमात्सर्य्य, ह्री, लज्जा, तितिक्षा, अनसूया, यज्ञदान, धृति, श्रुत पाण्डित्य

"धर्म्मश्च सत्यञ्च दमस्तपश्च, अमात्सर्य्यं ह्रीस्तितिक्षानसूया ।
यज्ञश्च दानञ्च धृतिः श्रुतञ्च, व्रतानि वै द्वादश ब्राह्मणस्य ।।"१८२।।

ये द्वादश व्रत,ब्राह्मण के होते हैं। १८२। इस प्रमाणके अनुसार द्वादशगुण शब्द से धर्मादि को जानना होगा । उक्त द्वादश गुण युक्त ब्राह्मण का दोष प्रदर्शन करते हैं, वह अरविन्दनाभपदार विन्द विमुख है अर्थात् श्रीहरि चरण वहिर्मुखता दोष दुष्ट है । जिस महत् गुण से श्वपच श्रेष्ठ है, उस को कहते हैं, उसने अरविन्द नाभ श्रीकृष्ण में मन प्रभृति को अर्पण किया है । श्लोकोक्त 'ईहित' शब्द का अर्थ है,-- कायिक कर्म, उक्त भगवद् वहिर्मुख द्वादश गुण सम्पन्न ब्राह्मण से भगवदुन्मुख श्वपच का श्रेष्ठत्व का हेतु वर्णन करते हैं । पूर्व वर्णित श्वपच कुल को भी पवित्र करता है, अपर पक्ष में प्रचुरतर मायामय अहङ्कार विशिष्ट भगवद् वहिर्मुख ब्राह्मण निज को पवित्र करने में अक्षम है, कुल को पवित्र करना दूसरी बात है । कारण, भगवान् में भक्ति हीन जन का गुण—मायामय अहङ्कार उत्पन्न करता हैं, किन्तु चित्त शोधन नहीं करता है, अतएव भगवद् वहिर्मुख ब्राह्मण द्वादश गुण युक्त होने पर भी अतिशय हीन है । यहाँतक श्रीस्वामि पाद कृत टीका का अर्थ है ।

श्रीवोपदेव कृत मुक्ताफल की टीका में उक्त है कि—द्विषट् गुणाः--धनाभिजन प्रभृति द्वादश गुण हैं ।

अथवा, "शमोदमस्तपः शौचं क्षान्त्यार्जव विरक्तय ।
ज्ञान विज्ञान सन्तोषाः सत्यास्तिक्ये द्विषड् गुणाः ।।"१८३।।

अर्थात् शम, दम, तपस्या, शौच, क्षान्ति, सारल्य, विरक्ति, ज्ञान, (शास्त्रोत्थ) विज्ञान-(अनुभव) सन्तोष, सत्य, आस्तिक्य प्रभृति द्वादश गुणों का उल्लेख यहाँ पर है । यह है हेमाद्रिकृत टीका की व्याख्या स्कन्द पुराण के श्रीनारद वाक्य में उक्त है,—

'कुलाचार विहीनोऽपि दृढ़भक्तिजितेन्द्रियः ।
प्रशस्तः सर्व लोकानां नत्वष्टादश विद्यकः ।।
भक्तिहीनो द्विजः शान्तः सज्जाति धार्मिकस्तथा ।।" १८४।

कुल एवं आचार विहीन ज्ञान भी यदि दृढ़ भक्तिमान् एवं जितेन्द्रिय होता है, तो, वह जनसमाज

"ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा यदि वेतरः। विष्णुभक्तिसमायुक्तो ज्ञेयः सर्वोत्तमोत्तमः॥"१८५॥

**वृहन्नारदीये—**

"विष्णुभक्तिविहीना ये चण्डालाः परिकीर्त्तिताः। चाण्डाला अपि ते श्रेष्ठा हरिभक्तिपरायणाः॥"१८६।

**नारदीये च—**

"श्वपचोऽपि महीपाल विष्णोर्भक्तो द्विजाधिकः। विष्णुभक्तिविहीनो यो द्विजातिः श्वपचाधिकः॥"१८७

**अत्र मूलपद्ये "कुलं पुनाति" इत्युक्ते स्वं पुनातीति सुतरामेव सिद्धम्, यथोक्तम्** (भा० २।४।१८)

**"किरात-हूनान्ध्र पुलिन्द-पुक्कशा, आभीर-कङ्का यवनाः खसादयः।**

**येऽन्ये च पापा यदपाश्रयाश्रयाः, शुध्यन्ति तस्मै प्रभविष्णवे नमः॥"१८८॥ इति।**

**प्रह्लादः श्रीनृसिंहम्॥**

**१०१। अतएवाहुः** (भा० १०।२३।३९)—

---

के मध्य में प्रशंसनीय होता है। किन्तु अष्टादश शास्त्र विद्या में पारदर्शी सद्वंशसम्भूत, शान्त एवं धार्मिक ब्राह्मण भी यदि भक्तिहीन अजितेन्द्रिय होता है, तो वह प्रशंसनीय नहीं होता है।

काशी खण्ड में लिखित है— "ब्राह्मण क्षत्रियोवैश्यः शूद्रो वा यदि वेतरः।
विष्णु भक्ति समायुक्तो ज्ञेयः सर्वोत्तमोत्तमः॥"१७५॥

ब्राह्मण, क्षत्रिय, वैश्य, शूद्र अथवा अपर जातीय कोई भी व्यक्ति यदि विष्णु भक्ति युक्त होता है तो उसको निखिल उत्तम जन के मध्य में उत्तम जानना जाहिये। वृहन्नारदीय पुराण में उक्त है—

"विष्णु भक्ति विहीना ये चण्डालाः परि कीर्त्तिताः।
चण्डाला अपि ते श्रेष्ठा हरिभक्ति परायणाः॥१८६॥

जो लोक विष्णु भक्ति विहीन है। वे सब चाण्डाल नाम से अभिहित होते हैं। पक्षान्तर में, श्रीविष्णु चरण में भक्ति परायण चण्डाल श्रेष्ठ है। नारद पुराण में उक्त है—

"श्वपचोऽपि महीपाल विष्णोर्भक्तो द्विजाधिकः।
विष्णुभक्तिविहीनो यो द्विजातिः श्वपचाधिकः॥"१८७॥

हे महाराज! श्रीविष्णु भक्त श्वपच भी ब्राह्मण से श्रेष्ठ है। किन्तु श्रीविष्णु चरणों में भक्ति विहीन ब्राह्मण--श्वपच से अधम है। पूर्व वर्णित मूल पद्य में अर्थात् विप्राद्द्विषड्गुण युतात्" इत्यादि श्लोक में कथित है—भगवच्चरणों में भक्तिमान् श्वपच निज कुल को भी पवित्र करता है। अतएव निज को पवित्र कर सकता है, यह स्वतः प्रमाणित हुआ है

भा० २।४।१८ श्लोक में श्रीशुक ने कहा है—

"किरात-हूनान्ध्रपुलिन्द-पुक्कशा, आभीर-कङ्का यवनाः खसादयः।
येऽन्ये च पापा यदपाश्रयाश्रयाः, शुध्यन्ति तस्मै प्रभविष्णवे नमः॥"१८८॥

किरात, अन्ध्र, पुलिन्द, पुक्कशः आभीर शुह्म, यवन, एवं खस प्रभृति अतिनीच पापजातीय जन निकर, एवं अन्य जो सब लोक पाप कर्म्माचरण करते करते स्वयं साक्षात् पापमूर्त्ति हो गये हैं, वे सब भी श्रीभगवान के श्रीचरणाश्रित के आश्रित होकर अन्तर बाहर उभयतः ही पवित्रता को प्राप्त करते हैं। उन परम प्रभाव सम्पन्न, श्री भगवान् के श्रीचरणों में प्रणाम कर रहा हूँ।

श्रीप्रह्लाद—श्रीनृसिंह को कहे थे॥१००॥

(१०१) "धिग्जन्म नस्त्रिवृद्यत्तद्धिग्व्रतं धिग् बहुज्ञताम् ।
धिक् कुलं धिक् क्रिया-दाक्ष्यं विमुखा ये त्वधोक्षजे ॥" १८६॥

टीका च—"त्रिवृत् शौक्रं सावित्रं दैक्षमिति त्रिगुणितं जन्म, व्रतं ब्रह्मचर्य्यम्, क्रियाः कर्म्माणि दाक्ष्यञ्च" इत्यादिका । तथोक्तम् (भा० ४।३१।१०) "किं जन्मभिस्त्रिभिः" इत्यादि ॥ यज्ञिकविप्राः ॥

१०२ । श्रीभगवत्समर्पित-कर्म्मणोऽप्यनादरेण तु दर्शितम् (भा० ११।२।१४)-"तस्मादेकेन मनसा" इत्यादि । श्रीगीतोपनिषत्सु च भक्त्यसामर्थ्य एव तद्विहितम् (गी० १२।८-११) —

---

१०१ । अनन्तर भगवद् भक्ति वहिर्मुख ब्राह्मण अतिशय निन्दनीय है,—याज्ञिक ब्राह्मण गण, आत्म-धिक्कार करते करते उस विषय को भा० १०।२३।२६ में कहते हैं—

(१०१) "धिग्जन्म नस्त्रिवृद्यत्तद्धिग्व्रतं धिग्बहुज्ञताम् ।
धिक् कुलं धिक् क्रिया दाक्ष्यं विमुखा ये त्वधोक्षजे ॥" १८६॥

टीका—त्रिवृत्—शौक्रच सावित्रं दैक्षमिति जिगुप्सितं जन्म । व्रतं-ब्रह्मचर्य्यम् क्रियाः—कर्माणि, दाक्ष्यञ्च । क्रिया दाक्ष्यमित्येकं वा पदं । धिगित्यधिक्षेपे ये वयन्तु अधोक्षजे विमुखास्तेषां जन्मादि तत् सर्वं धिगिति व्यगर्हयन्नित्यर्थः ।

हम सब अधोक्षज श्रीकृष्ण में विमुख हैं,, भक्ति विहीन हैं, सुतरां हमारे शौक्रय सावित्र्य एवं दैक्ष्य तीन प्रकार जन्म को धिक्कार । अब तक हम सब जो ब्रह्मचर्य्य व्रत करते रहे हैं, उस व्रत को धिक् । बहु दर्शिता का जो अभिमान करते रहते हैं, उसको धिक् । यज्ञादि क्रिया का जो अनुष्ठान करते आ रहे हैं उस को धिक्कार, ब्राह्मण कुल में जन्म ग्रहण करने के कारण जो आत्म प्रशंसा करते रहते हैं, उस कुल को धिक्कार, अभी तक जो सब यज्ञादि अनुष्ठान करते आ रहे हैं, एवं उस कर्म में निपुणता के कारण जो अभिमान हुआ है, उस को भी शत शत धिक्कार । कारण, भगवच्चरणों में बहिर्मुख मानव वृन्द के द्वारा अनुष्ठित व्रत तपस्यादि कार्य्य केवल घोरतर आत्माभिमान में ही पर्य्यवसित होते हैं, अतः उक्त कर्मसमूह कभी भी निज निज फल प्रदान करने में सक्षम नहीं होते हैं ।

स्वामिपादकृत टीका का अभिप्राय यह है—त्रिवृत् शब्द से शौक्र जन्म अर्थात् विशुद्ध पिता मातासे जन्म, सावित्र जन्म—अर्थात् गायत्री जन्म, एवं दैक्ष--अर्थात् यज्ञ कर्म में दीक्षा ग्रहणानन्तर जो जन्म--यह त्रिविध जन्म को जानना चाहिये । व्रत का अर्थ—ब्रह्मचर्य्य है । क्रिया शब्द से कर्म को जानना होगा । एवं दाक्ष्य शब्द से निपुणता को जानना होगा । इस प्रकार स्वामि टीका की व्याख्या करके भा० ४।३१।१० में उक्त प्रचेतागण के प्रति श्रीनारदोक्ति का वर्णन करते हैं—

"किं जन्मभि स्त्रिभिर्वेह शौक्ल सावित्र याज्ञिकैः ।
कर्मभि र्वा त्रयीप्रोक्तैः पुंसोऽपि विबुधायुषा ॥"

टीका—शुक्ल सम्बन्धि जन्म, विशुद्ध माता पितृभ्यामुत्पत्तिः, सावित्र मुपनयनेन, याज्ञिकं दीक्षया । बिबुधानामिव दीर्घायुषापि ॥१०॥

जो कुछ भी साधन सम्पत्ति एवं गुण होते हैं, उस में यदि भगवत् सम्बन्ध नहीं होता है तो वे सब ही व्यर्थ होते हैं ।

याज्ञिक विप्रगण कहे थे ॥१०१॥

"मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्द्ध्वं न संशयः ।।१८०।।
अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय ।।१८१।।
अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ।
मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि ।।१८२।।
अथैतदप्यशक्तोऽसि कर्त्तुं मद्योगमाश्रितः ।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ।।"१८३।। इति ।

अत्र पाद्म-कार्त्तिकमाहात्म्येतिहासोऽनुसन्धेयः, यथा—"चोलदेशराजस्य कस्यचि द्विष्णुदास नाम्ना विप्रेण शुद्धमर्च्चनमेव कुर्वता सह कस्य पूर्वं भगवत् प्राप्तिः स्यादिति स्पर्द्धया बहून्

---

१०२। अनन्तर श्रीभगवत् समर्पित कर्म का अनादर पूर्वक भक्ति का अभिधेयत्व दिखाते हैं—भा० १।२।१४ में श्रीसूतने कहा है—

"तस्मादेकेन मनसा भगवान् सात्वतां पति ।
श्रोतव्यः कीर्त्तितव्यश्च ध्येयः पूज्यश्च नित्यदा ।।"

टीका—यस्माच्च भक्ति विहीनो धर्मः केवलं श्रम एव तस्मात् भक्ति प्रधान एव धर्मोऽनुष्ठेयः, इत्याह तस्मादिति । एकेन--एकाग्रेण मनसा ।।१४।।

हे मुनिवृन्द ! जब धर्मानुष्ठान के द्वारा केवल परिश्रम ही सार होता है, तब भक्ति अनुष्ठान करना ही कर्त्तव्य है । अतएव एकाग्र चित्त से भक्त प्रति पालक श्रीभगवान् की लीला कथा का सर्वदाश्रवण एवं कीर्त्तन करना एवं श्रीभगवान् का ध्यान करना, उनकी पूजा करना एकान्त कर्त्तव्य है ।

श्रीगीतोपनिषद् के १२।८--११ में कथित है कि, विशुद्ध भक्ति अनुष्ठान करने में अक्षम होने पर भगवदर्पित कर्म का अनुष्ठान करे ।

"मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्द्ध्वं न संशयः ।।१८०।।
अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय ।।१८१।।
अभ्यासेऽप्यसमर्थोऽपि मत्कर्मपरमो भव ।
मदर्थमपि कर्माणि कर्वन् सिद्धिमवाप्स्यसि ।।१८२।।
अथैतदप्यशक्तोऽसि कर्त्तुं मद्योगमाश्रितः ।
सर्वजर्मफलत्यागं ततः कुरु यतात्मवान् ।।"

टीका—यस्मान्मद्भक्तिरेव श्रेष्ठा तस्मात्त्वं भक्तिमेव कुर्विति तामुपदिशति मय्येवेति त्रिभिः । एवकारेण निर्विशेष व्यावृत्तिः । मयि श्यामसुन्दरे पीताम्बरे वनमालिनि, मन आधत्स्व—मत् स्मरणं कुर्वित्यर्थः । तथा मयि बुद्धि विवेकवतीं, निवेशय--मन्मननं कुर्वित्यर्थः । तच्चमननं ध्यान प्रतिपादक शास्त्र वाक्यानुशीलनं ततश्च मय्येव निवसिष्यसीतिच्छान्दसं, मत् समीप एव निवासं प्राप्स्यसीत्यर्थः ।८।

यज्ञान् भगवदर्पितानपि सुष्ठु विदधतो न भगवत् प्राप्तिरभूत् । किन्तु विप्रस्य भगवत्प्राप्तौ दृष्टायां तान् परित्यज्य—

साक्षात् स्मरणासमर्थं प्रति प्राप्त्युपायमाह । अथेति । अभ्यास योगेन, अन्यत्रान्यत्र गतमपि मनः पुनः पुनः प्रत्यहृत्य मद्रूप एव स्थापनमभ्यासः स एव योगस्तेन प्राकृतत्वादिति कुत्सित् रूपरसादिषु चलत्या मनोनद्यास्तेषु चलनं निरुध्य अति सुभद्रेषु मदीयरूप रसादिषु तच्चलनं शनैः शनैः सम्पादय इत्यर्थः । हे धनञ्जयेति । बहून् शत्रून् जित्वा धनमाहृतवता त्वया मनोऽपि जित्वा ध्यानधनं ग्रहीतुं शक्यमेव इति भावः ॥९॥

अभ्यासेऽपीति । यथा पित्त दूषिता रसना मत्स्यण्डिकां नेच्छति । तथैवाविद्या दूषितं मनः त्वद्रूपादिकं मधुरमपि न गृह्णातीत्यतस्तेन दुर्ग्रहेण महाप्रबलेन मनसा सहयोद्धुं मयनैव शक्यते इति मन्यसे चेदिति--भावः । मत् कर्माणि परमाणि यस्य सः । कर्माणि मदीय श्रवण कीर्त्तन वन्दनार्चन मन्मन्दिर मार्जनाभ्युक्षण पुष्पाहरणादि परिचरणानि कुर्वन् विनापि मत्स्मरणं सिद्धिं प्रेमवत् पार्षदत्व लक्षणां प्राप्स्यसीति ।१०।

एतदपि कर्त्तुमशक्तश्चेत्तर्हि मत्योगमाश्रितः, मयि सर्व कर्म समर्पणं मद् योगस्तमाश्रितः सन् । कुरु । सर्वं कर्म फलत्यागं प्रथम षष्ठोक्तं कुरु । अयमर्थः । प्रथमषष्ठे भगवदर्पित निष्कर्मयोग एव मोक्षोपाय उक्तः । द्वितीय षष्ठेऽस्मिन् भक्तियोगे एव भगवत् प्राप्त्युपाय उक्तः । स च भक्ति योगो द्विविधः । भगवन्निष्ठोऽन्तः करण व्यापारो वहिष्करण व्यापारश्च । तत्र प्रथम स्त्रिविधः,--स्मरणात्मक मननात्मकश्च । अखण्ड स्मरणासामर्थ्ये तदनुरागिणां । तदभ्यास रूपश्च इति त्रिक एवायं मन्दधियां दुर्गमः सुधियां निरपराधानान्तु सुगम एव । द्वितीयः—श्रवण कीर्त्तनात्मकस्तु सर्वेषामेव सुगम एवोपायः । एवमुभयोपाय-वन्तोऽनधिकारिणः सर्वतः प्रकृष्टाः द्वितीय षष्ठेऽस्मिन्नुक्ता । एतत् कृत्यसमर्थाः इन्द्रियाणां भगवन्निष्ठी कृत्य श्रद्धालवश्च भगवदर्पित निष्कामकर्मिणः प्रथम षष्ठोक्ताधिकारिणोऽस्मान्निकृष्टा एवेति ॥११॥

हे अर्जुन ! मेरी कृपा से मेरे भक्तवृन्द, अनायाससिद्धि लाभ करते हैं। अतएव तुम सङ्कल्प विकल्पात्मक मनको मुझ में स्थिर भाव से स्थापन करो, अर्थात् जागतिक विषय को लक्ष्य करके सङ्कल्प विकल्प न करके मेरे सम्बन्ध में सङ्कल्प विकल्प करने से मेरा सन्तोष होता है। तुम तुम्हारी व्यवसायात्मिका बुद्धि का निवेश मुझ में करो । अर्थात् मेरा सन्तोष कर,असन्तोष कर कार्य्य को विचारकर जिस में मेरा सन्तोष होत है, उस प्रकार कार्य्य ही करो । इस प्रकार से मदीय विषय में सर्वदा अनुशीलन करते करते श्रीभगवद् भजन करना ही एकमात्र कर्त्तव्य है, श्रीभागवत् प्राप्ति ही परम पुरुषार्थ है इत्यादि प्रकार सम्यक् ज्ञान लाभ होगा । इस अवस्था में देह त्याग के पश्चात् तुम मेरे समीप में अवस्थान करोगे । इस में अणुमात्र भी संशय नहीं है । किन्तु हे धनञ्जय ! यदि स्थिर भावसे चित्त धारण करने में तुम अक्षम होते हो, तो, विक्षिप्त चित्त को वारम्बार संयत करके मेरा निरन्तर स्मरण रूप योग का अभ्यास करो। इस रीति से तुम मुझ को प्राप्त करोगे ।

यदि तुम उस प्रकार स्मरण करने में अक्षम होते हो, तो, एकादशी व्रत प्रभृति का अनुष्ठान करो, अर्चन एवं नाम सङ्कीर्त्तन प्रभृति जिस कर्म के द्वारा मेरी प्रसन्नता होती है, एकाग्र मनसे उस कर्म समूह का अनुष्ठान करो, केवल मदीय सन्तोष के निमित्त ही कर्म कर रहे हो, तज्जन्य तुम अवश्य ही मुक्त हो जाओगे । यदि तुम उस प्रकार मदीय प्रीति कर कार्य्य करने में असमर्थ होते हो तो, मेरी शरणापन्न होकर संयत चित्त से नित्यनैमित्तिक कम समूह का फल परित्याग करो। तात्पर्य्य यह है कि, वर्ण एवं आश्रमोचित कार्य्य करना ईश्वरीय आदेश हैं, इस हेतु मैं कह रहा हूँ। किन्तु उक्त कर्म समूह के दृष्ट एवं अदृष्ट फल समूह ईश्वराधीन हैं, इस विषय में मेरा कुछ भी कर्त्तृत्व नहीं है। इस प्रकार भावयुक्त होकर

'यत्स्पर्द्धया मया चैतद्यज्ञदानादिकं कृतम् । स विष्णुरूपधृग्विप्रो याति वैकुण्ठमन्दिरम् ॥१९४॥

तस्माद्यज्ञैश्च दानैश्च नैव विष्णुः प्रसीदति । भक्तिरेव परं तस्य निदानं तोषणे मतम् ॥१९५॥

इति मुद्गल प्रत्युक्त्वा,

विष्णौ भक्तिं स्थिरां देहि मनोवाक्कायकर्मणा । त्रिरुच्चैर्व्याजहारासौ होमकुण्डाग्रतः स्थितः ॥''१९६॥

इत्युक्त्वा शुद्धभक्तिशरणतामेव मुहुर्दैन्येनाङ्गीकृत्य होमकुण्डे देहं त्यजतः पश्चादेव तत्प्राप्तिः " इति।

योगानादरेणाह (भा० १०।५१।६०)—

(१०२) ''युञ्जानानामभक्तानां प्राणायामादिभिर्मनः ।

अक्षीणवासनं राजन् दृश्यते क्वचिदुत्थितम् ॥''१९७॥

उत्थितं विषयाभिमुखम् ॥ श्रीभगवान् मुचुकुन्दम् ॥

---

निखिल कर्म्म फलासक्ति को परित्याग करो, ऐसा करने पर तुम मेरी प्रसन्नता को प्राप्त करोगे।

गीतोक्त वाक्य समूह से प्रतीत होता है कि—विशुद्ध भक्ति का अनुष्ठान करने में अक्षम होने से भगवदर्पित कर्म करना कर्त्तव्य है। वस्तुत विशुद्ध भक्ति अनुष्ठान ही भगवत् प्राप्ति का श्रेष्ठ उपाय है।

यहाँपर पद्म पुराणीय कार्त्तिक माहात्म्य का इतिहास अनुसन्धेय है। चोलदेश के अधिपति शुद्ध अर्च्चनाङ्ग भक्ति का अनुष्ठान कारी विष्णु दास नामक विप्रके सहित स्पर्द्धा करके अनेक यज्ञादि कर्मानुष्ठान किये थे। और किस की भगवत् प्राप्ति पहले होगी, इस विषय में आग्रह परायण हो गये थे। किन्तु उक्त ब्राह्मण की भगवत् प्राप्ति अनायास हो गई थी, यह देखकर भगवदर्पित कर्म समूह को परित्याग पूर्वक राजा ने कहा,—

''यत् स्पर्द्धया मया चैतद् यज्ञ ज्ञानादिकं कृतम् ।
स विष्णु रूपधृग् विप्रो याति वैकुण्ठ मन्दिरम् ॥१९४॥
तस्मात् यज्ञैश्च दानैश्च नैव विष्णुप्रसीदती ।
भक्तिरेव परं तस्य निदानं तोषणे मतम् ॥१९५॥

मैंने स्पर्द्धा से यज्ञ दानादि कर्म किया था, उस से विष्णु प्रसन्न नहीं होते हैं, भक्ति अनुष्ठान से विष्णु प्रसन्न होते हैं, भक्ति अनुष्ठान कारी ब्राह्मण का वैकुण्ठ लाभ सब से पहले हुआ। राजाने मुद्गल को उस प्रकार कहा, एवं होम कुण्ड के समीप में स्थित होकर इस प्रकार वाक्य उच्चारण करते करते होमकुण्ड में देहत्याग किया।

''विष्णौ भक्तिं स्थिरां देहि मनोवाक् कायकर्मणा ।
त्रिरुच्चैर्व्याजहारासौ होमकुण्डाग्रतः स्थितः ॥१९६॥

इत्युक्त्वा शुद्धभक्तिशरणतामेव मुहुर्दैन्येनाङ्गीकृत्य होमकुण्डे देहं त्यजतः पश्चादेव तत् प्राप्तिः ॥

मुझ को भक्ति प्रदान करो, तीनवार इस वाक्य को उच्चारण करके होमकुण्ड में देह त्याग किया, एवं पश्चात् भक्ति लाभ किया।

अनन्तर योग अनादर के द्वारा भक्ति का अभिधेयत्व स्थापन करते हैं। भा० १०।५१।६०

(१०२) ''युञ्जानानामभक्तानां प्राणायामादिभिर्मनः ।
अक्षीणवासनं राजन् दृश्यते क्वचिदुत्थिम् ॥'' १९७॥

टीका—व्यतिरेकमाह। युञ्जानानामिति। उत्थितम् विषयाभिमुखम्।''

श्रीभगवान् मुचुकुन्द महाराज के निकट भक्ति हीन जन वृन्द की निन्दा के प्रसङ्ग कहे थे। जो सब

१०३ । तथा (भा० १।६।३६)—

(१०३) "यमादिभिर्योगपथैः कामलोभहतो मुहुः ।
मुकुन्दसेवया यद्वत्तथाद्धात्मा न शाम्यति ।।"१६८।।

ततः सुतरामेव (भा० ११।१४।२०) "न साधयति मां योगः" इत्यादिकमिति भावः ।। श्रीनारदो श्रीव्यासम् ।।

१०४ । अथ ज्ञानानादरेणाप्युदाह्रियते । तत्र तस्य कृच्छ्रसाध्यत्वेनानादरो दर्शित एव

---

भक्ति हीन जनगण, केवल मात्र प्राणायाम प्रभृति साधन के द्वारा निज निज मन को संयत करते रहते हैं ? वासना क्षीण न होने के कारण, उनके मन विषय में धावित होते रहते हैं । श्लोकस्थ उत्थित पद का अर्थ विषयके प्रति धावित होना है ।

श्रीभगवान् श्रीमुचुकुन्द के प्रति कहे थे ।।१०२।।

१०३ । भा० १।६।३६ में उक्त है—

(१०३) "यमादिभिर्योगपथैः कामलोभहतो मुहुः ।
मुकुन्दसेवया यद्वत्तथाद्धात्मा न शाम्यति ।।"१६८।।

टीका—एतदेवेत्युक्तमवधारणमनुभवेन द्रढ़यति । यमादिभिस्तथा न शाम्यति, यथा मुकुन्द सेवया अद्धा साक्षात् आत्मा मनः शाम्यति । कथञ्चिन्मुकुन्दसेवा मात्रेण शाम्यति किं पुन स्तद् गुणवर्णनेति भावः ।

देवर्षि नारद भी वेद व्यास के निकट उस प्रकार ही कहे हैं—हे महर्षे ! अनुक्षण काम क्रोध लोभ प्रभृति षड़् रिपु कर्त्तृक अभिभूत आत्मा, श्रीमुकुन्द की सेवा के द्वारा जिस प्रकार साक्षात् रूप से शान्ति लाभ करता है, यम नियम प्रभृति योग साधन के द्वारा उस प्रकार शान्ति लाभ नहीं कर सकता है । तज्जन्य ही श्रीभगवान् निज प्रियभक्त श्रीउद्धव के निकट कहे थे । भा० ११।१४।२०

"न साधयति मां योगो न साङ्ख्यं धर्म उद्धव ।
न स्वाध्यायस्तपस्त्यागो यथा भक्ति र्ममोर्जिता ।।

टीका—अत एवम्भूतं श्रेयोनान्यदस्तीत्याह न साधयतीतिद्वाभ्याम् ।

परम शक्तिमती मद्विषयिणी विशुद्धा भक्ति व्यतीत—योग, साङ्ख्य धर्म, वेदाध्ययन तपस्या एवं वैराग्य प्रभृति साधन समूह मुझ को सन्तुष्ट नहीं कर सकते हैं । यह ही पूर्वोक्त प्रतिज्ञा वाक्य की तात्पर्य व्याख्या है ।

श्रीनारद श्री वेदव्यास को कहे थे ।।१०३।।

१०४ ।। सम्प्रति ज्ञान साधन को अनादर करके भक्ति का अभिधेयत्व का निर्द्धारण कर रहे हैं ।—तद्विषय में प्रथमतः यह प्रतिपन्न हुआ है कि—ज्ञान साधन, अतीव कष्ट साध्य होने के कारण, उसका आदर कोई नहीं करते हैं । इस विषय में भा० ३।५।४५—४६ श्लोकद्वय को उदाहरण रूप में प्रस्तुत करते हैं—

"तान् वै ह्यसद् वृत्तिभिरक्षिभिर्ये पराहृतान्तर्मनसः परेशः ।
अथोनपश्यन्त्युरुगाय नूनं ये ते पदन्यास विलास लक्ष्म्याः ।।४५।।
पानेन ते देव कथासुधायाः प्रवृद्धभक्त्या विशदाशया ये ।
वैराग्य सारं प्रतिलभ्य बोधं यथाञ्जसान्वीयुरकुण्ठधिष्ण्यम् ।।०६।।

टीका—ननुयदि हृदिस्थत्यापि पदाब्जं केषाञ्चित् सुदुरं तर्हि अन्येषामपि तथैवस्यात्, अविशेषादित्याशक्त्याहुः । तानिति । असद्वृत्तिभिर्बहिर्मुखैः अक्षिभिरिन्द्रियैः पराहृतं दूरमपहृतं अन्तस्थं मनोयेषां ते,

(भा० ३।५।४५-४६) "पानेन ते देव कथासुधायाः" इत्यादिभ्याम् । तथोक्तं श्रीकुमारोपदेशे (भा० ४।२२।४०) "कृच्छ्रो महान्" इत्यादि, श्रीगीतासु च (१२।१-५) "अर्ज्जुन उवाच-

एवं सततयुक्ता ये भक्तास्तां पर्य्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥१९९॥

---

अथो अतएव ते नूनं तान् न पश्यन्ति । वे प्रसिद्धम् । कुत, पुनस्तेषां तत्सङ्गः स्यात् । कान् ? ते तव पदन्यासोगमनं, तस्य विलासो विभ्रमस्तस्य लक्ष्मीः शोभा तस्या ये । तल्लीलाकथनादिभिः शोभमानास्त्वद् भक्तानित्यर्थः । पथ इति लक्ष्म्या इति च पाठे त्वत् पदन्यास विलासो लक्ष्यो येषाम् तान् पथः तन्मार्गभूतान् सतः, मार्गान् वा श्रवणादीन् न पश्यन्तीत्यर्थः । यद्वा ये एवम्भूता भागवतास्ते तानुन्मत्तान् नूनं नैव पश्यन्तीत्यन्वयः । सत्सङ्गा भावेन ह रकथा श्रवणाभावात् । हृदिस्थितमपि तेषां सुदुरमिति भावः ।४५।।

एतदेवस्फुटयन्ति पानेनेति द्वाभ्याम् । वैराग्यंसारो बलं यस्य तं लब्ध्वा अन्वीयुः प्राप्नुयुः । अकुण्ठ-धिष्ण्यं वैकुण्ठलोकम् ॥४६॥

श्रीभगवान् की कथा सुधा का पान करते करते पवित्र भक्ति लाभ करके जो लोक पवित्र चित्त के हुए है, वे सब वैराग्य सार रूप ज्ञान लाभ करके अति अनायास श्रीवैकुण्ठ लोक को प्राप्त करते हैं । और जो लोक मनःस्थैर्य्यरूप योगानुष्ठान के द्वारा परम बलवती प्रकृति को पराजित करके परमात्म स्वरूप को प्राप्त करने की चेष्टा करते हैं, उनको केवल परिश्रम फल ही मिलता है । श्रीभगवत् सेवा रूपा भक्ति में उस प्रकार परिश्रम लाभ नहीं होता है । श्रीसनत् कुमार श्रीपृथुमहाशय के निकट उपदेश प्रदान प्रसङ्ग कहे थे—भा० ४।२२।४०

"कृच्छ्रो महानिह भवार्णवमप्लवेशां षड्वर्गनक्रमसुखेन तितीरषन्ति ।
तत् त्वं हरेर्भगवतो भजनीयमङ्घ्रि कृत्वोड़ुपं व्यसनमुत्तर दुस्तरार्णम् ॥"

टीका—ननु ब्रह्मविदाप्नोति परमिति श्रुतेः, कथं यतयोनोद्ग्रयन्तीत्युच्यते ? तत्राह कृच्छ्र इति । अप्लवेशां—न प्लव स्तरणे हेतुः, ईट् ईशो येषां, तेषां महान् इह तरणे कृच्छ्रः क्लेशः । ते हि असुखेन योगादिना इन्द्रिय षड़्वर्ग ग्राहं भवार्णवं तितीर्षन्ति । तत् तस्मात् उड़ुपं प्लवम् । दुस्तरार्णवमित्यर्थः । अर्ण शब्दे 'व' काराभाव आर्षः । यद्वा दुस्तरोदक रूपं व्यसनमित्यर्थः ॥४०॥

हे महाराज ! यदि कहे कि—यति समूह ब्रह्मविद्या द्वारा कर्म ग्रन्थि भेदन करने में सक्षम होते हैं । कारण, श्रुति में उक्त है—"ब्रह्मविदाप्नोति परम्" अथापि वे सब सुख पूर्वक संसार उत्तीर्ण होने में सक्षम नहीं होता हैं । कारण, जो सब यतिवर्ग, भवसमुद्र उत्तारण के निमित्त एकमात्र उपाय स्वरूप श्रीभगवान् के श्रीचरण युगल को अवलम्बन नहीं करते हैं, उनको अतिशय क्लेश प्राप्त करना पड़ता है । कारण, भवसमुद्र में काम क्रोधादि षट् नक्र सर्वदा विद्यमान हैं । तज्जन्य यह अतीव भीषण है । श्रीभगवान् में भक्ति हीन यतिगण योगादि साधन के द्वारा अत्यन्त दुःख से एवम्भूत समुद्र उत्तोरण की इच्छा मात्र ही करते रहते हैं । किन्तु कभी उत्तीर्ण होने में समर्थ नहीं होते हैं । अतएव हे नृप ! भजनीय श्रीभगवान् के जो श्रीचरण युगल हैं, उनको प्लवरूप में ग्रहण कर तुम, यह भव समुद्र पूर्वक उत्तीर्ण हो जाओ । भक्ति व्यतीत अन्यसाधनसमूह केवल दुःखमय है, इसका कथन प्रस्तुत श्लोक में हुआ है ।

श्रीगीता शास्त्र के द्वादशाध्याय के प्रथम पाँच श्लोक में उक्त प्रसङ्ग का वर्णन हुआ है-अर्ज्जुन उवाच-

एवं सततयुक्ता ये भक्तास्त्वां पर्य्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥१९९॥

श्रीभगवानुवाच—

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥२००॥
ये त्वक्षरमनिर्द्देश्यमव्यक्तं पर्य्युपासते ।
सर्वत्रगमचिन्त्यञ्च कूटस्थमचलं ध्रुवम् ॥२०१॥
संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥२०२॥
क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ताहि गतिर्दुःखं देहवद्भिरवाप्यते ॥"२०३॥ इति ।

भक्तिमार्गे तु श्रमो न स्यात्, तद्वशीकारितारूपं फलञ्चापूर्वमित्याह (भा० १०।१४।३) –

---

श्रीभगवानुवाच— मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्त मे युक्ततमा मताः ॥२००॥
ये त्वक्षरमनिर्द्देश्यमव्यक्तं पर्य्युपासते ।
सर्वत्रगमचिन्त्यञ्च कूटस्थमचलं ध्रुवम् ॥२०१॥
संनियम्येन्द्रियग्रागं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥२०२॥
क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुखं देहवद्भिरवाप्यते ॥"२०३॥

टीका— द्वादशे सर्वभक्तानां ज्ञानिभ्यः श्रैष्ठ्यमुच्यते ।
भक्तेष्वपि प्रशस्यन्ते येऽद्वेषादि गुणान्विताः ॥
भक्ति प्रकरणस्योपक्रमे "योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।
श्रद्धावान् भजते यो मां स मेयुक्त तमो मतः ॥" इति

भक्तेः सर्वोत्कर्षो यथाश्रुतः, तथैवोपसंहारेऽपि तस्या एवं सर्वोत्कर्ष श्रोतु कामः पृच्छति । एवं सतत युक्ता, मत्कर्म्मकृन्मत् परम इति तदुक्त लक्षणा भक्तास्त्वां श्यामसुन्दराकारं ये पर्य्युपासते ये चाव्यक्तं निर्विशेषं अक्षरं एतद्वैतदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वं, इत्यादि श्रुत्युक्तं ब्रह्म उपासते । तेषामुभयेषां योगविदां मध्ये के ऽतिशयेन योग विदश्च त्वत् प्राप्तौ श्रेष्ठमुपायं जानन्ति न लभन्ते वा ते योगवित्तया इति वक्तव्ये योगवित्तमा इत्युक्तिर्योगविदाराणामपि बहूनां मध्ये के योग वित्तमा इत्यर्थं बोधयति ।

अर्जुन बोले—हे कृष्ण तुमने अबतक जो कुछ उपदेश दिया, उस से मैं समझा कि—योगी दो प्रकार हैं, प्रथम योगी वह है, जो अनन्य भक्ति के द्वारा निर्म्मलान्तः करण से तुम्हारी उपासना करता है, द्वितीय वह है—जो अव्यक्त, अक्षर स्वरूप में आध्यात्मिक योगावलम्बन से मेंरून धारण करता है । इन दोनों के मध्य में श्रेष्ठ योगी कौन है ? उत्तर में श्रीभगवान् बोले—

टीका—"तत्र मद् भक्ताः श्रेष्ठा इत्याह, मयि श्यामसुन्दराकारे मन आवेश्य आविष्टं कृत्वा नित्ययुक्ता मन्नित्य योगकाङ्क्षिणः परया गुणातीतया श्रद्धया । यदुक्तं सात्त्विक्याध्यात्मिकीश्रद्धा कर्म श्रद्धातु राजसी ।

(१०४) "ज्ञाने प्रयासमुदपास्य नमन्त एव
जीवन्ति सन्मुखरितां भवदीय--वार्त्ताम् ।

---

तामस्यधर्मे या श्रद्धा मत्सेवायान्तु निर्गुणा इति ते मे मदीया अनन्य भक्ता युक्ततमा योग वित्तमा इत्यर्थः । तेनानन्य भक्तेभ्योन्यूना अन्ये ज्ञान कर्मादि मिश्र भक्तिमन्तो योग वित्तरा इत्यर्थोऽभिव्यञ्जितो भवति । ततश्च ज्ञानाद् भक्तिः श्रेष्ठा भक्तावप्यनन्य भक्तिः श्रेष्ठा इत्युपपादितम् ।।२।।

निर्गुण श्रद्धा के सहित समस्त जीवन को भक्तिमय करके जिन्होंने मुझ में मनोनिवेश किया है, वह भक्त व्यक्ति ही योगिवृन्द की अपेक्षा श्रेष्ठ है ।।२।।

टीका—"मदीय निर्विशेष ब्रह्मस्वरूपोपासकास्तु दुःखित्वात्ततो न्यूना, इत्याह येत्विति द्वाभ्यां । अक्षरं ब्रह्म, अनिर्द्देश्यं शब्देन व्यपदेष्टुमशक्यं यतोऽव्यक्तं रूपादि हीनं सर्वत्रगं सर्वदेश व्यापि अचिन्त्यं तर्कागम्यं, कूटस्थं सर्वकालव्यापि, एकरूपतया तु यः कालव्यापी स कूटस्थ इत्यमरः । अचलं, वृद्धयादि रहितं, ध्रुवं, नित्यं, मामेवेति । अक्षरस्य तस्य मत्तो भेदाभावात् । ३।४।

जो लोक, इन्द्रिय वर्ग को नियन्त्रित करके सब के प्रति समदर्शन होकर समस्त प्राणिवृन्द के हित हेतु रत होकर मेरा अक्षर, अनिर्देश्य, अव्यक्त, सर्वगत, अचिन्त्य, कूटस्थ, अचल, ध्रुव, एवं निर्विशेष स्वरूप की उपासना करते हैं। वे सब अत्यन्त क्लेश से मुझ को प्राप्त करते हैं, मुझ को छोड़कर और द्वितीय उपास्य वस्तु नहीं है । ३।४

टीका—तर्हि केनांशे तेषामपकर्ष स्तत्राह क्लेश इति । न केनापि व्यजते इत्यव्यक्तं ब्रह्म, तत्रैव सक्त चेतसां तदेवानुबुभूषूणां तेषां तत् प्राप्तौ क्लेशोऽधिकतरः । हि यस्मात् अव्यक्ता गतिः, केनापि प्रकारेण, व्यक्ति र्भवति सा गतिर्देहवद्भि जीवै र्दुःखं यथा भवत्येवं अवाप्यते । तथाहि इन्द्रियाणां शब्दादि ज्ञान विशेष एव शक्तिः,नतु विशेषेतर ज्ञाने इति अतः इन्द्रिय निरोधः,तेषां निर्विशेषज्ञानोमिच्छतां अवश्यकर्त्तव्य एव । इन्द्रियाणां निरोधस्तु स्त्रोतस्वतीनामिवनिरोध दुष्कर एव । यदुक्तं सनत् कुमारेण । यत् पादपद्म पलास विलास भक्त्या, कर्माशयं ग्रथितमुद्ग्रथयन्ति सन्तः । तद्वन्नरिक्त मतयो यतयो निरुद्ध स्त्रोतोगणास्तमरणं भज वासुदेवम् । क्लेशोमहानिहभवार्णवमप्लवेशं षड् वर्ग नक्रमसुखेन तितीर्षयन्ति । तत् त्वं हरेर्भगवतो भजनीयमङ्घ्रि कृत्वोडुपं व्यसनमुत्तर दुस्तरार्णं । इति तावताक्लेशेनापि सा गति र्यद्यवाप्यते तदपि भक्ति मिश्रेणैव । भगवति भक्तिं विना केवल ब्रह्मोपासकानान्तु केवल क्लेश एव लाभो नतु ब्रह्म प्राप्तिः । यदुक्तं ब्रह्मणा, तेषामसौ क्लेशल एव शिष्यते नान्यत् यथा स्थूल तुषावघातिनाम् । इति ।।५।।

भक्त योगी, अति अनायास से परात्पर वस्तु का अनुशीलन करके भगवान् को प्राप्त करते हैं, किन्तु ज्ञान योगी-अव्यक्त तत्त्व में परिनिष्ठित होकर केवल क्लेशलाभ करते हैं, फल प्राप्ति में भी निश्चयता नहीं है, प्रत्युत दुःख ही सार होता है । जीव नित्य चिन्मय वस्तु है, अव्यक्त अवस्था में लीन होने से उस की स्वरूप हानि होती है । भक्ति योग ही मङ्गलमय है, स्वतन्त्र रूप से ज्ञान योग के अनुष्ठान से अमङ्गल उत्पन्न होता है, अतएव निराकार, निर्विकार, सर्वव्यापि एवं निर्विशेष स्वरूप की उपासना करके जो अध्यात्मयोग साधित होता है, वह फलतः क्लेश पर्य्यवसायी होने के कारण प्रशस्त नहीं है ।५।

श्रीभगवद् गीता के कतिपय वचनों के द्वारा बोध होता है कि— भक्ति मार्ग ही एकमात्र प्रशस्त मार्ग है, कारण, भक्तिमार्ग में श्रम नहीं है, किन्तु ज्ञान मार्ग में बहुतर क्लेश भोगना पड़ता है, विशेषतः भक्ति साधन की यहाँतक सामर्थ्य है कि— वह श्रीभगवान् को भी वशीभूत करता है । उक्त भगवद् वशीकारित्व ही विशुद्ध भक्ति का मुख्य फल है । भा० १०।१४।३ श्रीब्रह्माने कहा भी है—

(१०४) "ज्ञाने प्रयासमुदपास्य नमन्त एव
जीवन्ति सन्मुखरितां भवदीय--वार्त्ताम् ।

स्थाने स्थिताः श्रुतिगतां तनुवाङ्मनोभि-
र्ये प्रायशोऽजित जितोऽप्यसि तैस्त्रिलोक्याम् ॥" २०४॥

उदपास्य ईषदप्यकृत्वा, स्थाने सतां निवास एव स्थिताः सन्मुखरितां सद्भिर्मुखरितां स्वत एव नित्यं प्रकटितां भवदीयवार्त्ता तत्सन्निधिमात्रेण स्वत एव श्रुतिगतां श्रवणं प्राप्ताम्, प्रायशो बाहुल्येन तनु-वाङ्मनोभिर्नमन्तः सत्कुर्वन्तो ये जीवन्ति केवलम्, यद्यपि नान्यत् कुर्वन्ति, तैः प्रायश-स्त्रिलोक्यामन्यैरजितोऽपि त्वं जितोऽसि वशीकृतोऽसि । अतएवोक्तं श्रीनृसिंहपुराणे—

'पत्रेषु पुष्पेषु फलेषु तोये, ष्वक्रीतलभ्येषु सदैव सत्सु ।
भक्त्या सुलभ्ये पुरुषे पुराणे, मुक्तौ किमर्थं क्रियते प्रयत्नः ?" २०५॥ इति ॥

---

स्थाने स्थिताः श्रुतिगतां तनुवाङ्मनोभि-
र्ये प्रायशोऽजित जितोऽप्यसि तैस्त्रिलोक्याम् ॥"२०४॥

टीका—"तर्हि अज्ञाः कथं संसारं तरेयुः, अतआह ज्ञान इति । उदपास्य ईषदप्यकृत्वा, सद्भिर्मुखरितां स्वत एव नित्यं प्रकटितां, भवदीय वार्त्तां, स्वस्वस्थान एव स्थिताः, तत् सन्निध नमात्रेण स्वतएव श्रुतिगतां श्रवणं प्राप्तां, तनुवाङ् मनोभि र्नमन्तः—सत् कुर्वन्तो ये जीवन्ति, केवलं यद्यपि नान्यत् कुर्वन्ति तैः, प्रायशः त्रिलोक्याम्—अन्यैरजितोऽपि त्वं जितः प्राप्तोऽसीति किं ज्ञान श्रमेणेत्यर्थः ॥

हे अजित ! जिन्होंने स्वरूप ज्ञान प्राप्ति हेतु किञ्चिन्मात्र प्रयास न करके कृताञ्जलि पूर्वक महत् के समीप में अवस्थान पूर्वक स्वतः ही श्रुतिगत महत् मुखरित भवदीय कथा श्रवण को जीवातु किया है, उस महाभाग्यवान् भक्तवृन्द त्रिभुवन के मध्य में अप्राप्य होने के कारण 'अजित' नाम से ख्यात आप को काय, वाक्य, मन के द्वारा वशीभूत करते हैं । अथवा उक्त महापुरुष गण, निज काय, वाक्य, मन के द्वारा, आप को वशीभूत करते हैं । उक्त श्लोक की व्याख्या करते हैं—

'उदपास्य" अर्थात् स्वल्पमात्र भी प्रयास न करके । 'स्थाने' अर्थात् महात्मा वृन्द के निवास स्थान में स्थित होकर । साधुगण कर्त्तृक मुखरित अर्थात् उनके मुख से नित्य ही स्वतः श्रीभगवान् की गुण लीलादि कथा प्रकटित हो रही है । कारण, वे सब, श्रीभगवद् गुणादि कीर्त्तन व्यतीत क्षण काल भी अति वाहित नहीं करते हैं । सुतरां उनके निकट में गमन मात्र से ही अनायास आगन्तुक के कर्णकुहर में भगवद् गुणानुवाद प्रविष्ट होता है । 'प्रायशः" बहुल रूप से । तनु मन एवं वाणी के द्वारा नमस्कार करते करते । तीन प्रकार श्रीहरि कथा का सम्मान होता है । श्रवण समय में अञ्जलि बन्ध के द्वारा, साधु, साधु शब्दोच्चारण के द्वारा, एवं आस्तिकय बुद्धि के द्वारा । इस प्रकार अनुशीलन कर जो लोक जीवित रहते हैं, वे सब कुछ भी साधन न करने पर भी त्रिभुवन में अपराजेय 'अजित' नाम से ख्यात आप उन सब भक्त वृन्द के द्वारा पराजित होते हैं । अर्थात् आप उन सब के निकट वशीभूत होकर रहते हैं । अतएव श्रीनृसिंह पुराण में उक्त है—

"पत्रेषु पुष्पेषु फलेषु तोये,-ष्वक्रीतलभ्येषु सदैव सत्सु ।
भक्त्या सुलभ्ये पुरुषे पुराणे, मुक्तौ किमर्थं क्रियते प्रयत्नः ?"२०५ ॥

जगत् में पत्र, पुष्प, फल एवं जल प्रभृति वस्तु लाभ जब विना मूल्य से अनायास होते हैं, एवं पुराण पुरुष श्रीभगवान् भी एक मात्र भक्ति से ही वशीभूत होते हैं, तब मुक्ति लाभ हेतु वृथा परिश्रम करने का

१०५। वस्तुतस्तु (भा० १०।१४।४)

(१०५) "श्रेयःसृतिं भक्तिमुदस्य ते विभो
क्लिश्यन्ति ये केवलबोधलब्धये।
तेषामसौ क्लेशल एव शिष्यते
नान्यद्यथा स्थूल-तुषावघातिनाम् ॥"२०६॥

टीका च—"भक्तिं विना च ज्ञानं नैव सिद्धयतीत्याह--श्रेय इति। श्रेयसामभ्युदयापवर्गलक्षणानां सृतिः सरणं यस्याः सरस इव निर्झराणां ताम्, ते तव भक्तिमुदस्य त्यक्त्वा

---

प्रयोजन ही क्या है ? इस से प्रतिपन्न होता है कि—भक्ति मार्ग में स्वल्प मात्र भी परिश्रम नहीं है ॥१०४॥

१०५। भा० १०।१४।४ श्रीब्रह्माने श्रीकृष्ण को वास्तविक तत्त्व कहा है—

(१०५) "श्रेयःसृतिं भक्तिमुदस्य ते विभो
क्लिश्यन्ति ये केवलबोधलब्धये।
तेषामसौ क्लेशल एव शिष्यते
नान्यद्यथा स्थूल-तुषावघातिनाम् ॥"२०६॥

टीका—भक्तिं विना ज्ञानन्तु नैव सिध्येदित्याह। श्रेयः सृतिमिति। श्रेयसामभ्युदयापवर्ग लक्षणानां, सृतिः, सरणं यस्याः, सरस इव। निर्झराणाम्। तां ते तव भक्तिमुदस्य—त्यक्त्वा, श्रेयसांमार्गभूतांमति वा। तेषां क्लेशलः क्लेश एवावशिष्यते। अयं भावः। यथा अल्प प्रमाणं धान्यं परित्यज्य अन्तः कण हीनान् स्थूल धान्य भासांस्तुषानेव अवघ्नन्ति, तेषां न किञ्चित् फलम्, एवं भक्तिं तुच्छीकृत्य ये केवलोबोधाय प्रयतन्ते तेषामपीति ॥४॥

एक और ज्ञान मार्ग जिस प्रकार अतिशय श्रम साध्य है, दूसरी ओर भक्ति की सहायता व्यतीत ज्ञान कभी भी स्वतन्त्र रूप से किसी प्रकार फल प्रदान में सक्षम नहीं होता है। हे विभो ! जो लोक, निखिल मङ्गल जननी भक्ति को तुच्छ बुद्धि से अनादर करके, केवल बोध लाभ हेतु क्लेशस्वीकार करते रहते हैं, उन सब का वह प्रयत्न केवल क्लेशदायी ही होता है। धान्य का परिमाण स्वल्प देखकर अनादर करके जो लोक स्थूल तुषावघातन में यत्नवान् होते हैं, उन सब के पक्ष में तुष अवहनन जनित हस्त वेदनालाभ ही सार होता है, उस प्रकार अल्पश्रमसाध्य भक्ति साधनमें अनादरकारी ज्ञान साधन रत व्यक्ति का भी पण्डश्रम ही होता है।

श्रीधर स्वामिपाद की व्याख्या इस प्रकार है—भक्ति के विना ज्ञान भी सिद्ध अर्थात् फल प्रद नहीं हो सकता है। इस अभिप्राय से ही "श्रेयसृतिं" श्लोक कहते हैं। भक्तिरसाविष्ट श्रीब्रह्मा भक्ति का विशेषण प्रदान किये हैं। "श्रेयसृतिं" अर्थात् सरोवर से निर्गत निर्झर समूह के समान जिस भक्ति से धर्म, अर्थ, काम, मोक्ष रूप चतुर्वर्ग निर्गत होते रहते हैं। एवम्भूत निखिल मङ्गल जननी आपकी भक्ति को परित्याग कर जो लोक, ज्ञान साधन के निमित्त प्रयत्नशील होते हैं, उनको केवल क्लेश लाभ होता है। यहाँ का अभिप्राय यह है कि—जिस प्रकार अल्प परिमाण धान्य परित्याग करके अन्तः कण हीन स्थूल धान्याभासराशि को जो लोक अवधातन करते रहते हैं। उनको परिश्रम व्यतीत अपर कुछ भी फल लाभ नहीं होता है। उस प्रकार भक्ति को तुच्छ मानकर केवल बोधलाभ हेतु जो लोक प्रयत्न करते हैं, उनको—तपस्या संयम, एवं शास्त्राध्ययन जनित केवल श्रम लाभ ही होता है। यह है टीकाकार का कथन।

श्रेयसां मार्गभूतामिति वा । तेषां क्लेशलः क्लेश एवावशिष्यते । अयं भावः–यथा अल्पप्रमाणं धान्यं परित्यज्य अन्तःकण--हीनान् स्थूलधान्य भासांस्तुषानेव येऽवघ्नन्ति, तेषां न किञ्चित् फलम् एवं भक्ति तुच्छीकृत्य ये केवल-बोधाय प्रयतन्ते, तेषामपि'' इत्येषा । अत्र 'विभो' इतिवत् केवल शुद्धेत्यपि सम्बोधनम्, असौ दृश्यमानः क्लेशलः, सन्न्यासादीन्येवेति च ज्ञेयम् । श्रीगीतासु च (१३।८) -''श्रीभगवानुवाच--अमानित्वमदम्भित्वम्'' इत्यादिकं ज्ञानयोगमार्ग--मुपक्रम्य, मध्ये (गीता० १३।१०) ''मयि चानन्ययोगेन भक्तिरव्यभिचारिणी'' इत्यप्युक्त्वा,

---

भक्ति के विना ज्ञान जो दुःखदायी है, उसका कथन श्रीमद् भगवद् गीता १३--८ से ११ में है 'अमानित्वमदम्भित्वं इत्यादि ज्ञान योग को उपक्रम करके मध्य में ''मयि चानन्य योगेन भक्ति रव्यभिचारिणी अर्थात् मेरे प्रति अनन्य उपाय से अव्यभिचारिणी भक्ति योग होना आवश्यक है। इस का उल्लेख करके अवशेष में ''तत्त्वज्ञानार्थ दर्शनम्'' अर्थात् तत्त्व ज्ञान का फल स्वरूप आत्मदर्शन है, इस प्रकार समापन करके भी ''एतज् ज्ञान मिति प्रोक्तमज्ञानं यदतोऽन्यथा'' अर्थात् अनन्य उपाय से अव्यभिचारिणी भक्ति ही यथार्थ ज्ञान शब्द वाच्य है । मेरे प्रति भक्ति शून्य जो ज्ञान है, वह ज्ञान अज्ञान संज्ञा में परिगणित होता है । अतएव भक्ति योग भिन्न ज्ञान कभी भी ज्ञान शब्द वाच्य नहीं हो सकता है । उक्त त्रयोदश अध्याय के अन्त में आपने कहा है । ''मद्भक्त एतद् विज्ञाय मद्भावायोपपद्यते'' अर्थात् हे अर्जुन ! मेरा भक्त, मद्वर्णित ज्ञान एवं ज्ञेय वस्तु का यथार्थ स्वरूप को जानकर स्वरूपाविर्भावलाभ की उपयोगिता को प्राप्त करते हैं । उक्त त्रयोदश अध्याय के अन्यत्र एवं अन्य स्थल में नवमादि अध्याय में इस जातीय अभिप्राय प्रकाशित हुआ है । उस के ९।३ श्लोक में उक्त है—हे परन्तप ! भक्ति के सहित ज्ञान लक्षण धर्म को आस्तिक्य रूपमें ग्रहण न करने पर साधारण मानवगण उपायान्तर द्वारा मुझ को प्राप्त करने का प्रयत्न कर के भी मुझ को प्राप्त न कर मृत्यु सङ्कुल संसार पथ में परि भ्रमण करते रहते हैं ।

यहाँपर श्लोकोक्त ''धर्मस्यास्य'' पदस्थ 'अस्य' पद का अर्थ इस प्रकार है--'सततं कीर्त्तयन्तो मां यतन्तश्च दृढ़व्रताः । अर्थात् हे अर्जुन ! कतिपय उत्तम अधिकारी व्यक्ति स्त्रोत्र मन्त्रादि के द्वारा मेरी सेवा करते हैं, कोई कोई अधिकारी व्यक्ति, दृढ़ सङ्कल्प से ईश्वर ज्ञानानि एवं इन्द्रिय संयमादि में प्रकृष्ट यत्न युक्त होकर मेरी उपासना करते हैं । कुछ व्यक्ति, भक्ति युक्त मानस से सतत प्रणाम के द्वारा मेरी उपासना करते हैं । इस श्लोक में भक्ति धर्म की कथा कही गई है । अतऐव भक्ति साधन का आश्रय व्यतीत अपर किसी भी साधन से माया बन्धन से निष्कृतिप्राप्ति नहीं हो सकती है । अतऐव मुद्गल प्रभृतियोंने सुस्पष्ट रूप से भक्ति साधन की कथा न कहने पर भी जन्मान्तर में उन सबों ने जो साधन भक्ति का अनुष्ठान किया था । वह अवश्य ही जानना होगा ।

गीता के श्लोक समूह की व्याख्या इस प्रकार है—

''अमानित्वमदम्भित्वमहिंसा क्षान्ति रार्जवम् ।
आचार्य्योपासनं शौचं स्थैर्य्यमात्म विनिग्रहः ॥७॥
इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च ।
जन्म मृत्यु जरा व्याधि दुःख दोषानु दर्शनम् ॥८॥
असक्ति रनभिष्वङ्गः पुत्र दार गृहादिषु ।
नित्यञ्च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥९॥
मयि यानन्य योगेन भक्ति रव्यभिचारिणी ।
विविक्त देश सेवित्वमरति र्जन संसदि ॥१०॥

प्रान्ते (गी० १३।११) "तत्त्वज्ञानार्थदर्शनम्" इति समाप्याह (गी० १३।११) — एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा" इति । ततो भक्तियोगं विना ज्ञानं न भवतीत्यर्थः । अतोऽन्तेऽप्युक्तम्

अध्यात्मज्ञाननित्यत्वंतत्त्व ज्ञानार्थ दर्शनम् ।
एतज् ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ।।११।।

टीका—अथोक्ताद्विभिन्नत्वेन ज्ञेयं क्षेत्रज्ञद्वयं विस्तरेण निरुपयिष्यन् तज् ज्ञान साधनान्यमानित्वादीनि विंशतिमाह पञ्चभिः, अमानित्वं स्वसत्कारानपेक्षत्वम् । अदम्भित्वं धार्म्मिकत्वख्यातिफलक धर्माचरण विरहः, अहिंसा—परापीड़नम्, क्षान्तिरपमानसहिष्णुता, आर्जवं छद्मिष्वपि सारल्यम्, आचार्य्योपासनं—ज्ञान प्रदस्य गुरोरकैतवेन संसेवनम्, शौचं वाह्याभ्यन्तरपावित्र्यम्—'शौचञ्च द्विविधं प्रोक्तं वाह्यमाभ्यन्तरं तदा । मृज्जलाभ्यां स्मृतं वाह्यं भावशुद्धिस्तथान्तरम्" इतिस्मृतेः, स्थैर्य्यं सद् वर्त्मैक निष्ठत्वम्, आत्म विनिग्रह आत्मानुसन्धिप्रतीपाद् विषयान्मनसो नियमनम्, इन्द्रियार्थेषु शब्दादि विषयेषु प्रतीपेषु वैराग्यं रुच्यभावः, अनहङ्कारो देहादिष्वात्माभिमानत्यागः, जन्मादिषु दुःखरूपस्य दोषस्यानुदर्शनम्, पुनः पुनश्चिन्तनम्, पुत्रादिषु परमार्थप्रतीपेष्वसक्तिः--प्रीतित्यागः, अनभिष्वङ्गस्तेषु सुखिषु दुःखिषु च सत्सु तत् सुखदुःखानभिनिवेशः, इष्टा निष्टानामनुकूल प्रति कूलानामर्थानामुपपत्तिषु प्राप्तिषु समचित्तत्वं, हर्षविषाद विरहः, नित्यं सर्वदा, मयि परेशेऽव्यभिचारिणी स्थिरा भक्तिः श्रवणाद्या— अनन्य योगेनैकान्तित्वेन मद्भक्त सेवा, तथा विविक्तदेशसेवित्वं निर्जनस्थानप्रियता, जनानां ग्राम्याणां संसदि रतित्यागः, अध्यात्ममात्मनि यज्ज्ञानं तस्य नित्यत्वं सर्वदा विमृश्यत्वम्, तत्त्वं त्वहमेव परं ब्रह्म,—

"वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम् ।"

इत्यादि स्मृतेः तज्ज्ञानस्य योऽर्थस्तत् प्राप्तिलक्षणस्तस्य दर्शनं हृदि स्मरणम् । एतदमानित्वापादकं ज्ञानं परम्परया साक्षाच्च तदुपलब्धि साधनं प्रोक्तम्--(ज्ञायते उपलभ्यतेऽनेन । इति व्युत्पत्तेः, यत्ततोऽन्यथा विपरीतं मानित्वादि तदज्ञानं तदुपलब्धि विरोधीति ।।"

सारार्थ वर्षिणी टीका—"उक्त लक्षणात् क्षेत्रात् विविक्ततया ज्ञेयौ जीवात्मपरमात्मानौ क्षेत्रज्ञौ विस्तरेण वर्णयिष्यन् तज्ज्ञानस्य साधनादि अमानित्वादीनि विंशतिमाह पञ्चभिः । अत्र अष्टादश, भक्तानां ज्ञानिनाञ्च साधारणानि, किन्तु भक्तैः, मयि चानन्य योगेन भक्तिरव्यभिचारिणी, इत्येकमेव भगवदनुभव साधनत्वे यत्नतः क्रियते । अन्यानि सप्तदश, उक्ताभ्यासवतां तेषां स्वतएवोत्पद्यन्ते न तु तेषु यत्नः, इति साम्प्रदायिकाः । अन्तिमे द्वे तु ज्ञानिनामसाधारणे एव । अत्र अमानित्वादीनि विस्पष्टार्थानि । शौचं वाह्या-माभ्यन्तरञ्च तथा च स्मृतिः–शौचं द्विविधं प्रोक्तं वाह्यमाभ्यन्तरं तथा मृज्जलाभ्यां स्मृतं वाह्यं भावशुद्धि-स्तथान्तरां इति । आत्म निग्रहः – शरीर संयमः ।।७।।

जन्मादिषु दुःखरूपस्य दोषस्यानुदर्शनं पुनः पुनः पर्य्यालोचनं, असक्तिः पुत्रादिषु प्रीतित्यागः । अनभिष्वङ्गः, पुत्रादीनि सुखे दुःखे चाहमेव सुखी दुःखीत्याध्यासाभावः । इष्टानिष्टयो व्यावहारिकयो-रूपपत्तिषु प्राप्तिषु नित्यं सर्वदा समचित्तत्वम् ।।८।९।।

मयि श्यामसुन्दराकारे अनन्ययोगेन ज्ञानकर्मतपो, योगाद्यमिश्रणेन भक्तिः, च कारात् ज्ञानादि मिश्रण प्राधान्येन च आद्याभक्तैरनुष्ठेया-द्वितीया ज्ञानिभिरिति केचित् । अन्ये तु अनन्याभक्ति र्यथाप्रेम्नः साधनं तथा परमात्मानुभवस्यापीति ज्ञापनार्थमत्र षट् के ऽप्युक्तिरिति भक्ता व्याचक्षते । ज्ञानिनस्तु अनन्येन योगेन सर्वात्म दृष्ट्या इति । अव्यभिचारिणी प्रतिदिनमेव कर्त्तव्या । केनापि निवारयितुमशक्या इति मधुसूदनसरस्वती पादाः ।।१०।।

आत्मानमधिकृत्य वर्त्तमानं ज्ञानं अध्यात्मज्ञानं तस्य नित्यत्वं नित्यानुष्ठेयत्वं पदार्थ शुद्धिनिष्ठत्व

(गी० १३।१८)---"मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते" इति । तत्रान्यत्र च (गी० ९।३) –

"अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप ।
अप्राप्य मां निवर्त्तन्ते मृत्युसंसार-वर्त्मनि ।।"२०७।।

मित्यर्थः । तत्वज्ञानस्यार्थः प्रयोजनं मोक्षस्तस्य दर्शनं स्वाभीष्टत्वेनालोचनमित्यर्थः । एतद्विंशतिकं ज्ञानं साधारण्येन जीवात्म परमात्मनोः, ज्ञानस्य साधनं । असाधारणं, परमात्मज्ञानं त्वग्रे वक्तव्यम् । ततोऽन्यथा अस्मादविपरीतं मामित्यादिकम् ।।११।।

अमानित्व, दम्भ हीनत्व, अहिंसा, क्षान्ति, आर्जव अर्थात् सरलता, आचार्योपासन, अर्थात् गुरुसेवा, शौच, स्थैर्य्य, आत्मनिग्रह, इन्द्रियवेद्य विषयों में वैराग्य, अहङ्कार शून्यता, जन्म, मृत्यु जरा व्याधि दुःख प्रभृति में दोष दर्शन, असक्ति अर्थात् पुत्रादि में आसक्ति शून्यता, पुत्रादि के सुख दुःख में औदासीन्य, सर्वदा समचित्तत्व, मुझ श्री कृष्ण में अव्यभिचारिणी भक्ति, विविक्त स्थान में अवस्थिति, जनाकीर्ण स्थान में अरति, अध्यात्म ज्ञान में नित्यत्वबुद्धि, ।

तत्त्व ज्ञान का प्रयोजन रूप मोक्षानुसन्धान, यह विंशति प्रकार प्रयत्न को अनभिज्ञ व्यक्ति गण क्षेत्र विकार मानते हैं । वस्तुतः ऐसा नहीं है, यह सब प्रत्येक ज्ञान स्वरूप हैं, इन सब को अवलम्बन करने से विशुद्ध तत्त्व लाभ होता है, अतः यह सब क्षेत्र विकार नहीं होकर क्षेत्र विकार नाशक औषध स्वरूप हैं । उक्त विंशति प्रकार के मध्य में मुझ में अनन्यअव्यभिचारिणी भक्ति ही एकमात्र अवलम्बनीय है, ऐसा होने पर ऊनविंशति प्रकार आचरण, भक्ति का अवान्तर फलरूप में उदित होते हैं, एवं क्षेत्र को शुद्ध कर–नित्यसिद्ध क्षेत्र प्राप्ति के ओर अग्रसारित करते हैं । भक्ति देवी का सिंहासन स्वरूप उक्त ऊनविंशति प्रकार प्रयत्न को सविज्ञान ज्ञान समझना होगा, भक्ति सम्पर्कव्यतीत अपर यावतीय प्रयत्न अज्ञान संज्ञा से विभूषित हैं । कारण, भक्ति योग के विना ज्ञान होना सम्भव ही नहीं है, प्रकरण का उप संहार करते हुये गी० १३।१८ आपने कहा है—

"इति क्षेत्रं तथा ज्ञानं ज्ञेयञ्चोक्तं समासतः ।
मद् भक्त एतद्विज्ञाय मद्भावायोपपद्यते ।।१८।।"

टीका—उक्तं क्षेत्रादिकं अधिकारि फल सहितमुपसंहरति–इतीति । क्षेत्रं महाभूतादि, ज्ञानं अमानित्वादि तत्त्व ज्ञानार्थ दर्शनान्तं, ज्ञेयं ज्ञान गम्यञ्च अनादीत्यादि धिष्ठितमित्यन्तं । एकमेव तत्त्वं ब्रह्म भगवत् परमात्मा शब्द वाच्यञ्च संक्षेपेणोक्तं । मदक्तः भक्तिमज् ज्ञानी, मद्भावाय मत्सायुज्याय । मयि भावाय । प्रेम्ने उपपद्यते उपपन्नोभवति ।।१२।।

हे अर्जुन ! मैंने तुम्हारे निकट संक्षेप से क्षेत्र, ज्ञान एवं ज्ञेय– तत्त्वत्रय का वर्णन किया । इस का नाम ही विज्ञान समन्वित ज्ञान है । मदीय भक्त वृन्द, मद्वर्णित ज्ञान एवं ज्ञेय वस्तु को जानकर मुझ में निरुपाधिक प्रेमभक्ति को प्राप्त करते हैं । कारण एक ही अद्वय तत्त्व, ब्रह्म, परमात्मा भगवान् नाम से अभिहित है, भक्ति हीन व्यक्ति गण स्वरूपावबोधात्मक ज्ञान लाभ करने में असमर्थ हैं । भक्ति देवी का पाद पीठ स्वरूप ज्ञान है, भक्ति देवी को आश्रय करने से अनायास जीवात्मा की स्वत्वशुद्धि होती है । गी० ९।३ में भी कथित है—

"अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तपः !
अप्राप्य मां निवर्त्तन्ते मृत्युसंसार वर्त्मनि ।।२०७।।"

टीका—नन्वेवमस्य धर्मस्याति सुकरत्वे सति को नाम संसारी स्यात् । तत्राह । अश्रद्दधानाः । अस्येति ।

अस्य (गी० ९।१४) "सततं कीर्त्तयन्तो मां यतन्तश्च दृढ़व्रताः" इत्यादिपूर्व्वोक्त-लक्षणस्येत्यर्थः। अतएवास्फुट-भक्तीनां मुद्गलादीनामपि कृतचरी साधनभक्तिरनुसन्धेया ॥ ब्रह्मा श्रीभगवन्तम् ।

१०६। आश्रयान्तर-स्वातन्त्र्यानादरेणाह (भा० ६।९।२२)—

(१०६) "अविस्मितं तं परिपूर्णकामं, स्वेनैव लाभेन समं प्रशान्तम् ।
विनोपसर्पत्यपरं हि बालिशः, श्व-लाङ्गुलेनातितितर्त्ति सिन्धुम् ॥"२०८॥

---

कर्म्मणि षष्ठी आर्षी। इमं धर्मं अश्रद्दधानाः, शास्त्र वाक्यैः प्रति पादितं भक्तेः सर्व्वोत्कर्षं स्तुत्यर्थ वादमेव मन्यमाना आस्तिक्येन न स्वीकुर्वन्ति। ये ते उपायान्तरैर्मत् प्राप्त ये कृतप्रयत्ना अपि मामप्राप्य मृत्युवाप्ते संस रवर्त्मनि, नितरामतिशयेन वर्त्तन्ते ॥३॥

हे परन्तप! भक्ति के सहित ज्ञान लक्षण धर्म को आस्तिक्य बुद्धि से ग्रहण न करके साधारण मानव गण उपायान्तर द्वारा मुझ को प्राप्त करने का प्रयत्न करने पर भी मुझ को प्राप्त न कर मृत्यु संसार पथ में परिभ्रमण करते रहते हैं।

इस प्रकार गीता के ९।१४ में भी कथित है

"सततं कीर्त्तयन्तो मां यतन्तश्च दृढ़व्रताः।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥१४॥

टीका—"भजन्तीत्युक्तं, तद् भजनमेव किं इत्यत आह, सततं मदेति, मात्र कर्मयोग इव काल देश पात्र शुद्धाद्यपेक्षा कर्त्तव्येत्यर्थः। "न देश नियमस्तत्र न काल नियमस्तथा। नोच्छिष्टादौ निषेधोऽस्ति श्रीहरेर्नामलुब्धके" इतिस्मृतेः। यतन्तो यतमानाः। यथा कुटुम्ब पालनार्थं दीनाः गृहस्थाः धनिक दारादौ धनार्थं यतन्तो तथैव मद्भक्ताः कीर्त्तनादि भक्ति प्राप्त्यर्थं साधु सभादौ यतन्ते, प्राप्य च भक्तिं अधीयमानं शास्त्रं पठतः इव पुनः पुनरभ्यस्यन्ती च। एतावन्ति नाम ग्रहणानि एतावत्यः प्रणतयः, एतावत्यः परिचर्य्या श्च वश्य कर्त्तव्याः— इत्येवं दृढ़ानि व्रतानि नियमाः येषां ते। यद्वा, दृढ़ानि अपतितानि एकादश्यादि व्रतानि नियमाः येषां ते। नमस्यन्तश्च इति चकारः, श्रवण पाद सेवनाद्यनुक्त सर्व भक्ति संग्रहार्थः। नित्ययुक्ताः: भाविनं मन्नित्यसंयोगं आकाङ्क्षन्तः, आशंसायां भूतवच्चेति वर्त्तमानेऽपि भूतकालिकः क्तः प्रत्ययः। अत्र मां कीर्त्तयन्त एव मामुपासत इति मत्कीर्त्तनादिकमेव मदुपासनमिति वाक्यार्थः। अतो मामिति न पौनरुक्त्यमाशङ्कनीयम् ॥"१४॥

उक्त विद्वत् प्रतीति युक्त महात्मा भक्त वृन्द, सर्वदा मदीय नाम, रूप, गुण एवं लीलाका कीर्त्तन करते हैं। अर्थात् श्रवण कीर्त्तनादि भक्ति का आचरण करते हैं। मदीय यह सच्चिदानन्द स्वरूप का नित्य दास्यलाभ हेतु वे सब शारीरिक, मानसिक, सामाजिक एवं आध्यात्मिक क्रिया में दृढ़ व्रत होकर, मेरा अनुशीलन करते हैं। सांसारिक कर्म्म द्वारा चित्त विक्षिप्त न हो, तज्जन्य संसार यात्रा निर्वाह के समय भक्ति योग के द्वारा मेरी शरणापत्ति को अङ्गीकार करते हैं।

श्रीब्रह्मा—श्रीभगवान् को कहे थे ॥१०५॥

१०६। श्रीमद् भागवत (६।९।२२) के श्रीदेवगण कृत भगवत् स्तुति प्रसङ्ग में भी स्वतन्त्र भाव से देवतान्तराश्रय के प्रति अनादर प्रकाश करके श्रीभगवद् भक्ति की अवश्य कर्त्तव्यता का उल्लेख हुआ है।

(१०६) "अविस्मृतं तं परिपूर्णकामं स्वेनैव लाभेन समं प्रशान्तम्।

अविस्मितं ततोऽन्यस्यापूर्ववस्तुनोऽसद्भावाद्विस्मयरहितम्, यद्वा सदा सस्मितमतः स्वेनैव स्वीयेनैव स्वस्यैव कर्म्मभूतस्य क्रियाभूतेन लाभेन परिपूर्णकामम, नान्यस्येत्यर्थः । अतः सर्व्वत्र समम्, ततः प्रशान्तं चित्तदोषरहितम्, बालिश ईशस्याप्रियः सोऽतितितर्त्ति अतितर्तुमिच्छतीत्यर्थः । यथोक्तम् (भा० १।२।२७)—"रजस्तमःप्रकृतयः" इत्यादि, स्कान्दे श्रीब्रह्मनारद संवादे च—

"वासुदेवं परित्यज्य योऽन्यदेवमुपासते । स्वमातरं परित्यज्य श्वपचीं वन्दते हि सः ॥"२०६॥

तत्रैवान्यत्र च—

---

विनोपसर्पत्यपरं हि बालिशः श्वलाङ्गुलेनातितितर्त्ति सिन्धुम् ॥"२०८

टीका - तत एवेत्यव धारणे हेतु माहुः । अविस्मितं – निरहङ्कारं कुतूहल शून्यं वा । कुतः ? प्रशान्तं-रागादि शून्यम् । तच्चकुतः ? स्वेनेव लाभेन परिपूर्ण कामम् । तच्च कुतः ? समम्, उपाधिपरिच्छेद शून्यम् । एवम्भूतं परमेश्वरं विना अपरं यः शरणार्थमुपसर्पति स हि बलिशोऽज्ञः । यतोऽसो शुनो लाङ्गुलेन पुच्छेन समुद्र मतितिर्त्ति-अति तरितु मच्छतीत्यर्थः । यथा तेन समुद्र तरणं नभवति तथा अनीश्वराश्रयेण व्यसनार्णव तरणं न भवतीति भावः । २२॥

हे प्रभो ! निरहङ्कार रागादि शून्य, निज स्वरूपानन्दानुभव से परिपूर्ण काम, उपाधिगत परिच्छेद शून्य परमेश्वर,—आप हैं, आप को छोड़कर जो मानव अन्य देवता का आश्रय ग्रहण करता है, वह निश्चय ही अज्ञ है । कारण, देवतान्तर आश्रयकारी व्यक्ति, कुक्कुर की पूच्छ धारण कर अति विस्तीर्ण समुद्र उत्तीर्ण होने के इच्छुक है । जिस प्रकार कुत्ते की पूँछ पकड़ कर अति विस्तीर्ण सागर उत्तीर्ण होना असम्भव है, उस प्रकार परमेश्वर को आश्रय न करके देवतान्तर के आश्रय से दुःख समुद्र उत्तीर्ण होना सम्भव नहीं है । श्लोकोक्त (अविस्मित" पद का अर्थ है, श्रीभगवद् भिन्न अपूर्व वस्तु न होने के कारण जो विस्मय रहित हैं, अतएव निज स्वरूपानन्द से ही जो पूर्ण काम है । यहाँ 'स्वेनैव" पद का अथ है— स्वीय अर्थात् स्वयं, को प्राप्त कर जो पूर्ण काम हैं । 'स्वेन' पद,—श्लोकोक्त कर्म है, एवं 'लाभ' क्रिया पद है । यहाँ का तात्पर्य्य यह है कि – निज स्वरूप भिन्न अपर किसो की अपेक्षा जिनको नहीं है । इस अभिप्राय से ही भा० १।२।२७ में कहा गया है —

"रजस्तम प्रकृतयः समशीलाभजन्ति वै ।
पितृभूत प्रजेशादीन् श्रियैश्वर्य्य प्रजेप्सवः ॥

टीका—रजस्तमसी प्रकृतिः स्वभावो येषां ते, अतएव पितृभूतादिभिः समं शीलं येषां ते । श्रियासह ऐश्वर्य्यञ्च प्रजाश्चेप्सन्तीति तथा ते ।

अर्थात् जो लोक, ऐश्वर्य्य के सहित पुत्रादि की कामना करते हैं, वे सब रजस्तमः स्वभाव सम्पन्न होने के कारण पितृ भूत प्रभृति के समस्वाभावापन्न होते हैं, अतः स्व जातीय की उपासना वे सब करते हैं । जो, मुक्ति कामना करते हैं, वे श्रीभगवान् व्यतीत देवतान्तर की उपासना नहीं करते हैं । कारण श्री भगवान् की उपासना व्यतीत मोक्ष लाभ नहीं होता है ।

स्कन्द पुराण के श्रीब्रह्म नारद संवाद में उक्त है—

"वासुदेवं परित्यज्य योऽन्यदेवमुपासते ।
स्वमातरं परित्यज्य श्वपचीं वन्दते हि सः ॥"२०६॥

"वासुदेवं परित्यज्य योऽन्यदेवमुपासते । त्यक्त्वामृतं स मूढ़ात्मा भुङ्क्ते हालाहलं विषम् ।।"२१०।।

**महाभारते—**

"यस्तु विष्णुं परित्यज्य मोहादन्यमुपासते । स हेमराशिमुत्सृज्य पांशुराशिं जिघृक्षति ।।"२११।।

**अतएवोक्तं श्रीसत्यव्रतेन** (भा० ८।२४।४६) —

**"न यत् प्रसादायुतभागलेश,-मन्ये च देवा गुरवो जनाः स्वयम् ।**

**कर्त्तुं समेताः प्रभवन्ति पुंस,-स्तमीश्वरं वै शरणं प्रपद्ये ।।" २१२।।**

**श्रीब्रह्मशिवावपि वैष्णवत्वेनैव भजेत,** (भा० २।६।५) **"स आदिदेवो जगतां परो गुरुः",** (भा० १२।१३।१६) **"वैष्णवानां यथा शम्भुः" इत्याद्यङ्गीकारात् । अतएव द्वादशे श्रीशिवं प्रति श्रीमार्कण्डेय--वचनम्** (भा० १२।१०।३४)—

---

अर्थात् वासुदेव को परित्याग करके अन्य देवता की उपासना जो लोक करते रहते हैं, वे सब निज जननी को परित्याग पूर्वक श्वपची की वन्दना करते हैं । स्कन्द पुराण के अन्यत्र भी लिखित है—

"वासुदेवं परित्यज्य योऽन्यदेवं उपासते ।
त्यक्त्वामृतं स मूढ़ात्मा भुङ्क्ते हालाहलं विषम् ।।२१०।।

जो लोक,—वासुदेव को परित्याग करके अन्य देवता की उपासना करते हैं, वे मूढ़ होते हैं, एवं अमृत को त्याग कर हल हल विष भोजन करते हैं । महाभारत में भी वर्णित है—

"यस्तु विष्णुं परित्यज्य मोहादन्यमुपासते ।
स हेमराशिमुत्सृज्य पांशुराशिं जिघृक्षति ।।"२११।।

जो व्यक्ति, श्रीविष्णु को परित्याग पूर्वक मोहवशतः अन्य देवता की उपासना करता है, वह स्वर्ण राशि को छोड़कर पांशुराशि में अभिलाष करता है । अतएव सत्यव्रत महाराज भी श्रीमत्स्यदेवकी स्तुति करते हुये कहे हैं—भा० ८।२४।४६

"न यत् प्रसादायुतभागलेश-मन्ये च देवा गुरवो जनाः स्वयम् ।
कर्त्तुं समेताः प्रभवन्ति पुंस स्तमीश्वरं वै शरणं प्रपद्ये ।।"२१२।।

टीका—परमेश्वरत्वं परमगुरुत्वञ्च प्रपञ्चयन्नाह नेति । यत्प्रसादस्य अयुतभागः तस्य लेशमपि अन्ये देवादयः सर्वेसमेता अपि स्वयं तस्मिन् निरपेक्षाः सन्तः कर्त्तुं न प्रभवन्ति ।।

अन्य देवतावृन्द, गुरुवर्ग, एवं महात्मावृन्द स्वतन्त्र रूप से मानवों के प्रति आप के अनुग्रह के अयुत भाग के लेश मात्र अनुग्रह भी करने में सक्षम नहीं हैं, उन परमेश्वर स्वरूप की शरण ग्रहण मैं करता हूँ । श्रीब्रह्मा एवं श्रीशिव को भी वैष्णव बुद्धि से उपासना करनी चाहिये, स्वतन्त्र ईश्वर बुद्धि से उनकी उपासना न करे । इस विषय में श्रीशुक देवने महाराज परीक्षित् को भा० २।६।५ में जो उपदेश प्रदान किया है—वह इस प्रकार है—

"स आदि देवो जगतां परो गुरुः स्वधिष्ण्यमास्थाय सिसृक्षयैक्षत ।
तां नाध्यगच्छद् दृशमत्र सम्मताम् प्रपञ्च निर्म्माण विधि र्यया भवेत् ।।"

टीका—भगवद् भजनादेव तत्र ज्ञानमित्येतत् प्रपञ्चयिष्यन् ब्रह्मणोऽपि तत्त्वज्ञानं तत् प्रसादादेवेति दर्शयितुमितिहासमाह स इत्यादिना । परोगुरु भक्तिरहस्योपदेष्टा, स्वधिष्ण्यं—पद्मम्, आस्थाय-अधिष्ठाय,

"वरमेकं वृणेऽथापि पूर्णात् कामाभिवर्षणात् ।
भगवत्यच्युतां भक्ति तत्परेषु तथा त्वयि ।।"२१३।।

तथा त्वय्यपि तत्पर इत्यर्थः। अतएवाष्टमे प्रजापतिकृत-शिवस्तुतौ (भा० ८।७।३३)-- "येत्वात्मरामगुरुभिर्हृदि चिन्तिताङ्घ्रि,-द्वन्द्वम्"इति, चतुर्थे श्रीमदष्टभुजं प्रति प्रचेतोभिरपि

तस्याधिष्ठान अन्वेषणाय पूर्वं जले निमग्नः, पश्चात् परावृत्य स्वधिष्ण्ये स्थित्वेत्यर्थ। ऐक्षत, तत्कथं स्रष्टव्य-मित्यालोचितवान्। तादृशं—प्रज्ञाम्। अत्र सृष्टिविषये सम्मतामव्यभिचारिणीम्। विधिः प्रकारः।"

श्रीभगवद् भक्ति के उपदेष्टा आदि देव श्रीब्रह्मा, निज उद्भवस्थान श्रीविष्णु के नाभि कमल में अवस्थित होकर अधिष्ठान अन्वेषण के निमित्त जल में निमग्न हुये थे। किन्तु बहु प्रचेष्टा से भी अवधि प्राप्त न होने से अन्वेषण कार्य्य से निवृत्त हुये थे। एवं निज अधिष्ठान पद्म में अवस्थित होकर कैसे विश्वसृष्टि कार्य्य करेंगे, इस विषय में मन में चिन्ता किये थे किन्तु जिस प्रज्ञा से प्रपञ्च निर्म्माण हो सकता है, उस विषय में अनुकूल प्रज्ञा प्राप्त करने में असमर्थ हुये थे।

श्लोक में 'परोगुरुः' पद का अर्थ भक्ति रहस्योपदेष्टा है। अतएव ब्रह्मा को वैष्णव श्रेष्ठ बुद्धि से आराधना करनी चाहिये। श्लोक के द्वारा यही प्रतिपन्न हुआ है।—श्रीशिव की आराधना वैष्णव बुद्धि से करना ही उचित है इस विषय में भा० १२।१३।१६ में लिखित है—

"निम्नगानां यथा गङ्गा, देवानामच्युतोयथा।
वैष्णवानां यथा शम्भुः पुराणानामिदं तथा।।"

क्रमसन्दर्भ—अतएवाह—निम्नगानामिति।

अतएव श्रीमद् भागवत के १२।१०।३४ श्लोक में श्रीशिव के प्रति मार्कण्डेय ऋषि की उक्ति में प्रकाशित है—

"वरमेकं वृणेऽथापि पूर्णात् कामाभिवर्षणात्।
भगवत्यच्युतां भक्ति तत्परेषु तथा त्वयि।।"२१३।।

तथा त्वयीति त्वयि च तत्पर इत्यर्थः। (भा० १२।८।४०)

क्रमसन्दर्भ—

"किं वर्णये तव विभो यदुदीरितोऽसुः संस्पन्दते तमनु वाङ्मनइन्द्रियाणि। स्पन्दन्ति वै तनुभृतामज-शर्वयोश्च" इत्यनेनैव श्रीनारायणर्षिप्रत्युक्तत्वात्।

हे प्रभो! यद्यपि मेरा कुछ भी प्रार्थनीय नहीं है। तथापि सर्वाभीष्ट वर्षण कारी पूर्णकाम तुम्हारे समीप में मैं एक वर प्रार्थना करता हूँ। श्रीभगवान् में एवं श्रीभगवद् भक्तगण में तथा तुम्हारे प्रति मेरी अचला भक्ति हो, श्लोकस्थ 'तथा त्वय्यपि' पद का अर्थ है—वह भगवत् परायण जो तुम हो—इस प्रकार अर्थ समझना होगा। कारण, यदि श्रीशिव के प्रति भगवत् प्रियदृष्टि से भक्ति प्रार्थना नहीं करते तो श्री भगवान् में अच्युता भक्ति प्रार्थना से ही श्रीशिव के प्रति भी भक्ति प्रार्थना सम्पन्न होती। पृथक् भाव से तुम्हारे प्रति जैसे मेरी भक्ति हो, इस प्रकार उल्लेख का प्रयोजन नहीं होता।

अतएव अष्टम स्कन्ध के प्रजापतिकृत शिवस्तुति (भा० ८।७।३३) में उक्त है—

"येत्वात्मारामगुरुभिर्हृदिचिन्तिताङ्घ्रि—
द्वन्द्वं चरन्तमुमया तपसाभितप्तम्।

(भा० ४।३०।३८) —"वयन्तु साक्षाद्भगवन् भवस्य, प्रियस्य सख्युः क्षणसङ्गमेन" इति ।

वैष्णवस्य सतः समदर्शिनस्तु न भक्तिलाभः, प्रत्यवायश्च, यथा वैष्णवतन्त्रे—

---

कत्थन्त उग्रपरुषं निरतं श्मशाने
ते नूनमूतिमविदंस्तव हातलज्जाः ॥"

टीका—एवं नित्यं परानुग्रहव्यग्र त्वां ये निन्दन्ति ते ऽति मूर्खाइत्याहुः। ये च त्वाम् उमया सह चरन्तं तस्यां नितरां रतं कामिनं कत्थन्ते प्रलपन्ति, तथा श्मशाने चरन्तम्, उग्रं क्रूरं परुषश्च हिंस्रं कत्थन्ते, कथम्भूतम्। आत्मारामाश्च ते गुरवो विश्वहितोपदेष्टारश्च तै र्हृदि चिन्तितमङ्घ्रि द्वन्द्वं यस्य तथा भूतमपि तपसाभितप्तमपि ते नूनं तव ऊतिमविदन्निति काकुः। त्वल्लीलां नैवविदुरित्यर्थः। अतोहातलज्जाः, त्वक्त-लज्जाः कथमात्मारामैः सेवितचरणयुगलस्य कामित्वसम्भवः। कथं वा तपसाभितप्तस्य शान्तस्योग्रत्वं परुषत्वं वा सम्भवतीति अविचार्य्यैवं प्रलापादित्यर्थः।

हे प्रभो ! आप, भगवद् भक्ति के द्वारा अपर को अनुग्रह करने के निमित्त नित्य व्याकुल हैं, किन्तु आप की निन्दा जो लोक करते हैं, वे सब अति मूर्ख हैं। आप, उमा में अत्यन्त आसक्त हैं, कामुक हैं, श्मशान में विचरण करते हैं तज्जन्य आप सदाचार विवर्जित हैं, एवं अतिशय क्रूरचेष्टा परायण आप हैं, इस प्रकार कह कर जो लोक आप की निन्दा करते हैं, वे लोक, आप की लीला को कुछ भी नहीं समझ पाते हैं। कारण, आत्मारामगण कर्त्तृक जिनके चरण युगल सेवित होते हैं—उनका कामित्व होना असम्भव है। तपस्या के द्वारा अभितप्त शान्तमूर्त्ति आप हैं, आप का उग्रत्व होना भी सम्भव नहीं है। निर्लज्ज मुर्खगण ही आप के लीलारहस्य को न समझ कर उस प्रकार कदर्थना करते रहते हैं। इस श्लोक में भगवद् भक्ति के उपदेश द्वारा जगत् कल्याणकारित्व गुण मण्डित श्रीशङ्कर का महाभागवतत्व ही प्रदर्शित हुआ है। भा० ४।३०।३८ में प्रचेतागण ने भी श्रीमदष्टभुज श्रीहरि के स्तुति प्रकरण में श्रीशङ्कर को भगवत् प्रिय ही कहा है।

"वयन्तु साक्षाद् भगवान् भवस्य प्रियस्य सख्युः क्षण सङ्गमेन।
सुदुश्चिकित्सस्य भवस्य मृत्यो र्भिषक्तमं त्वाद्य गतिं गताः स्मः॥"

टीका—सत्सङ्गानलमस्माभिरेवानुभूतमित्याहुः—वयन्त्विति। तव यः प्रियः सखा तस्य भवस्य। अत्यन्तमचिकित्सस्य भवस्य जन्मनो मृत्योश्च भिषक्तमम्—सद्वैद्यं त्वां गतिं प्राप्ताः।

अर्थात् प्रचेतागण, श्रीभगवान् को कहे थे,—हे प्रभो ! सत्सङ्ग के फल का अनुभव हम सब ने किया है। कारण, आप के प्रियतम एवं सखा श्रीशङ्कर हैं, उनके क्षण भर सङ्ग प्रभाव से ही दुश्चिकित्स्य—अर्थात् चिकित्सा के द्वारा सुदुःसाध्य जो जन्म मृत्यु व्याधि है, उसके श्रेष्ठ चिकित्सक— सद्वैद्य—एवं परम गति आप की शरण ग्रहण हमने किया है। यदि आप के प्रियतम श्रीशङ्कर के सङ्गलाभ नहीं होता तो, आप के चरणों में शरणागत होने का सौभाग्य हम सब को नहीं होता। श्रीमद् भागवत के इस श्लोक में श्रीमहादेव को श्रीहरि के सखा एवं प्रियतम कहा गया है। श्रीवैष्णव होकर भी श्रीहरि एवं श्रीहरि में समदर्शी होने पर किन्तु श्रीहरि चरणों में भक्ति लाभ नहीं होता है। तात् पर्य्य यह है कि श्रीवैष्णव के पक्ष में श्रीशङ्कर में एवं श्रीहरि में प्रियता दृष्टि रखनी चाहिये। स्वतन्त्र ईश्वर बुद्धि से उपासना करने पर 'शैव' होना पड़ेगा। श्रीशङ्कर में ईश्वरत्व एवं भक्त भाव की सत्ता है। तन्मध्य में जो लोक स्वतन्त्र ईश्वर रूप में श्रीशिव की उपासना करते हैं, वे सब शैव होते हैं। और जो लोक—श्रीशिव की उपासना भगवद् भक्त रूप में करते हैं, वे सब वैष्णव होते हैं। स्वतन्त्र ईश्वर बुद्धि से श्रीशङ्कर की उपासना करने से श्रीहरि भक्तिलाभ ही नहीं होता है, यही नहीं, किन्तु प्रत्यवाय भी होता है। इस विषय में वैष्णव तन्त्र में

"न लभेयुः पुनर्भक्तिं हरेरैकान्तिकीं जड़ाः। एकाग्रमनसश्चापि विष्णु-सामान्यदर्शिनः ॥२१४॥
यस्तु नारायणं देवं ब्रह्मरुद्रादिदैवतैः। समत्वेनैव वीक्षेत स पाषण्डी भवेद्ध्रुवम् ॥"२१५॥ इति।

अतएवाभेद-दृष्टिवचनं समभक्त ज्ञान्यादिपरमेव, यथा श्रीमार्कण्डेयोपाख्याने द्वादश एव श्रीशिव-वाक्यम् (भा० १२।१०।२०--२२) —

"ब्राह्मणाः साधवः शान्ता निःसङ्गा भूतवत्सलाः।
एकान्तभक्ता अस्मासु निर्वैराः समदर्शिनः ॥२१६॥
सलोका लोकपालास्तान् वन्दन्त्यर्च्चन्त्युपासते।
अहञ्च भगवान् ब्रह्मा स्वयञ्च हरिरीश्वरः ॥२१७॥
न ते मय्यच्युतेऽजे च भिदामण्वपि चक्षते।
नात्मनश्च परस्यापि तद्युष्मान् वयमीमहि ॥"२१८॥ इति।

तत्ततोऽपि तानतिक्रम्य युष्मान् मार्कण्डेयादीन् शुद्धवैष्णवान् वयमीमहि भजेमेत्यर्थः।

---

लिखित है—

"न लभेयुः पुनर्भक्तिं हरेरैकान्तिकीं जड़ाः।
एकाग्रमनसश्चापि विष्णु-सामान्यदर्शिनः ।२१४॥
यस्तु नारायणं देवं ब्रह्मरुद्रादिदैवतैः।
समत्वेनैव वीक्षत स पाषण्डी भवेद्ध्रुवम् ॥"२१५॥

श्रीहरि में एकाग्रमनाः होकर भी यदि श्रीविष्णु के सहित श्रीशिव ब्रह्मा प्रभृति की भावना श्रीहरि के अभिन्न रूप में करता है तो, वह जड़बुद्धि मानव—श्रीहरि में ऐकान्तिकी भक्ति लाभ कर नहीं सकता। इस से निर्णय यह हुआ कि—शिव ब्रह्मादि देवगण को यदि श्रीहरि के अभिन्न रूप से देखकर यदि उनकी उपासना करते हैं, तो श्रीहरि चरणों में भक्ति लाभ नहीं होगा, कारण, अपराध होगा। श्रीहरि हर में अभेद दृष्टि सम्पन्न व्यक्ति को जो विघ्नलाभ होता है, उसका वर्णन वैष्णव तन्त्र में है—जो व्यक्ति, परमेश्वर श्रीनारायण को ब्रह्म रुद्रादि देव गण के सहित सम बुद्धि से देखता है, वह निश्चय ही पाषण्डी होगा। अतएव शास्त्र में जहाँ जहाँ श्रीहरि हर में अभेद बुद्धि पर वर्णन है, उक्त वर्णन समूह को सम भक्त अर्थात् शान्त भक्त ज्ञानी पर ही है, ऐसा जानना होगा। जिस प्रकार श्रीमद् भागवत के मार्कण्डेय उपाख्यान में वर्णित है--भा० १२।१०।२०--२२

'ब्राह्मणाः साधवः शान्ता निःसङ्गा भूतवत्सलाः।
एकान्तभक्ता अस्मासु निर्वैराः समदर्शिनः ॥२१६॥
सलोका लोकपालास्तान् वन्दन्त्यर्च्चन्त्युपासते।
अहञ्च भगवान् ब्रह्मा स्वयञ्च हरिरीश्वरः ॥२१७॥
न ते मय्यच्युतेऽजे च भिदामण्वपि चक्षते।
नात्मनश्च परस्यापि तद्युष्मान् वयमीमहि ॥"२१८॥

टीका—वरदानादिना भवत् सेवैवास्माभिः क्रियते नत्वनुग्रहो जगद्वन्द्यत्वाद् भवतामिति ब्राह्मणान् स्तौति ब्राह्मणा इत्यादिना। ये साधवः सदाचाराः' शान्ता मत्सरादि रहिताः। निःसङ्गा निष्कामाः ॥२०॥

न केवलं त एव किन्तु अहञ्चेत्यादि ॥२॥ पूज्यतमत्वे हेत्वन्तरमाह नेति। अण्वपि--अणुमात्रमपि,

यदुक्तं श्रीशिवेनैव प्रचेतसः प्रति (भा० ४।२४।३०) —

"अथ भागवता यूयं प्रियाः स्थ भगवान् यथा ।
न मद्भागवतानाञ्च प्रेयानन्योऽस्ति कर्हिचित् ॥"२१९॥

अन्यत्र च (भा० ८।७।४०)--"प्रीते हरौ भगवति प्रीयेऽहं सचराचरः" इति च । तस्य मार्कण्डेयस्य शुद्ध-वैष्णवत्वञ्चोक्तमेतत्पूर्वम् (भा० १२।१०।६) —

"नैवेच्छत्याशिषः क्वापि ब्रह्मर्षिर्मोक्षमप्युत ।
भक्तिं परां भगवति लब्धवान् पुरुषेऽव्यये ॥"२२०॥

---

न चक्षते न पश्यन्ति । तत् तस्मात्, एवम्भूतान् युष्मान् ईमही भजेम ॥२२।

श्रीशिव—कहते हैं—हे मार्कण्डेय ! जो सब ब्राह्मण, सदाचार सम्पन्न, मात्सर्य्यादि रहित, सर्वभूत में वात्सल्ययुक्त, (ब्रह्मा विष्णु, शिव के प्रति । हमारे प्रति एकान्त भक्तिमान् हैं, अथच निर्वैर एवं समदर्शी भी हैं । एतादृश गुण सम्पन्न ब्राह्मण वृन्द की वन्दना, लोकपाल वृन्द के सहित चतुर्दश भुवनवासी समस्त लोक करते हैं । अर्च्चना एवं उपासना भी कर रहे हैं । केवल यही नहीं किन्तु मैं, शिव, ब्रह्मा, यहाँतक कि स्वयं भगवान् ईश्वर भी पूर्वोक्त लक्षण युक्त ब्राह्मण की वन्दना करते हैं ।

कारण, वे सब मुझ शिव में, ब्रह्मा में, अच्युत में किञ्चिन्मात्र भेद दृष्टि नहीं रखते हैं, एवं आप के सहित जगद् वासी प्राणि वृन्द के प्रति किसी प्रकार भेद दृष्टि नहीं रखते हैं । आप सब उस प्रकार हैं । आप सब का स्तव हम सब करते हैं । यहाँपर "नात्मनश्च परस्यापि, तद् युष्मान् वयमीमहि" इस श्लोकस्थ 'तत्' पद का अर्थ करते हैं—तत् ततोऽपि तानतिक्रम्य मार्कण्डेयादीन्-शुद्ध वैष्णवान् वयमीमहि भजेम इत्यर्थः । श्रीशिव ने भी भा० ४।२४।३० में कहा है----

"अथ भागवता यूयं प्रियाः स्थ भगवान् यथा ।
न मद्भागवतानाञ्च प्रेयानन्योऽस्ति कर्हिचित् ॥"२१९॥

टीका----अथ भागवतत्वात् यूयं मे प्रियास्थः । भवद्भिरपि मयि प्रीतिः कार्य्येत्याशयेनाह । मदन्यो भागवतानाञ्च प्रेयान् नास्ति ।"

भगवान् मेरा प्रिय है, भगवद् भक्त वृन्द आप सब भी उस प्रकार मेरे प्रिय हैं । भगवद् भक्त वृन्द भी मुझ को छोड़कर अपर किसी को प्रियत्वेन नहीं जानते । भगवद् भक्त भिन्न मेरा भी अपर कोई प्रिय नहीं हैं । इससे भी प्रतिपादित हुआ कि श्रीशङ्कर में श्रीभगवत् प्रियत्व ही है ।

अन्यत्र भा० ८।७।१० में दृष्ट है----

"प्रीते हरौ भगवति प्रीयेऽहं स चराचरः ।
तस्मादिदं परं भुञ्जे प्रजानां स्वस्तिरस्तु मे ॥"

टीका—"कृपयतः कृपां कुर्वतः पुंसः । मे मत्तः, स्वस्तिः, सत्ता, सुखेन जीवितमस्त्वित्यर्थः ॥"

श्रीभगवान् श्रीहरि प्रसन्न होने से स्थावर जङ्गम के सहित मैं 'शिव' प्रसन्न होता हूँ । श्रीमार्कण्डेय के शुद्ध वैष्णवत्व के सम्बन्ध में भा० १२।१०।६ में श्रीशिव की कण्ठोक्ति यह है—

"नैवेच्छत्याशिषः क्वापि ब्रह्मर्षिर्मोक्षमप्युत ।
भक्तिं परां भगवति लब्धवान् पुरुषेऽव्यये ॥२२०॥"

इति मार्कण्डेयमुद्दिश्य श्रीशिवेन। तथा श्रीशिवस्य तच्चेतस्याविर्भावात् समाधि-विरामेण च तदेव व्यञ्जितम्, यथा (भा० १२।१०।१३) "किमिदं कुत एवेति समाधेर्विरतो मुनिः" इति। किञ्च, (भा० १२।१०।२०)--"ब्राह्मणाः साधवः" इत्यादावभेद-दृष्टिवचनेऽपि (भा० १२।१०।२१) "स्वयञ्च हरिरीश्वरः" इत्यनेन तस्यैव प्राधान्यमुक्तम्। तस्यैव स्वयमीश्वरत्वञ्चोक्तम् (भा० १।२।२४)---"पार्थिवाद्दारुणः" इत्यादिना। ब्रह्मपुराणे श्रीशिववाक्यमपि तथैव—

---

टीका—आशिषोऽभ्युदय लक्षणाः। उत निश्चितम्। अत्र हेतुः—भक्तिमिति।

श्रीशङ्कर उमाको कहे थे—हे प्रिये! यह ब्रह्मर्षि मार्कण्डेय कहीं पर किसी के निकट धर्म, अर्थ, काम की प्रार्थना तो करते ही नहीं, यहाँतक कि—मोक्ष की प्रार्थना भी नहीं करते हैं। कारण, यह मार्कण्डेय ऋषि, अव्यय पुरुष श्रीभगवान् में पराभक्ति को प्राप्त किये हैं। यहाँपर अनुसन्धेय यह है कि—जिस समय, श्रीशिव मार्कण्डेय हृदय में आविर्भूत हुये थे—उस समय ही मार्कण्डेय की समाधि टूटगई थी, यदि श्रीहर एवं श्रीहरि, सर्वथा अभेद होते तो मार्कण्डेय की समाधिभङ्ग क्यों होती? इससे श्रीहरि हर का पार्थक्य सुस्पष्ट हुआ। उक्त समाधिभङ्ग विषय में भा० १२।१०।१३ में कथित है।

"किमिदं कुत एवेति समाधेर्विरतो मुनिः"।

टीका—"न केवलं वहिरेव आत्मन्यपि प्राप्तः। शिवं विचक्ष्य विस्मितः। कथं प्राप्तम्? सहसा अकस्मादेव हृदि भातम्। कथम्भूतम्? तड़िद्वत् पिशङ्गा जटा धारयतीति तथा तम्। त्र्यक्षीणि यस्य तम्। शूलादिभिः सह अक्षमालादीन् बिभ्राणमित्यन्वयः। अक्षमालादीनां द्वन्द्वं वयम्। विस्मय पूर्वकं वहिर्दर्शनमाह किमिदमिति॥"

अर्थात् मुनि मार्कण्डेय—निज हृदय में आविर्भूत श्रीशिवमूर्त्ति दर्शन करके चिन्ता किये थे-हृदय में मैं क्या देख रहा हूँ? यह मूर्त्ति कहाँ से आई, इस प्रकार चित्त चाञ्चल्य वशतः मार्कण्डेय समाधि से विरत हुये थे। और भी भा० १२।१०।२० में श्रीशिव ने कहा है—

"ब्राह्मणाः साधवः शान्ता निःसङ्गा भूतवत्सलाः।
एकान्तभक्ता अस्मासु निर्वैराः समदर्शिनः॥"

टीका—वरदानादिना भवत् सेवैवास्माभिः क्रियते नत्वनुग्रहो जगद् वन्द्यत्वाद् भवतामिति ब्राह्मणान् स्तौति। ब्राह्मणाइत्यादिना। ये साधवः सदाचाराः। शान्ताः—मत्सरादि रहिता निःसङ्गाः--निष्कामाः॥

"सलोकालोक पालास्तान् वन्दन्त्युर्च्चयन्त्युपासते।
अहञ्च भगवान् ब्रह्मा स्वयञ्च हरिरीश्वरः॥"

टीका—न केवलं त एव किन्तु अहञ्चेत्यादि॥२१॥

इस श्लोक में हरि हर में जो अभेद उपदेश हुआ है, इस में भी हरि शब्द के पहले स्वयं पद का उल्लेख हुआ है। इस से भी श्रीहरि का प्राधान्य वर्णित हुआ है। श्रीहरि का स्वयं ईश्वरत्व का प्रतिपादन भा० १।२।२४ सुस्पष्ट रूप से हुआ है।

"पार्थिवाद् दारुणो धूमस्तस्मादग्निस्त्रयीमयः।
तमसस्तु रजस्तस्मात् सत्त्वं यद् ब्रह्मदर्शनम्॥"

टीका—"उपाधि वैशिष्टयेन फल वैशिष्ट्यं सदृष्टान्तमाह--पार्थिवात् स्वतः प्रवृत्ति प्रकाश रहितात्

"यो हि मां द्रष्टुमिच्छेन ब्रह्माणं वा पितामहम् । द्रष्टव्यस्तेन भगवान् वासुदेवः प्रतापवान् ।।"२२१।। इति ।
तद्विज्ञानेन सर्वविज्ञानादिति भावः । अत एवमप्युक्तं सार्वभौमैः श्रीचिन्तामणिदीक्षितैः—

"वनमालिनि यादृशाशयो, मम तादृङ् न कपालमालिनि ।
असिते मुदिरे यथा शिखी, मुदमभ्येति तथा न पाण्डुरे ।।२२२।।
देव्यस्तटिन्यस्त्रिदशास्तडागा, विश्वेश्वरोऽयं सरितामधीशः ।
तृष्णाहरः कोऽपि न कृष्णमेघं, विहाय चिन्तामणिचातकस्य ।।" २२३।।

तदेवं वैष्णवत्वेनैव शिवभजनं युक्तम् । केचित्तु वैष्णवास्तत्पूजनमावश्यकत्वेनोपरिथतं

---

दारुणः काष्ठात् सकाशात्, धूमः प्रवृत्ति स्वभावः, त्रयीमयः वेदोक्त कर्मप्रचुरः, ईषत् कर्म प्रत्यासत्तेः । तस्मादपि अग्निस्त्रयीमयः साक्षात् कर्म साधनत्वात् । एवं तमसः सकाशात रजो ब्रह्म दर्शनं ब्रह्म प्रकाशकम् तु शब्देन लयात्मकात् तमसः सकाशाद्रजसः सोपाधिक ज्ञान हेतुत्वेन कथञ्चिद् ब्रह्म दर्शन प्रत्यासत्तिमात्र मुक्तं नतु सर्वथा तत् प्रकाशकत्वं विक्षेपकत्वात् । यत् सत्त्वं तत् साक्षात् ब्रह्म दर्शनम् । अतस्तत्तद् गुणोपाधीनां हर ब्रह्मादीनामपि यथोत्तरं वैशिष्ट्यमिति भावः ।"

जिस प्रकार स्वाभाविक प्रवृत्ति प्रकाश रहित काष्ठ से प्रवृत्तिस्वभाव धूम श्रेष्ठ है, उस प्रकार लयात्मक तमोगुण से सोपाधिक ज्ञान हेतुक विक्षेपात्मक रजोगुण श्रेष्ठ है, उस से साक्षात् ब्रह्म दर्शन हेतु प्रकाश बहुल सत्त्व गुण श्रेष्ठ है । अतएव श्रीशिव, श्रीब्रह्मा, श्रीविष्णु के मध्य में श्रीविष्णु ही श्रेष्ठ हैं । इत्यादि वचनों के द्वारा श्रीविष्णु का ही स्वयमीश्वरत्व प्रतिपादित है । ब्रह्म पुराण में श्रीशिव वाक्य भी उस प्रकार ही है ।

"यो हि मां द्रष्टुमिच्छेत ब्रह्माणं वा पितामहम् ।
द्रष्टव्यस्तेन भगवान् वासुदेवः प्रतापवान् ।।"२२१।।

जो व्यक्ति मुझ (शिव) को देखना चाहता है, अथवा पितामह ब्रह्मा का साक्षात्कार करना चाहता है, उसके पक्ष में प्रतापवान् वासुदेव ही द्रष्टव्य है । कारण, भगवान् वासुदेव का साक्षात् कार होने से श्रीशिव एवं ब्रह्मा का साक्षात् कार स्वतः ही निष्पन्न होता है ।।२२१।।

श्रीवासुदेव को जानने से सब का परिज्ञान होता है अतएव सार्वभौम श्रीचिन्तामणि दीक्षित ने भी कहा है—

"वनमालिनि यादृशाशयो, मम तादृङ् न कपालमालिनि ।
असिते मुदिरे यथा शिखी, मुदमभ्येति तथा न पाण्डुरे ।।२२।।
देव्यस्तटिन्यस्त्रिदशास्तड़ागा, विश्वेश्वरोऽयं सरितामधीशः ।
तृष्णाहरः कोऽपि न कृष्णमेघं, विहाय चिन्तामणिचातकस्य ।।" २२३।।

वनमालि श्रीकृष्ण में जिस प्रकार चित्त विभोर होता है—उस प्रकार कपालमाली को देखने से नहीं होता है । मयूर, निविड़ नील मेघमाला को देखकर जिस प्रकार आनन्दित होता है । उस प्रकार शुभ्र मेघ को देखकर आनन्दित नहीं होता है ।।२२२।।

देवीगण नदी स्वरूपा हैं, देववृन्द–तड़ाग सदृश हैं विश्वेश्वर तो सरित् पति ही हैं, किन्तु चिन्तामणि चातक के पक्ष में कृष्णमेघ व्यतीत अपर कोई भी तृष्णाहरणकारी नहीं है ।।२२३।।

यह सब प्रमाणों के द्वारा निर्णय होता है कि वैष्णव श्रेष्ठ रूप में ही श्रीशिव का भजन करना कर्त्तव्य है । स्वतन्त्र ईश्वर रूप से नहीं । यदि किसी

चेत्तर्हि तस्मिन्नधिष्ठाने श्रीभगवन्तमेव पूजयन्ति, यथा श्रीविष्णुधर्मोत्तरान्तिमोऽयमितिहासः,---विश्वक्सेन-नामा कश्चिद्विप्र एकान्ति-भागवतः पृथिवीं विचरन्नासीत्, स कदाचिदेक एव वनान्ते उपविष्टः। तत्राथ ग्रामाध्यक्षसुतः कश्चिदागतस्तमुवाच— कोऽसीति । ततः कृतस्वाख्यानं पुनस्तमुवाच,— मम शिरः पीड़ाद्य जातेति निजेष्टं देवं शिवं पूजयितुं न शक्नोमीत्यतो मम प्रतिनिधित्वेन त्वमेव तं पूजयेति । एतदनन्तरञ्च तत्रत्यं सार्द्धं पद्यम्—

"एतदुक्तः प्रत्युवाच वयमेकान्तिनः श्रुताः ॥२२४॥
चतुरात्मा हरिः पूज्यः प्रादुर्भावगतोऽथवा । पूजयामश्च नैवान्य तस्मात्त्वं गच्छ माचिरम् ॥"२२५॥

ततस्तस्मिंस्तदनङ्गीकृतवति स खड्गमुन्नमितवान् शिरश्छेत्तुम् । ततश्चासौ विप्रः स्तब्धस्तेन मृत्युमनभीप्सन् विचार्य्योक्तवान्,—'भद्रं तत्रैव गच्छामः' इति । गत्वा चेदं मनसि चिन्तितम्,-

---

वैष्णव जन को अवश्य कर्त्तव्य रूप में श्रीशिव पूजन आवश्यक होता है तो, उक्त शिव लिङ्गाधिष्ठान में भगवान् श्रीहरि की पूजन करनी चाहिये। इस प्रकार सदाचार का विवरण श्रीविष्णु धर्मोत्तर ग्रन्थ के शेषभाग में इस प्रकार है—विष्वक्सेन नामक एक ब्राह्मण एकान्त वैष्णव थे, उनकी निष्ठा श्रीहरि में थी, किसी समय आप पृथिवी भ्रमण में निर्गत होकर एक वन में अवस्थान कर रहे थे। उस समय एक ग्रामाध्यक्ष के पुत्र आकर उन से कहा—तुम कौन हो ? उत्तर में भक्त ब्राह्मण ने कहा—मैं वैष्णव ब्राह्मण हूँ। उक्त ग्रामाध्यक्ष पुत्र ने पुनर्वार उन से कहा— आज मेरी शिरः पीड़ा हो रही है, मैं इष्टदेव शिव की पूजा करने में असमर्थ हूँ। अतः तुम मेरा प्रतिनिधि होकर शिव पूजा सम्पन्न करो। इस प्रकार कथोपकथन के पश्चात् विष्णु धर्मोत्तर के सार्द्ध श्लोक इस प्रकार है—

"एतदुक्तः प्रत्युवाच वयमेकान्तिनः श्रुताः ॥२२४॥
चतुरात्मा हरिः पूज्यः प्रादुर्भावगतोऽथवा ।
पूजयामश्च नैवान्यं तस्मात्त्वं गच्छ माचिरम् ॥"२२५॥

अर्थात् ग्रामाध्यक्ष पुत्र के प्रार्थना वाक्य को सुनकर उक्त भक्त ब्राह्मण कहे थे—हे युवक ! हम श्री भगवान् के एकान्ती भक्त रूप में सर्वत्र ख्यात हैं, एकमात्र तुरीय स्वरूप श्रीहरि ही यदि वासुदेव, सङ्कर्षण, प्रद्युम्न, अनिरुद्ध रूप में आविर्भूत होते हैं तो पूजा कर सकते हैं, अर्थात् श्रीविष्णु विग्रह की पूजा हम करते हैं। किन्तु अन्य देवता की पूजा नहीं करते हैं। अतएब तुम यहाँ से आशु चले जाओ। अनन्तर उक्त भक्त ब्राह्मण किसी प्रकार श्रीशिव पूजा करने में सम्मत न होने पर ग्रामाध्यक्ष पुत्र ने ब्राह्मण का मस्तक छेदन करने के निमित्त खड्ग उत्तोलन किया,यह देखकर स्तम्भित होकर ब्राह्मण सोचने लगे,इस युवकके हाथ से मृत्यु वरण करना अभीप्सित नहीं है। इस सङ्कट में करना क्या है ? इस प्रकार अनेक विचार कर ब्राह्मण ने कहा—आच्छा, मैं जा रहा हूँ। अनन्तर शिवलिङ्ग के निकट उपस्थित होकर मन मन में इस प्रकार विचार करने लगे—यह शिव प्रलय हेतु तमोगुण वर्द्धक होने के कारण तमोभावापन्न हैं, और श्रीनृसिंहदेव भी तामस दैत्य वृन्द को विदीर्ण कारी होने के कारण तमोगुण भजन कारी हैं, तमोगुण नाश हेतु तमोराशि नाशक सूर्य्य के समान तामस दैत्य वृन्द के मध्य में उदित होते हैं।

यह ग्रामाध्यक्ष पुत्र दैत्य स्वभावा क्रान्त है, अतएव शिव उपासक दुष्ट वृन्द के दुष्ट भाव विनष्ट करने के निमित्त शिवाकार अधिष्ठान में श्रीनृसिंह देव की पूजा मैं करूँगा। इस प्रकार निश्चय करके "श्रीनृसिंहाय नमः" कहकर जब ब्राह्मणने पुष्पाञ्जलि प्रदान करने के निमित्त उद्यत हुआ तो, ग्रामाध्यक्ष

'अयं रुद्रः प्रलयहेतुतया तमोवर्द्धनत्वात्तमोभावः, श्रीनृसिंहदेवश्च तामसदैत्यगणविदारकतया तमोभञ्जनकर्त्तृत्वात्तद्-भञ्जनार्थमेव तत्रोदयेत सूर्य्य इव तमोराशेः, अतो रुद्राकाराधिष्ठानेऽपि तदुपासकानामेषां तमोभञ्जनकृते श्रीनृसिंहपूजामेवास्मिन् कारिष्यामि' इति । अत 'श्रीनृसिंहाय नमः इति गृहीतपुष्पाञ्जलौ तस्मिन् पुनः क्रोधाविष्टेन ग्रामाध्यक्षपुत्रेण खड्गः समुद्यमितः । ततश्चाकस्मात्तदेव लिङ्गं स्फोटयित्वा श्रीनृसिंहदेवः स्वयमाविर्भूय तं ग्रामाध्यक्ष-पुत्रं सपरिकरं जघान । दक्षिणस्यां दिश्यतिप्रसिद्धो 'लिङ्गस्फोट' नामा तत्र स्वयं स्थितवानिति ।

अतोऽनन्यभक्ताः श्रीशिवमपि वैष्णवत्वेनैव मानयन्ति, केचित् कदाचित्तदधिष्ठानत्वेनैव वा अतएवोक्तमादिवाराहे—

जन्मान्तरसहस्रेषु समाराध्य वृषध्वजम् । वैष्णवत्वं लभेद्धीमान् सर्वपापक्षये सति ॥"२२६ ॥ इति

अतएव श्रीनृसिंह-शिवभक्तयोरन्तरं वृहदेव, श्रीनृसिंहतापन्यां श्रुतौ (पू० ५।१०)—"अनुपनीत शतमेकमेकेनोपनीतेन तत्समम्, उपनीतशतमेकमेकेन गृहस्थेन तत्समम्, गृहस्थशतमेकमेकेन वानप्रस्थेन तत्समम्, वानप्रस्थशतमेकमेकेन यतिना तत्समम्, यतीनान्तु शतं पूर्णमेकेन रुद्रजापकेन तत्समम्, रुद्रजापकशतमेकमेकेनार्थर्वाङ्गीरस–शिखाध्यापकेन तत्समम्, अथर्व्वाङ्गीरसशिखाध्यापकशतमेकमेकेन मन्त्रराजाध्यापकेन तत्समम्" इति । मन्त्रराजश्च तत्र श्रीनृसिंहमन्त्र एवेति ।

स्वतन्त्रत्वेन भजने तु भृङ्गशापो दुरत्ययः, यथा चतुर्थे (भा० ४।२।२७-२८) —

---

पुत्र पुनर्वार क्रोधाविष्ट होकर ब्राह्मण के मस्तक छेदन करने के निमित्त खड्ग को उठालिया । तत्क्षणात् अकस्मात् उस शिव लिङ्ग को भेद करके श्रीनृसिंह देव स्वयं प्रकट हो गये एवं ग्रामाध्यक्ष पुत्र को सपरिकर विनष्ट कर दिये । अद्यापि दक्षिण देश में अति प्रसिद्ध लिङ्ग स्फोट नामक श्रीनृसिंह देव विद्यमान् हैं । अतएव अनन्य विष्णु भक्त वृन्द श्रीशिव की पूजा वैष्णव श्रेष्ठ रूप से ही करते हैं । अथवा कतिपय ऐकान्तिक विष्णु भक्त श्रीविष्णु के अधिष्ठान रूप में ही श्रीशिव की पूजा करते हैं । एतज्जन्य आदि वराह पुराण में उक्त है—

"जन्मान्तरसहस्रेषु समाराध्य वृषध्वजम् ।
वैष्णवत्वं लभेद्धीमान् सर्वपापक्षये सति ॥"२२६॥

अर्थात् बुद्धि मान् व्यक्ति सहस्र सहस्र जन्म वृषभध्वज महादेव की आराधना करके सर्व पापक्षय होने से वैष्णवत्व लाभ करते हैं । अतएव श्रीनृसिंह तापनी श्रुति में श्रीनृसिंह एवं शिव भक्त के मध्य बहुल पार्थक्य दृष्ट होते हैं । यथा अनुपनीत एकशत ब्राह्मण बालक उपनीत एक बालक के समान हैं, एक शत ब्राह्मण, एक गृहस्थ के समान हैं, एकशत गृहस्थ, एक वानप्रस्थ के समान हैं, एकशत वान प्रस्थ एक सन्न्यासी के समान हैं, एकशत सन्न्यासी एक रुद्रजापक के समान हैं, एकशत रुद्रजापक—एक अथर्व वेदान्तर्गत आङ्गिरस शाखाध्यापक के समान हैं, एकशत अथर्वाङ्गीरस शाखाध्यापक एक मन्त्रराजाध्यापक के समान हैं, श्रीनृसिंह तापनी में लिखित "मन्त्रराज" शब्द से श्रीनृसिंह मन्त्र को जानना होगा । स्वतन्त्र

"भृगुः प्रत्यसृजच्छापं ब्रह्मदण्डं दुरत्ययम् ॥२२७॥
भवव्रतधरा ये च ये च तान् समनुव्रताः ।
पाषण्डिनस्ते भवन्तु सच्छास्त्रपरिपन्थिनः ॥"२२८॥ इत्यादि ।

वेदविहितमेवात्र भवव्रतमनूद्यते, अन्यविहितत्वे पाषण्डित्वविधानायोगः स्यात्, पूर्व्वत एव पाषण्डित्वसिद्धेः । अथ तत्परिपन्थकानां श्रीभागवतादीनां सच्छास्त्रत्वमायातम्, तत् पुरस्कृतानां सूतसंहितानामसच्छास्त्रत्वं स्पष्टमेव । तस्मात् स्वतन्त्रत्वेनैवोपासनायामयं दोषः, यतश्च तत्रैव तेन श्रीजनार्द्दनस्यैव वेदमूलत्वमुक्तम् (भा० ४।२।३१)

"एष एव हि लोकानां शिवः पन्थाः सनातनः ।
यं पूर्व्वे चानुसंतस्थुर्यत् प्रमाणं जनार्द्दन, ॥"२२९ ॥ इति ।

एष वेदलक्षणो यत् प्रमाणं यत्र मूलमित्यर्थः । अतएवान्वयेनापि श्रीविष्णुभक्तिर्दृढ़ीकृता,

---

ईश्वर बुद्धि से श्रीशिव की उपासना करने से किन्तु दुर्निवार भृगुशाप उपस्थित होगा ।

भा० ४।२।२७–२८ में भृगुमुनि का अभिसम्पात वर्णित है ।

"भृगुः प्रत्यसृजच्छापं ब्रह्मदण्डं दुरत्ययम् ॥२२७॥
भवव्रत धरा ये च ये च तान् समनुव्रताः ।
पाषण्डिनस्ते भवन्तु सच्छास्त्रपरिपन्थिनः ॥"२२८॥

टीका—प्रत्यसृजत्- प्रत्यदात् । शापरूपं ब्रह्म दण्डम् । सच्छास्त्रस्य परिपस्थिनः— प्रति कूलाः ।

भृगुमुनि,—शिवानुचर, नन्दीश्वर का अभिशाप को सुनकर दुरतिक्रम ब्रह्मदण्डरूप प्रति अभिशाप प्रदान किये थे । जो लोक महा देव के व्रतधारी हैं, एवं जो महादेव भक्त के आनुगत्यस्वीकार करेंगे, वे सब ही सच्छास्त्र, वेद एवं वेदानुगत शास्त्र का प्रति कूल पाषण्डी हों । यहाँ "भवव्रत" शब्द से वेद विहित भवव्रत को जानना होगा । वेदविरुद्ध शास्त्र विहित भवव्रत धारी जन गण स्वतः ही पाषण्डी होते हैं । सुतरां उन सब के प्रति अभिशाप प्रदान करने का कोई औचित्य नहीं है । कारण, वेद विरुद्ध शास्त्रानुशीलन कारी जनगण पाषण्डी हैं । स्वतन्त्र ईश्वर बुद्धि से श्रीशिव की उपासना करने से ही भृगुमुणि कृत अभिसम्पात जनित दोष उपस्थित होगा, कारण, इस प्रसङ्ग में भृगुने श्रीजनार्द्दन का वेदमूलत्व स्थापन किया है । भा० ४।२।३१

"एष एव हि लोकानां शिवः पन्थाः सनातनः ।
यं पूर्व्वे चानुसंतस्थू र्यत् प्रमाणं जनार्द्दनः ॥"२२९॥

अर्थात् वेद विहित उपाय ही मानव मात्र का सनातन मङ्गलमय पन्था है । पूर्वकाल में ऋषिवृन्द, निज निज अभीष्ट सिद्धि हेतु वेद को अवलम्बन किये थे । श्रीजनार्दन ही वेदों का मूल आश्रय हैं । अतएव अन्वय मुख से अर्थात् कर्त्तव्यता मुख से भी भा० १।२।२३ के द्वारा श्रीविष्णु भक्ति की दृढ़ता प्रतिपादन हुई ।

"सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तै र्युक्तः परः पुरुष एक इहास्य धत्ते ।
स्थित्यादये हरिविरिञ्चि हरेति संज्ञाः श्रेयांसि तत्रखलु सत्त्वतनो र्नृणां स्युः ॥"

टीका—तदेवमुपपादयितुं ब्रह्मादीनात्रयाणामेकात्मकत्वेऽपि वासुदेवस्याधिक्यमाह—सत्त्वमिति । इह यद्यपि एक एव परः पुमान्, अस्य विश्वस्य स्थित्यादये स्थितिसृष्टिलयार्थं हरिविरिञ्चि हरेति संज्ञाः

(भा० १।२।२३) "सत्त्वं रजस्तमः" इत्यादिना। तथा श्रीहरिवंशे शिव-वाक्यमेव (भविष्य-पु० ८९।८)—

"हरिरेव सदा ध्येयो भवद्भिः सत्त्वसंस्थितैः। विष्णुमन्त्रं सदा विप्राः पठध्वं ध्यात केशवम् ॥"२३०॥

तस्मात् श्रीशिवभक्तेरप्येवम्भूतत्वे स्थिते परासामपि देवतानां वैष्णवागमादौ तद्बहिरङ्गावरण-सेवकत्वेनाप्राकृतानामेव पूजाविधानम्। श्रीभगवल्लोकसंग्रहपराणां तल्लीलौपयिक-नरलीलापार्षदानां वा भगवत् प्रीणन-यज्ञादौ तु श्रीयुधिष्ठिर-राजसूयवदन्यासामपि तद्विभूतित्वेनैवेति ज्ञेयम्, यथानुष्ठितं श्रीप्रह्लादेन (भा० ७।१०।३२) —

"ततः संपूज्य शिरसा ववन्दे परमेष्ठिनम्।
भवं प्रजापतीन् देवान् प्रह्लादो भगवत्कलाः ॥"२३१॥

तदुक्तं श्रीयुधिष्ठिरेणैव (भा० १०।७२।३) —

"क्रतुराजेन गोविन्द राजसूयेन पावनीः।

---

केवलं भिन्ना धत्ते। हरिविरिञ्चि हरा इति वक्तव्ये सन्धिरार्षः। तत्र तेषां मध्ये श्रेयांसि शुभफलानि, सत्त्वतनोर्वासुदेवादेव स्युः॥

श्रीहरिवंश में श्रीशिव ही श्रीहरि भक्ति की दृढ़ता का प्रतिपादन किये हैं। भविष्यपुराण ८९।८)

"हरिरेव सदाध्येयो भवद्भिः सत्त्वसंस्थितैः।
विष्णु मन्त्रं सदा विप्राः पठध्वं ध्यात केशवम् ॥"१३०॥

हे विप्र वृन्द! सात्त्विक स्वभाव सम्पन्न, आप सब के पक्ष में सत्त्व मूर्त्ति श्रीकृष्ण का ध्यान करना कर्त्तव्य है। अतएव सर्वदा विष्णु मन्त्र जप करें एवं केशव का ध्यान करें। अतएव श्रीशिव भक्ति के सम्बन्ध में जब उस प्रकार सिद्धान्त गृहीत होता है, तब वैष्णव तन्त्रादि में अन्यान्य देवता की पूजा करने का जो विधान है, वहाँपर समझना होगा कि—श्रीभगवान् के ही वहिरङ्ग आवरण के सेवक होने के कारण वे सब ही अप्राकृत होते हैं। अथवा, श्रीभगवान् को लोक संग्रहपर नर लीला के उपयोगी पार्षद् वृन्द की पूजा विहित हुई है। तात्पर्य्य यह है कि—जिस समय, श्रीभगवान् नर जगत् में अवतीर्ण होकर मनुष्य लीला को प्रकट करते हैं, उस समय, साधारण मनुष्य के समान उन के प्रिय पार्षद वृन्द, विभिन्न देवताओं की आराधना करते हैं। एवं उक्त देवता वृन्द भी श्रीभगवान् की नर लीला के परिकर हैं। श्रीयुधिष्ठिर के राज्यसूय यज्ञ के समान श्रीभगवत् सन्तोषार्थ अनुष्ठित यज्ञादि में किन्तु अन्यान्य देव वृन्द की आराधना भगवद् विभूति बुद्धि से ही करनी चाहिये। यहाँपर भा० ७।१०।३२ में वर्णित श्रीप्रह्लाद महाशय आचरण दृष्टान्त रूप में उपस्थापित है —

"ततः संपूज्य शिरसा ववन्दे परमेष्ठिनम्।
भवं प्रजापतीन् देवान् प्रह्लादो भगवत् कलाः ॥"२३१॥

ऐकान्तिक श्रीहरिभक्त के पक्ष में उस प्रकार आचरण ही अभीप्सित है। अनन्तर श्रीप्रह्लाद महाशय-प्रजापति वृन्द एवं अन्यान्य देववृन्द की पूजा उत्तम रूप से सम्पन्न करके अवनत मस्तक के द्वारा वन्दना किये थे। यहाँपर मूल श्लोक में "भगवत् कलाः" विशेषण पद का उल्लेख स्पष्टतः ही हुआ है। श्रीभ० १०।३२।३ में श्रीयुधिष्ठिर महाराज की उक्ति भी तदनुरूप ही है।

"क्रतुराजेन गोविन्द राजसूयेन पावनीः।

यक्ष्ये विभूतीर्भवतस्तत् सम्पादय नः प्रभो ।।"२७२।। इति ।

विभूतित्वेनैवेत्थमुक्तं पाद्मे कार्त्तिक-माहात्म्ये च श्रीसत्यभामां प्रति श्रीभगवता—

"सौराश्च शैवा गाणेशा वैष्णवाः शक्तिपूजकाः । मामेव प्राप्नुवन्तीह वर्षापः सागरं यथा ।।२३३।।

एकोऽहं पञ्चधा जातः क्रीड़या नामभिः किल । देवदत्तो यथा कश्चित् पुत्रादिजन-नामभिः ।।"२३४।।

वस्तुतस्तु सर्वापेक्षया श्रीवैष्णवा एव श्रेष्ठाः, तदुक्तं स्कान्दे ब्रह्मनारद-संवादे, तत्रैवान्यत्र प्रह्लादसंहितायामेकादशी--जागरणप्रसङ्गे च—

"न सौरो न च शैवो वा न ब्राह्मो न च शाक्तिकः ।
न चान्यदेवता--भक्तो भवेद्भागवतोपमः ।।"२३५।। इति ।

तादृश-सौरादीनां तत्प्राप्तिश्च न केवलं तद्धेतुकैव, किन्तु भगवत् प्रीत्यर्थकृत-तज्जात शुद्धभक्ति-द्वारा वा श्रीविष्णुक्षेत्रमरणादिप्रभावेण वा, यथा तत्रैव वर्णितयोर्देवशर्म्म-चन्द्र—

---

यक्ष्ये विभुतीर्भवतस्तत् सम्पादय नः प्रभो ।।"२३२।।

टीका—विभूतीः—अंशान् ।

अर्थात् हे गोविन्द ! निखिल यज्ञ श्रेष्ठ राजसूय यज्ञ के द्वारा तुम्हारी पवित्र कारिणी विभुति समूह को आराधना करूँगा । इस का समाधान तुम करो, तुम, सब समाधान करने में समर्थ हो, अतः मेरा अभिलाष पूर्ण करो । इस श्लोक में श्रीयुधिष्ठिर महाराज देवतान्तर की अर्च्चना भगवान् की विभूति रूप में करने का अभिलाष प्रकाश किये थे ।

पद्म पुराण के कार्त्तिक माहात्म्य में श्रीसत्यभामा को भगवान् श्रीकृष्ण कहे थे—हे देवि ! वर्षाकाल के वर्षित जल समूह जिस प्रकार समुद्र प्रविष्ट होते हैं, उस प्रकार जो लोक, शिव, गणेश, विष्णु, एवं शक्ति सूर्य्य की उपासना करते हैं, वे सब भी मुझ को प्राप्त करते हैं । जिस प्रकार एक देवदत्त, पिता, भ्राता पुत्र प्रभृति विभिन्न नामों से अभिहित होता है, उस प्रकार ऐक ही मैं श्रीकृष्ण,—क्रीड़ा ऐवं नाम भेद से पञ्चधा प्रकटित होता हूँ ।

"सौराश्च शैवा गाणेशा वैष्णवाः शक्तिपूजकाः ।
मामेव प्राप्नुवन्तीह वर्षापः सागरं यथा ।।२३३।।
एकोऽहं पञ्चधा जातः क्रीड़या नामभिः किल ।
देवदत्तो यथा कश्चित् पुत्रादिजन-नामभिः ।।"२३४।।

वस्तुतः सकल उपासकों के मध्य में श्रीवैष्णव ही श्रेष्ठ है । इस प्रकार उक्ति, स्कन्द पुराण के ब्रह्म नारद संवाद में एवं उक्त स्कन्द पुराण के अन्यत्र एकादशी जागरण प्रसङ्ग में एवं प्रह्लाद संहिता में श्रीवैष्णव का श्रेष्ठत्व वर्णित है—

"न सौरो न च शैवो वा न ब्राह्मो न च शाक्तिकः ।
न चान्यदेवता-भक्तो भवेद्भागवतोपमः ।।"२३५।।

श्रीभगवद् भक्त के तुल्य सूर्य्य उपासक नहीं होते हैं, शिव उपासक, ब्रह्मा का उपासक, अथवा शक्ति उपासक तुल्य नहीं होते हैं, अधिक कहना क्या है ? अपरदेव गण के भक्त भी वैष्णव के सदृश नहीं होते हैं ।

पद्म पुराण के कार्त्तिक माहात्म्य में श्रीसत्यभामा के निकट श्रीकृष्ण जो कहे थे—कि सर्व देवोपासक की ही भगवत् प्राप्ति होती है—उसका तात्पर्य्य यह है कि—सूर्य्यादि विभिन्न देव गण की उपासना ही श्रीभगवत् प्राप्ति के हेतु नहीं है, किन्तु सूर्य्यादि देव गण की उपासना यदि भगवत् प्रीति के उद्देश्य से होती

"प्राप्यापि दुर्लभतरं मानुष्यं विबुधेप्सितम् । यैराश्रितो न गोविन्दस्तैरात्मा वञ्चितश्चिरम् ।।२६९।।
अशीतिश्चतुरश्चैव लक्षांस्तान् जीवजातिषु भ्रमद्भिः पुरुषैः प्राप्य मानुष्यं जन्म पर्य्ययात्।।१७०।।
तदप्यफलतां जातं तेषामात्माभिमानिनाम् वराकाणामनाश्रित्य गोविन्दचरणद्वयम्।।२७१।।इति।।
श्रीब्रह्मा देवान् ।।

१०९ । तथा (भा० ५।१८।१२) —

(१०९) "यस्यास्ति भक्तिर्भगवत्यकिञ्चना, सर्व्वैर्गुणैस्तत्र समासते सुराः ।
हरावभक्तस्य कुतो महद्गुणा, मनोरथेनासति धावतो वहिः ।।"२७२)

अकिञ्चना निष्कामा, गुणैर्ज्ञानवैराग्यादिभिः सह सर्व्वे शिव-ब्रह्मादयो देवाः सम्यगासते ।।
प्रह्लादः श्रीनृसिंहम् ।।

---

"प्राप्यापि दुर्लभतरं मानुष्यं विबुधेप्सितम् ।
यैराश्रितो न गोविन्दस्तैरात्मा वञ्चितश्चिरम् ।।२६९।।
अशीतिश्चतुरश्चैव लक्षांस्तान् जीवजातिषु ।
भ्रमद्भिः पुरुषैः प्राप्य मानुष्यं जन्म पर्य्ययात् ।।२७०।।
तदप्यफलतां जातं तेषामात्माभिमानिनाम् ।
वराकाणामनाश्रित्य गोविन्दचरणद्वयम् ।।"२७१।।

देववृन्द के अभिलषित दुर्ल्लभतर मनुष्य जन्म प्राप्तकर गोविन्द के चरणारविन्द का आश्रय ग्रहण न करने पर अनादि काल तक आत्म वञ्चक होना पड़ता है । चतुरशीति लक्ष जीव योनि में भ्रमण करते करते पर्य्याय क्रम से मानव जीवन प्राप्त कर आत्माभिमानी क्षुद्रचेता मानव, श्रीगोविन्द के चरण का आश्रय न करके मानव जन्म को विफल बना देता है ।।

श्रीब्रह्मा देववृन्द को कहे थे ।।१०८।।

१०९ । उक्त प्रकार भा० ५।१८।१२ में उक्त है—

(१०९) "यस्यास्ति भक्तिर्भगवत्यकिञ्चना, सर्व्वैर्गुणैस्तत्र समासते सुराः ।
हरावभक्तस्य कुतो महद्गुणा, मनोरथेनासति धावतो वहिः ।।"१७२।।

मानसमलापगमफलमाह । यस्येति । अकिञ्चना—निष्कामा । मनः शुद्धौ हरेर्भक्तिर्भवति, ततश्च तत् प्रसादे सति सर्वे देवाः सर्वे गुणैश्च धर्म ज्ञानादिभिः सह तत्र सम्यगासते--नित्यं वसति । गृहाद्यासक्तस्य तु हरि भक्त्यसम्भवात् कुतोमहतां गुणा ज्ञानवैराग्या दयो भवन्ति ? असति विषयसुखे मनोरथेन वहिर्धावतः ।।

अन्वय व्यतिरेक मुख से श्रीभगवद् भक्ति का अभिधेयत्व भाः ५।१८।१२ में प्रतिपादित है । "हे प्रभो मनः शुद्धि होने से श्रीहरि के प्रति भक्ति होती है, अनन्तर श्रीभगवान् की प्रसन्नता से समस्त देव वृन्द धर्म ज्ञानादि समस्त गुणों के सहित उक्त भक्त में निवास करते हैं । जो व्यक्ति, गृहादि में आसक्त हैं, उन के पक्ष में श्रीभगवान् में भक्ति का उदय होना असम्भव है । जिस में भगवद् भक्ति होना ही असम्भव है, उस में कैसे महापुरुष गण के गुण, ज्ञान एवं वैराग्य प्रभृति हो सकते हैं । कारण, भगवद् वहिर्मुख भक्ति हीन व्यक्ति - विषय--भोग हेतु निरन्तन भगवद् वहिर्मुख होकर असत् पथ में धावित होते रहते हैं ।

११० । अतएव तत्तन्मार्गसिद्धानां मुनीनामप्यनादरः (भा० ३।९।१०)–

(११०) "अह्न्यापृतार्त्तकरणा निशि निःशयाना, नानामनोरथधिया क्षणभग्ननिद्राः।
दैवाहतार्थ-रचना मुनयोऽपि देव, युष्मत्प्रसङ्गविमुखा इह संसरन्ति ॥"२७३।

अह्नि व्यापृतेत्यादि, युष्मद्भजनविमुखाः संसारिणो भवन्ति, किं बहुना ? तत्तन्मार्गसिद्धा मुनयोऽपि युष्मत् प्रसङ्गविमुखाश्चेत् इह जगति तद्वदेव संसरन्ति, अथवा मुनयोऽपि

---

मूल श्लोकस्थित अकिञ्चन शब्द का अर्थ- निष्काम है। गुण एवं वैराग्य के सहित शिव, ब्रह्मा प्रभृति देवगण उक्त भक्त में नित्यवास करते रहते हैं।

प्रह्लाद श्रीनृसिंहदेव को कहे थे ॥१०९॥

११०। अतएव ज्ञानादि मार्ग में सिद्ध मुनिवृन्द भी यदि भक्ति विमुख होते हैं तो उन सब मुनिवृन्द के प्रति अनादर प्रकाश कर भा० ३।९।१० में ब्रह्मा श्रीगर्भोदशायी भगवान् को कहे थे।

(११०) "अह्न्यापृतार्त्तकरणा निशि निःशयाना,
नानामनोरथधिया क्षणभग्ननिद्राः।
दैवाहतार्थ–रचना मुनयोऽपि देव,
युष्मत् प्रसङ्गविमुखा इह संसरन्ति ॥"२७३॥

टीका—ननु भवत्येवमविवेकिनां, विवेकिनस्तु मुक्ता एवेति किं तेषां भक्त्या कृत्यम्, अत आह। अह्नि आपृतानि--व्यापृतानि च तान्यार्त्तानि क्लिष्टानि करणानीन्द्रियाणि येषाम्। रात्रौ विषय सुख लवोऽपि नास्ति, यतो निःशयानाः, स्वप्नदर्शनेन च क्षणे क्षणे भग्ननिद्राः। दैवेनाहताः, सर्वतः प्रतिहताः, अर्थानां रचना अर्थार्थोद्यमा येषाम् ॥"१०॥

हे प्रभो ! भक्ति हीन अविवेकी जन वृन्द का संसार दुःख तो निवृत्त होता ही नहीं विवेकी जन गण भी यदि तुम्हारे प्रति भक्ति नहीं करते हैं तो, उस दोष से उन सब में संसार दुःख उपस्थित होता रहता है। तुम्हारी एवं तुम्हारे भक्त वृन्द की चरित कथा में विमुख जो ऋषि गण हैं, वे सब दिवस में विभिन्न कार्य्य करते रहते हैं। एवं उपवासादि के द्वारा इन्द्रिय वृन्द को क्लिष्ट करते रहते हैं। रात्रि में निद्रित होने पर भी विभिन्न सङ्कल्पात्मक चित्त विक्षेप से क्षण क्षण में निद्रा भङ्ग हो जाती है। अतएव दिवस अथवा रजनी के मध्य में किसी प्रकार ऐन्द्रियक सुख लाभ नहीं होता है। दुरदृष्ट के कारण, अर्थ प्राप्त हेतु विभिन्न उद्योग भी विफल होते हैं। अर्थात् दिवस में विभिन्न कार्य्यों में व्यस्त रहते हैं, उपवासादि के द्वारा इन्द्रिय वृन्दको क्लिष्ट करते हैं। हे भगवन् । उक्त ऋषि गण यदि आपके एवं आपके भक्त वृन्दके भजन विमुख होते हैं तो वे सब संसार दशा को प्राप्त करते हैं। अधिक कहना ही क्या है ? उस उस साधन मार्ग में सिद्ध मुनि वृन्द भी यदि भगवत् प्रसङ्ग विमुख होते हैं। तो, वे सब, साधारण जन के समान संसार को प्राप्त करते हैं।

अथवा, मुनि वृन्द यदि भगवत् प्रसङ्ग विमुख होते हैं तो, उनको संसार होता है। उक्त मुनिवृन्द किस प्रकार अवस्था को प्राप्त करते हैं—उसका वर्णन करते हैं—दिवस में विविध कार्य्य करते रहते हैं। एवं उपासनादि के द्वारा इन्द्रिय वर्ग को क्लिष्ट करते हैं। अतएब वे सब विषय सुख एवं पारमार्थिक आनन्द से वञ्चित रहते हैं। भा० १०।२।३२ में लिखित है—

"येऽन्ये ऽरविन्दाक्ष विमुक्त मानिनः स्त्वय्यस्तभावादविशुद्धबुद्धयः।

तद्विमुखाश्चेत्तर्हि संसरन्त्येव। कथम्भूताः सन्तः संसरन्ति ? तत्राह—अह्लद्यापृतेत्यादि, (भा० १०।२।३२) "आरुह्य कृच्छ्रेण परं पदम्" इत्यादेः। अत उक्तं श्रीधर्म्मेण (भा० ६।३।१९।२२

"धर्म्मन्तु साक्षाद्भगवत् प्रणीतं, न वै विदुर्ऋषयो नापि देवाः।
न सिद्धमुख्या असुरा मनुष्याः, कुतो नु विद्याधर-चारणादयः ॥२७४॥
स्वयम्भूर्नारदः शम्भुः कुमारः कपिलो मनुः।
प्रह्लादो जनको भीष्मो बलिर्वैयासकिर्वयम् ॥२७५॥
द्वादशैते विजानीमो धर्म्मं भागवतं भटाः।
गुह्यं विशुद्धं दुर्बोधं यं ज्ञात्वामृतमश्नुते ॥१७६॥
एतावानेव लोकेऽस्मिन् पुंसां धर्म्मः परः स्मृतः ॥" २७७॥ इत्यादि।

---

आरुह्य कृच्छ्रेन परं पदं ततः पतन्त्यधोऽनादृत युष्मदङ्घ्रयः ॥"

टीका—ननु विवेकिनां किं मद् भजनेनः ? मुक्ता एव हि ते, तत्राहुः। येऽन्ये इति। विमुक्त मानिनो विमुक्ता वयमिति मन्यमानाः। त्वयि अस्तो निरस्तो अतएवासन् जो भावस्तस्मात् भक्ते रभावादित्यर्थः। न विशुद्धा बुद्धिर्येषां ते तथा। यद्वा त्वयि अस्तभाः इतिच्छेदः। अस्त मतयो वादेष्वेव विशुद्ध बुद्धयः। कृच्छ्रेण बहुजन्म तपसा परं पदं मोक्ष सन्निहितं सत् कुलतपः श्रुतादि। पतन्ति विघ्नैरभिभूयन्ते न आदृतौ युष्मदङ्घ्री यैस्ते।

हे कमल लोचन ! जो लोक भक्ति हीन होकर निज को स्थूल सूक्ष्म देह से विमुक्त हैं, इस प्रकार अभिमान करते हैं, आप के चरणारविन्द में उनकी भक्ति न होने के कारण चित्त शुद्धि नहीं होती है, अर्थात् ऐहिक पारत्रिक सुख भोग में वितृष्णा नहीं होती है। उक्त भक्ति हीन साधकगण अतीव क्लेश पूर्वक तपस्या एवं शास्त्रादि विचार सम्पन्न ब्राह्मणादि कुल में जन्म ग्रहण करके भी आपके एवं आप के भक्त वृन्द के चरणों का अनादर करते हैं, तज्जन्य अपराधग्रस्त होकर अधः पतित होते हैं, अर्थात् जन्म मरण रूप संसार सरणि में गमनागमन करते रहते हैं।

अतएव भा० ६।३।१९—२२ में धर्म राजने निज भृत्यवर्ग के प्रति कहा—

"धर्मन्तु साक्षाद् भगवत् प्रणीतं, न वै विदुर्ऋषयो नापि देवाः।
न सिद्धमुख्या असुरा मनुष्याः कुतो नु विद्याधर चारणादयः ॥"२७४॥

टीका—ननु विष्णु भक्ताश्चेत् कथमधर्म पक्षपातं कृतवन्त स्तत्राह—धर्ममिति। ऋषयो भृग्वादयः।

हे भक्त वृन्द ! साक्षात् भगवान् कर्तृक कथित धर्म को ऋषि गण किन्तु नहीं जानते हैं, सिद्ध मुख्य गण भी नहीं जानते हैं, अतएव असुर गण, मनुष्यगण, विद्याधर गण, चारण गण जो नहीं जानते हैं, उस का विवरण क्या कहें ? केवल स्वयम्भु, नारद, शम्भु कुमार, (चतुःसन) कपिल, मनु, प्रह्लाद, जनक, भीष्म, बली वैयासकी (शुक) और मैं (यमराज) यह द्वादश व्यक्ति धर्म को जानते हैं।

स्वयम्भूर्नारदः शम्भुः कुमारः कपिलो मनुः।
प्रह्लादो जनको भीष्मो बलिर्वैयासकिर्वयम् ॥२७५॥
द्वादशैते विजानीमो धर्म्मं भागवतं भटाः।
गुह्यं विशुद्धं दुर्बोधं यं ज्ञात्वामृतमश्नुते ॥२७६॥
एतावानेव लोकेऽस्मिन् पुंसां धर्म्मः परः स्मृतः ॥"२७७॥ इत्यादि।

एते धर्म्मप्रवर्त्तका विजानीम एव, न तु स्व-स्मृत्यादिषु प्रायेणोपदिशाम इत्यर्थः यतो गुह्यमप्रकाश्यं दुर्ब्बोधमन्यैस्तथा ग्रहीतुमशक्यञ्च। गुह्यत्वे हेतुः—यं ज्ञात्वेति। अमृतं परमं फलम्, (भ० र० सि० १।१।३८)—

"ब्रह्मानन्दो भवेदेष चेत् परार्द्धगुणीकृतः। नैति भक्तिसुखाम्भोधेः परमाणुतुलामपि॥"२७८।

इत्यादौ सूचितं परमत्वम्, (भा० १०।३३।३९) "विक्रीड़ितं व्रजबधूभिरिदञ्च विष्णोः" इत्यादौ "भक्तिं पराम्" इत्यादिनोक्तम्। "कृष्णाधरामृतास्वादसिद्धिरत्र" इत्यादौ किञ्चिद्-

---

कारण यह भागवत धर्म अति गुह्य, विशुद्ध (अप्राकृत) एवं दुर्बोध्य है। जिस भागवत धर्म को जान कर जन्म मृत्यु प्रवाह से मुक्त हो सकता है। अथवा भगवत् पार्षत् देह लाभ कर सकता है।

इस जगत् में मानव मात्र के निमित्त भागवत धर्म ही परम धर्म रूप में वर्णित हुआ है। धर्मशास्त्र के प्रवर्त्तक हम सब द्वादश जन उक्त धर्म को जानते तो हैं, किन्तु निजकृत स्मृति में उसका उल्लेख नहीं करते हैं। श्लोकोक्त 'विजानीमः' किया का इस प्रकार अर्थ जानना होगा। कारण, यह भागवत धर्म अति गोपनीय, अर्थात् अप्रकाश्य, एवं दुर्बोध्य है, अपर व्यक्ति, यथायथ रूप में ग्रहण करने में असमर्थ हैं। अति गोपनीय क्यों है? कहते हैं—जिस को जानकर मुक्त होता है, अर्थात् जन्ममृत्यु रूप संसार धर्म को अतिक्रम कर सकता है। अमृत शब्द का अर्थ है—परम फल। भक्ति रसामृतसिन्धु १।१।३८ में उक्त है—

"ब्रह्मानन्दो भवेदेष चेत् परार्द्धगुणीकृतः।
नैति भक्ति सुखाम्भोधेः परमाणु तुलामपि ॥२७८॥

टीका—परार्द्धेति—परार्द्धं कालं व्याप्य क्रियमाणेन समाधिना सिद्धं ब्रह्मसुखमपीत्यर्थः। भक्तिरूप सुख समुद्रस्य यः परमाणुस्तस्यापि तुलनां नैति—न प्राप्नोति॥

परार्द्ध काल पर्य्यन्त निरवच्छिन्न समाधि द्वारा सिद्ध ब्रह्म सुख प्राप्ति भी भक्ति रूप सुख समुद्र के एक परमाणु के तुल्य नहीं हो सकती है॥२७८॥

इस से भक्ति का सान्द्रानन्द सुखमयत्व सूचित हुआ है। अतएव निखिल पुरुषार्थ से भक्ति ही परम श्रेष्ठ पुरुषार्थ है। भा० १०।३३।३९ में उक्त है—

"विक्रीड़ितं व्रजबधूभिरिदञ्च विष्णोः
श्रद्धान्वितोऽनु श्रृणुयादथ वर्णयेद् यः।
भक्तिं परां भगवति प्रतिलभ्य कामं
हृद्रोग माश्वपहिनोत्यचिरेण धीरः॥"

टीका—भगवतः काम विजय रूप रास क्रीड़ा श्रवणादेः कामविजयमेव फलमाह—विक्रीड़ितमिति। अचिरेण धीरः सन् हृद्रोगं काममाशु अपहिनोतिपरित्यजतीति।

भगवान् श्रीकृष्ण की कामविजय लीला श्रवण से धीर व्यक्ति के हृदय से कामविदूरित हो जाता है, पश्चात् पराभक्ति की प्राप्ति होती है। यहाँ पर 'परां' शब्द से भक्ति का ही श्रेष्ठत्व प्रतिपादित हुआ है।

श्रीकृष्ण भक्ति से ही कृष्णाधरामृतास्वादसिद्धि होती है। यहाँ पर श्रीकृष्णाधरामृत का आस्वादन विशेष रूप से होता है। अतएव भा० ६।३।२५ में उक्त है—

"प्रायेण वेद तदिदं न महाजनोऽयं देव्या विमोहित मतिर्वत माययालम्।
त्रय्यां जड़ीकृतमतिर्मधुपुष्पितायां वैतानिके महति कर्मणि युज्यमानः॥"

विशदितमश्नुते। अतएव वक्ष्यते (भा० ६।३।२५)-"प्रायेण वेद तदिदं न मराजनोऽयम्" इत्यादि। महाजनो द्वादशभ्यस्तदनुगृहीत-सम्प्रदायिभ्यश्चान्यो महागुणयुक्तोऽपीत्यर्थः । तस्मात् साधूक्तम्—"अह्नचापृतार्त्ता-' इत्यादि ।। ब्रह्मा श्रीगर्भोदकशायिनम् ।।

१११। तदेवं श्रीभगवद्भक्तेरेव सर्व्वोद्ध्र्वमभिधेयत्वं स्थितम्, तथा च श्रीगीतासु (६।४६-४७)

"तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः।

---

टीका—यदुक्तं त्वर्थं तर्हि द्वादशाब्दादि स्मरणमिति-तत्राह प्रायेणेति। महाजनो मन्वादिः। अयम्भावः यथाभूत सञ्जीवनौषधमजानन्तो वैद्या रोग निर्हरणाय त्रिकटुकनिम्बादिनि स्मरन्ति, तथा स्वयम्भु, शम्भु, प्रमुख द्वादश व्यतिरेकेणायं महाजनोगुह्यमिदमज्ञात्वा द्वादशब्दादिकं स्मरतीति। किञ्च मायया देव्या अलं विमोहितमतिरयं जनः, मधुमधुरं यथा भवत्येवं पुष्पितायां पुष्पस्थानीयैरर्थवादै र्मनोहरायां त्रय्यां जड़ीकृता अभिनिविष्टा मतिर्यस्य अतएव महत्येव कर्मणि अग्निष्टोमादौ श्रद्धया युज्यमानः नाल्पे प्रवर्त्तते। दृश्यते च प्राकृतस्य लोकस्य महतिमन्त्रादौश्रद्धा, अल्पे चाश्रद्धा। तस्मादस्य ग्राहको नास्तीति तैर्नोक्तम्। यद्वा, स्वाधीनः सिंहोऽस्तीत्येतावताश्वश्वशृगालादिवारणाय तं यथा न प्रयुञ्जते, तथातितुच्छत्वात् पापस्य न तन्निरसनाय परममङ्गलं हरेर्नामस्मरन्ति। यद्वा नाममाहात्म्य ज्ञाने सर्वमुक्ति प्रसङ्गादित्येषा दिक्। ग्रन्थ विस्तरभयान्नाति प्रपञ्चयते।

अतएव धर्मराज यम ने कहा है—स्वयम्भु, शम्भु प्रमुख द्वादश महाजन व्यतीत अपर महाजन गण प्रायशः इस भागवद् धर्म को नहीं जानते हैं। कारण, उन सब की मति-अघटन घटन पटीयसी भगवन्माया द्वारा विमोहित है। तज्जन्य आपाततः मधुर पुष्पस्थानीय प्रशंसा वाक्यमय त्रिगुणमयी श्रुति में बुद्धि अत्यन्त अभिनिविष्ट है, अतः अति विस्तीर्ण अग्निष्टोमादि वर्णन में वे सब श्रद्धायुक्त हैं। अर्थात् अल्पश्रम साध्य भागवद् धर्म में उन सब की प्रवृत्ति नहीं होती है। जिस प्रकार मृत सञ्जीवनी औषधि का ज्ञान न होने से वैद्य वृन्द व्याधि निवृत्ति हेतु त्रिकटु निम्ब प्रभृति सेवन की व्यवस्था प्रदान करते हैं। उस प्रकार सुधामय भागवत धर्म का अनुसन्धान न होने के कारण साधन, साध्य उभय समय में ही दुःख प्रद बहु आयास साध्य अग्निष्टोमादि कर्म्मानुष्ठान की व्यवस्था प्रदान करते हैं। अथवा, जिस प्रकार किसी व्यक्ति के निकट परम स्वाधीन सिंह होने पर भी अतितुच्छ अश्व, कुक्कुर, शृगाल प्रभृति को विताड़ित करने के निमित्त सिंह को नियुक्त वह नहीं करता है, उस प्रकार अतितुच्छ पापनिवृत्ति हेतु परम मङ्गल श्रीहरिनाम का उपदेश नहीं वे देते हैं। किंवा, नाम माहात्म्यका ज्ञान होने से समस्त जीव मुक्त हो जायेंगे, इस भय से महाजनगण पापादि नाश हेतु मायाबन्ध विमोचक श्रीहरिनाम का उपदेश प्रदान नहीं करते हैं। श्लोकोक्त 'महाजन' पद से उक्त द्वादश महाजन स्वयम्भु प्रभृति एवं उक्त द्वादश महाजन कर्त्तृक अनुगृहीत सम्प्रदायाचार्य्य व्यतीत अपर महागुण युक्त महाजन गण भी इस भागवत धर्म को नहीं जानते हैं। इस प्रकार अर्थ समझना होगा। अतएव "अह्नया पृतार्त्त" इत्यादि श्लोक की व्याख्या अतीव मनोरम हुई है।

श्रीब्रह्मा—श्रीगर्भोदकशायी को कहे थे ।।११०।।

१११। उपरोक्त सिद्धान्त के द्वारा भगवद् भक्ति का ही सर्वोद्ध्र्व अभिधेयत्व सिद्ध हुआ। श्रीमद् भगवद् गीता के ६।४६--४७ में उक्त है—

"तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः।

कर्म्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्ज्जुन ॥२७६॥
योगिनामपि सर्व्वेषां मद्गतेनान्तरात्मना ।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ॥"२८०॥ इति ।

अत्र "योगिनामपि सर्व्वेषाम्" इति च पञ्चम्यर्थे एव षष्ठी, "तपस्विभ्यः" इत्यादिना तथैवोपक्रमात्, भजतः सर्व्वाधिक्यमेव विवक्षितञ्च । 'सर्व्व'-शब्दोऽत्र (गी० ४।२५) "दैवमेवापरे यज्ञं योगिनः पर्य्युपासते" इत्यादिना पूर्व्वपूर्व्वोक्तान् सर्व्वानप्युपायिनो गृह्णातीति ज्ञेयम् ।

---

कर्म्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्ज्जुन ॥२७६॥
योगिनामपि सर्व्वेषां मद्गतेनान्तरात्मना ।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ॥"२८०॥

टीका—"कर्म ज्ञान तपो योगवतां कः श्रेष्ठः—इत्यपेक्षायामाह—तपस्विभ्यः । कृच्छ्र चान्द्रायणादि तपोनिष्ठेभ्यो ज्ञानिभ्यो ब्रह्मोपासकेभ्योऽपि योगी परमात्मोपासकोऽधिकोमतः, इति ममेदमेव मतमिति भावः यदि ज्ञानिभ्योऽभ्यधिकस्तदा किं, अत कर्मिभ्य इत्याह—कर्म्मिभ्यश्चेति ॥४६॥

तर्हि योगिनः सकाशान्नास्त्यधिकः कोऽपीत्यवसीयते । तत्र मैवं वाच्यमित्याह—योगिनामिति । पञ्चम्यर्थे षष्ठी निर्द्धारणायोगात् । तपस्विभ्यो ज्ञानिभ्योऽधिक इति पञ्चम्यर्थ क्रमाच् च योगीभ्यः सकाशादपीत्यर्थः । न केवलं योगिभ्य एकविधेभ्यः सकाशात् अपितु योगिभ्यः सर्वेभ्यः-नानाविधेभ्यो योगारूढ़ेभ्यः संप्रज्ञात समाध्यसंप्रज्ञात समाधिमद्भ्योऽपीति । यद्वा—योगाः-उपायाः कर्म ज्ञान तपो योग भक्त्यादयस्तद्वतां मध्ये यो मां भजेत्, मद्भक्तो भवति स युक्ततमः—उपायवत्तमः । कर्म्मी तपस्वी ज्ञानी च योगीमतः । अष्टाङ्गयोगी योगितरः । श्रवण कीर्त्तनादि भक्तिमांस्तु योगितम इत्यर्थ. । यदुक्तं श्रीमद्भागवते मुक्तानामपि सिद्धानां नारायण परायणः ।

सुदुर्ल्लभः प्रशान्तात्मा कोटिष्वपि महामुने । इति ।"

हे अर्जुन ! तपस्वीगण से श्रेष्ठ योगीगण हैं, ज्ञानी गण से योगी श्रेष्ठ, कर्मिवृन्द से भी योगी श्रेष्ठ है । अतएव तुम योगी बनो । किन्तु समस्त योगियों के मध्य में मद्गत चित्त से निविड़ विश्वस्त होकर जो व्यक्ति मेरा भजन करता है, उसको में युक्ततम मानता हूँ । उक्त श्लोक में लिखित "योगिनामपि सर्वेषाम्" में षष्ठी विभक्ति पञ्चमी विभक्ति के स्थान में हुई है । निर्द्धारणार्थ में षष्ठी प्रयोग यहाँ नहीं हुआ है । कारण, 'तपस्विभ्यः" प्रभृति शब्द का प्रयोग, पञ्चमी विभक्ति द्वारा ही हुई है । इस श्लोक में भजन कारी का ही सर्व श्रेष्ठत्व प्रदर्शित हुआ है । 'उक्त श्लोक में 'सर्वेषां' पद का प्रयोग है, उक्त सर्व शब्द प्रयोग के द्वारा गी० ४।२५ से आरम्भ कर ४।२६ पर्य्यन्त समस्त संयम उपायों का संग्रह हुआ है ।

"दैव मेवापरे यज्ञं योगिनः पर्य्युपासते ।
ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोप जुह्वति । २५॥
श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।
शब्दादीन् विषयानन्य इन्द्रियाग्निषु जुह्वति ॥२६॥
सर्वाणीन्द्रिय कर्माणि प्राण कर्माणि चापरे ।
आत्म संयम योगाग्नौ जुह्वति ज्ञानदीपिते ॥२७॥
द्रव्ययज्ञा तपोयज्ञा योगयज्ञा स्तथापरे ।
स्वाध्याय ज्ञान यज्ञाश्च यतयः संशित व्रताः ॥२८॥

तदेवमभक्तनिन्दाश्रवणात् श्रीमद्भगवद्भक्तेः सर्व्वेषु नित्यत्वमपि सिद्धम् । उक्तञ्च श्रीभगवतोद्धवं प्रति (भा० ११।१८।४२)—"भिक्षोर्धर्म्मः शमोऽहिंसा तप ईक्षा वनौकसः"

---

अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे ।
प्राणापान गतीरुद्धा प्राणायाम परायणाः ।
अपरे नियता हाराः प्राणाः प्राणेषु जुह्वति ॥२९॥

टीका—यज्ञाः खलु भेदेनान्येऽपि बहवो वर्त्तन्ते तां स्तवं शृण्वित्याह । दैवमेवेत्यष्टभि । देवा इन्द्र वरुणादय इज्यन्ते यस्मिन् तं दैवमिति इन्द्रादिषु ब्रह्म बुद्धि राहित्यं दर्शितं । सास्य देवतेति तृण् । योगिनः कर्म्म योगिनः । अपरे ज्ञान योगिनस्तु ब्रह्म परमात्मैवाग्निस्तास्मिंस्तत् पदार्थे यज्ञं हविः स्थानीयं त्वं पदार्थं जीवं यज्ञेन प्रणव रूपेण मन्त्रेनैव जुह्वति । अयमेव ज्ञानयज्ञोऽग्रे स्तोष्यते । अत्र यज्ञं यज्ञेन इति शब्दौ कर्मकरण साधनौ प्रथमाति शयोक्त्या शुद्ध जीव प्रणवावाहतुः ।।२५।।

अन्ये नैष्ठिकाः श्रोत्रादीनीन्द्रियानि, संयमः संयतं मन एव, अग्नयस्तेषु जुह्वति, शुद्धेमनसि इन्द्रियाणि प्रविलापयन्तीत्यर्थः । अन्ये ततो न्यूना ब्रह्म चारिणः शब्दादीन् विषयान् इन्द्रियाग्नषु इन्द्रियान्येवाग्नयस्तेषु जुह्वति शब्दादीनिन्द्रियेषु प्रविलापयन्तीत्यर्थ ।।२६।।

अपरे शुद्ध त्वं पदार्थविज्ञाः । सर्वाणीन्द्रियाणि तत् कर्माणि श्रवण कीर्त्तनादीनि च । प्राण कर्म्माणि दशप्राणाः । तत् कर्माणि च, प्राणस्य वहिर्गमनं, अपानस्याधोगमनं, समानस्य भुक्त पीतादीनां समीकरणं, उदानस्योद्ध्र्वनयनं व्यानस्य विश्वक् नयनं । "उद्गारे नाग आख्यातः कूर्म्म उन्मीलनेस्मृतः । कृकरस्तु क्षुतिक्षेयोदेवदत्तो विजृम्भणे । न जहाति मृतञ्चापि सर्वव्यापी धनञ्जयः ।।" इत्येवं दशप्राणाः, तत्कर्माणि, आत्मनस्त्वं पदार्थस्य संयमः शुद्धिरेवाग्निस्तस्मिन् जुह्वति । मनोबुद्धिचादीन्द्रियाणि दश प्राणानाश्च प्रविलापयन्ति । एकः प्रत्यगात्मैवास्ति नान्ये मन आदय इति भावयन्तीत्यर्थः ॥२७॥

द्रव्यदानमेव यज्ञो येषां ते द्रव्ययज्ञाः । तपः कृच्छ्र चान्द्रायणादि एव यज्ञो येषां ते तपोयज्ञाः । योगोऽष्टाङ्ग एव, यज्ञो येषां ते योग यज्ञाः । स्वाध्यायो वेदस्य पाठः, तदर्थस्य ज्ञानञ्च यज्ञो येषां ते । यतयो यत्नपराः, सर्व्व एत सम्यक् शितं तीक्ष्णीकृतं व्रतं येषां ते ।।२८।।

अपरे प्राणायाम निष्ठाः । अपाने अधोवृत्तौ प्राणं ऊर्द्ध्ववृत्तं जुह्वति । पूरक काले प्राणमपानेनैकी कुर्वन्ति । तथा रेचक काले अपाने प्राणं जुह्वति । कुम्भक काले प्राणापानयोर्गती रुद्ध्वा प्राणायाम परायणा भवन्ति । अपरे इन्द्रिय जयकामाः । नियताहाराः– अल्पाहाराः । प्राणेषु आहार सङ्कोचेनैव जीर्य्यमानेषु प्राणान् इन्द्रियानि जुह्वति । इन्द्रियानां प्राणाधीन वृत्तित्वात् प्राण दौर्वल्ये सति स्वयमेव स्वस्व विषय ग्रहणासमानीन्द्रियाणि प्राणेष्वेव प्रलीयन्ते ।।२९।।

जो इस प्रकार यज्ञ में व्रती होता है, वह योगी है, यज्ञ समूह के प्रकार भेद से योगीवृन्द का भेद होता है । यज्ञ अनेक प्रकार होने के कारण ही योगी अनेक प्रकार होते हैं । वस्तुत समस्त यज्ञ—

कर्म यज्ञ, द्रव्य यज्ञ, एवं ज्ञान यज्ञ में अन्तर्भुक्त हैं । कर्म योगी गण दैव यज्ञ की उपासना करते हैं, उस में इन्द्र वरुणादि मायिक सामर्थ्य विशिष्ट अधिकृत पुरुषों का यजन होता है । उस से निष्काम कर्मयोगी होना सम्भव होता है । ज्ञान योगी गण, तत्वमसि महावाक्य को अवलम्बन पूर्बक त्वं पदार्थ जीव को प्रणव मन्त्र द्वारा तत् पदार्थ ब्रह्म में होम करते हैं ।।२५।।

नैष्ठिक गण, मनः संयम रूप अग्नि में श्रोत्रादि इन्द्रिय समूह को होम करते हैं । ब्रह्मचारी गण-- शब्दादि विषयसमूह को इन्द्रिय रूप अग्नि में होम करते हैं ।२६।।

इत्यादौ, (भा० ११।१८।४३) "सर्व्वेषां मदुपासनम्" इति, तथा श्रीनारदेन च सार्व्ववर्णिक-स्वधर्म्मकथने, (भा० ७।११।११) "श्रवणं कीर्त्तनञ्चास्य" इत्यादि अकरणे दोष-श्रवणञ्चान्यत्र

---

प्रत्यगात्मात्मा का अनुसन्ध न कारी कैवल्यवादी पातञ्जल योगी, समस्त इन्द्रिय कर्म एवं दशविध प्राणकर्म्म समूह को त्वं पदार्थ रूप शुद्ध जीवात्मा रूप अग्निमें होम करते हैं। विषयाभिमुखी आत्मा का नाम परागात्मा है। विषयत्यागी आत्मा का नाम प्रत्यगात्मा है। प्रत्यगात्मा व्यतीत मनः प्रभृति का अस्तित्वकोपातञ्जल योगी स्वीकार नहीं करते हैं ।।२७।।

समस्त यज्ञों को द्रव्य यज्ञ, तपोयज्ञ, योगयज्ञ, स्वाध्याय ज्ञानयज्ञ रूप चार भाग से विभक्त किया जा सकता है। द्रव्यमय यज्ञ को द्रव्य यज्ञ, कृच्छ्र चान्द्रायण, चातुर्मास्य प्रभृति तपोयज्ञ, एव अष्टाङ्ग योग को योग कहते हैं, वेदार्थ विचार पूर्वक चिदचिद् विचार को ज्ञान यज्ञ कहते हैं ।।२८।।

वेद एवं तदनुगत स्मृति शास्त्र में चार प्रकार यज्ञ परिलक्षित होते हैं। एतद्व्यतीत तन्त्रादि शास्त्र में हठयोग, विविध संयम रूप व्रतयज्ञ का उल्लेख है, तदनुगत व्यक्ति गण—प्राणायाम निष्ठ होकर अपान वायु में प्राण वायु को, प्राण वायु में अपान वायु को रुद्ध कर कुम्भक करते हैं। कतिपय व्यक्ति भोजन सङ्कोचकरके प्राण को प्राण में हवन कर देते हैं ।।२९।।

अतएव जो लोक भगवान् का भजन नही करते हैं वे सब निन्दित होते हैं, इस प्रकार उल्लेख होने के कारण—भगवद् भगवद् भक्ति का ही नित्यत्व सूचित हुआ है। अर्थात् जो भी व्यक्ति, जो भी साधनानुष्ठान क्यों न करें, भगवद् भक्ति करना सब के पक्ष में अवश्य कर्त्तव्य है। भक्ति व्यतीत, किसी भी साधन स्वतन्त्र रूप से फल देने में सक्षम नहीं हैं।

भा० ११।१८।४२–३ में श्रीभगवान् श्रीउद्धव को कहे हैं—

"भिक्षोर्धर्म्म शमोऽहिंसा तप ईक्षा वनौकसां,
गृहिणो भूतरक्षेज्या द्विजस्याचार्य्य सेवनम्।
ब्रह्मचर्य्यं तपः शौचं सन्तोषो भूत सौहृदम्।
गृहस्थस्याप्यृतौ गन्तुः सर्वेषामदुपासनम् ।।"

टीका—चतुर्णां प्रधान धर्मानाह--भिक्षोरिति।४२। अन्य धर्मान् कांश्चिद् गृहस्थस्यापि अतिदिशति ब्रह्म चर्य्यमिति। तपः शौचं रागादि राहित्यञ्च। तस्य ब्रह्मचर्य्य प्रकारमाह—ऋतौ गन्तु रिति।४३।

हे उद्धव! अन्तः करण संयम एवं अहिंसा यम दो सन्न्यासी के धर्म हैं। क्लेश सहन करना एवं ईक्षा (आत्मानु स धान करना) वान प्रस्थ के धर्म हैं। प्राणि वृन्द की रक्षा करना एवं यज्ञ यह दो, गृहस्थ के धर्म हैं। आचार्य्य की सेवा करना ब्रह्म चारी का धर्म है। केवल मात्र ऋतु काल में स्त्री सम्भोग करना गृहस्थ का धर्म है। ब्रह्मचारी वान प्रस्थी एवं सन्न्यासी के धर्म हैं—ब्रह्मचर्य्य रक्षा करना, तपस्या, शौच, सन्तोष, एवं प्राणी मात्र के प्रति बन्धु भाव स्थापन करना। किन्तु ब्रह्मचर्य्य, गृहस्थ, वानप्रस्थ एवं सन्नचास यह आश्रम चतुष्टय का अनिवार्य्य धर्म है—मेरी उपासना करना। अर्थात् समस्त आश्रमियों को मेरी उपासना अवश्य करना चाहिये। उक्त प्रमाण से प्रतिपन्न हुआ है कि—श्रीभगवान् के प्रति भक्ति करना समस्त आश्रमीयों का एकमात्र कर्त्तव्य है।

उस प्रकार श्रीनारद ने भी भा० ७।११।११ में सार्व वर्णिक धर्म वर्णन प्रसङ्ग में कहा है—

"श्रवणं कीर्त्तनञ्चास्य स्मरणं महतां गतेः।
सेवेज्यावनतिर्दास्यं सख्यमात्मसमर्पणम् ।।"

(भा० ११।५।२) "मुखबाहूरुपादेभ्यः" इत्यादि, तथा च महाभारते—

"मातृवत् परिरक्षन्तं सृष्टिसंहारकारकम् । यो नार्च्चयति देवेश तं विद्याद्ब्रह्म घातकम् ॥"२८१॥

श्रीगीतोपनिषत्सु च (७।१५)–

" न मां दुष्कृतिनो मूढ़ाः प्रपद्यन्ते नराधमाः ।
माययापहृतज्ञाना आसुरं भावमाश्रिताः ॥"२८२॥ इति ।

---

टीका—अस्य श्रीकृष्णस्य श्रवणादयोनव । इज्या—अर्च्चनम् ।

"नृणामयं परोधर्मः सर्वेषां समुदाहृतः ।
त्रिंशत् लक्षणवान् राजन् सर्वात्मा ये न तुष्यति ॥१२॥

टीका—एवं त्रिंशल्लक्षणवान् ॥

हे राजन् ! साधु वृन्द के एकमात्र आश्रय श्रीकृष्ण श्रवण, कीर्त्तन, स्मरण, सेवा, अर्च्चन, नमस्कार, दास्य, सौख्य, एवं आत्म निवेदन इस नवधा भक्ति के मध्य में किसी एक भक्त्यङ्ग का पालन मानवमात्र को अवश्य करना होगा । सत्य दया प्रभृति ३० लक्षण धर्म प्रति पालन करने पर सर्वात्मा भगवान् सन्तुष्ट होते हैं । श्रीभगवद् भक्ति न करने से सर्व वर्णी एवं सर्व आश्रमी के पक्ष में जो प्रत्यवाय होता है—उस का वर्णन भा० ११।५।२ में इस प्रकार है—

"मुखबाहूरुपादेभ्यः पुरुषस्याश्रमैः सह
चत्वारो जज्ञिरे वर्णा गुणैर्वर्णादयः पृथक् ।
य एषां पुरुषं साक्षादात्मप्रभवमीश्वरम् ।
न भजन्त्यव जानन्ति स्थानाद् भ्रष्टाः पतन्त्यध. ॥"

टीका—स्व जनकस्य गुरोर्भगवतोऽनादराद् गुरु द्रोहेण दुर्गतियान्तीति वक्तुं भगवतः सकाशाद्–वर्णाश्रमाणामुत्पत्तिमाह—मुखेति । गुणैः सत्त्वेन विप्राः । सत्त्व रजोभ्यां क्षत्रियः । रजस्तमोभ्यां वैश्यः, तमसा शूद्र इति । एषां मध्ये ये अज्ञात्वा न भजन्ति, ये च ज्ञात्वापि अव जानन्ति । आत्मनः प्रभवो जन्म यस्यात् तम् । तदभजने कृतघ्नतामप्याह ईश्वरमिति । स्थानात् वर्णाश्रमाद् भ्रष्टाः ॥३॥

परम गुरु स्वरूप श्रीभगवान् का भजन न करने से कृतघ्नता दोष से पतित होना पड़ता है । उस प्रकार है महाभारत में उक्त है—

"मातृवत् परिरक्षन्तं सृष्टि संहार कारकम् ।
यो नार्च्चयति देवेशं तं विद्याद्ब्रह्म घातकम् ॥"२८१॥

जो भगवान् 'मा' के समान समस्त जीवों की रक्षा सब प्रकार से सतत करते रहते हैं, जो मानव उन सर्वदेवाराध्य सृष्टि संहार कारक श्रीकृष्ण की अर्च्चना नहीं करते उन को ब्रह्मघाती जानना चाहिये । इत्यादि श्लोकों में श्रीभगवान् में भक्ति हीन जन की निन्दा का प्रसङ्ग उपलब्ध है ।

श्रीभगवद् गीतोपनिषद् के ७।१५ में लिखित है—

"न मां दुष्कृतिनो मूढ़ाः प्रपद्यन्ते नराधमाः ।
माययापहृतज्ञाना आसुरं भावमाश्रिताः ॥"२८२॥

टीका—ननु तर्हि पण्डिता अपि केचित् किमिति त्वां न प्रपद्यन्तो तत्र ये पण्डिता स्तेमां प्रपद्यन्ते-एव पण्डित मानिन एव न मां प्रपद्यन्ते इत्याह न मामिति । दुष्कृतिन. दुष्टाश्च ते कृतिनः पण्डिताश्चेति ते

आग्नेये, विष्णुधर्म्मे च–

"द्विविधो भूतसर्गोऽयं दैव आसुर एव च । विष्णुभक्तिपरो दैव आसुरस्तद्विपर्य्ययः ॥"२८३॥

अन्यदप्युदाहृतम् (भा० ७।९।१०)–"विप्राद्द्विषड्गुणयुतादरविन्दनाभ,--पादारविन्दविमुखात्" इति, (नारदीये)–"श्वपचोऽपि महीपाल" इत्यादि, तथा गारुड़े–

---

कुपण्डिता इत्यर्थः । ते च चतुर्विधाः । एके मूढ़ाः पशु तुल्याः । कर्म्मिणः । यदुक्तं –"नूनं दैवेन निहता ये चाच्युत कथा सुधां । हित्वा श्रृण्वन्त्यसद् गाथाः पुरीषमिव विड्भुजः" इति । मुकुन्दं को न सेवेत विना नरेतरमिति च । अपरे नराधमाः किञ्चित् कालं भक्तिमत्वेन प्राप्तनरत्वाः, अप्यन्ते फल प्राप्तौ न साधनोपयोगः, इतिमत्वा स्वेच्छयैव भक्ति त्यागिनः । स्व कर्तृक भक्ति त्याग लक्षणमेव तेषामधमत्वमिति भावः । अपरे शास्त्राध्ययनाध्यापनादिमत्वेऽपि माययापहृत ज्ञानं येषां ते । वैकुण्ठ विराजिनो नारायण मूर्त्तिरेव सार्वकालिकी न तु कृष्णरामादि मूर्त्ति मानुषीति मन्यमाना इत्यर्थः । यद्वक्ष्यते--"अवजानन्ति मां मूढ़ा मानुषीं तनुमाश्रितमिति ।' ते खलु मां प्रपद्यमाना अपि नमां प्रपद्यन्ते इति भावः । अपरे आसुरं भावमाश्रिताः । आसुराः जरासन्धादयः । मद्विग्रहंलक्ष्यीकृत्य शरै र्विद्धन्ति । तथैव दृश्यत्यादि हेतुमत् कुतर्कैर्मद् विग्रहं वैकुण्ठस्थमपि खण्डयन्त्येव नतु प्रपद्यन्त इत्यर्थः ॥१५॥

हे अर्जुन ! आसुरिक भावापन्न, माया द्वारा आपहृत विवेक, दुष्कर्मनिरत मूढ़ नराधमगण मेरे चरणों में शरणागत नहीं होते हैं । इस श्लोक में भगवद् भजन हीन व्यक्ति की निन्दा का वर्णन है, अग्नि पुराण एवं विष्णु धर्म में उक्त है—

"द्विविधो भूतसर्गोऽयं दैव आसुर एव च ।
विष्णुभक्तिपरो दैव आसुरस्तद्विपर्य्ययः ॥"२८३॥

दैव एवं आसुर भेद से भूतसर्ग द्विविध हैं, उस के मध्य में विष्णु भक्तिनिष्ठ दैव है, एवं विष्णु भक्ति विहीन आसुर है । अन्य उदहरण भा० ७।९।१० में है ।

"विप्राद्विषड्गुण युतादरविन्द नाभ पादार विन्दविमुखात् श्वपचं वरिष्ठम् ।
मन्ये तदर्पित मनो वचने हितार्थ प्राणं पुनाति सकुलं न तु भूरिमानः ॥"

टीका—एवं भक्त्यैव केवलया हरेस्तोषः सम्भवतोत्युक्तम् । इदानीं भक्ति विना नान्यत् किञ्चित् तोष हेतु रित्याह । विप्रादिति । पूर्वोक्ता धनादयो ये द्विषट् द्वादश गुणा स्तैर्युक्ताद्विप्रादपि श्वपचं वरिष्ठं मन्ये । यद्वा सनत् सुजातोक्ता, द्वादश धर्मादयो गुणा द्रष्टव्याः । तदुक्तं महाभारते—धर्मश्च सत्यश्च दम स्तपश्च मात्सर्य्यं ह्री स्तितिक्षानसूया । यज्ञश्च दानञ्च धृतिः श्रुतञ्च व्रतानि वै द्वादश ब्राह्मणस्य इति । यद्वा,—शमो दमस्तपः शौचं क्षान्त्यार्ज्जव विरक्तताः । मौन विज्ञान सन्तोषाः सत्यास्तिक्ये द्विषड् गुणा इति । कथम्भूतात् विप्रात् ? अरविन्दनाभस्य पादारविन्द विमुखात् । कथम्भूतं श्वपचम् ? तस्मिन्नरविन्द नाभेर्ऽपिता मन आदयो येन तम् । ईहितं कर्म । वरिष्ठत्वे हेतुः स ऐवम्भूतः श्वपचः सर्वकुलं पुनाति । भूरिर्म्मानो गर्वोयस्य सतु विप्रः आत्मादि न पुनाति, कुतः कुलम्, यतो भक्ति हीनस्यै ते गुणा गर्वायैव भवन्ति न तु शुद्धये, अतो हीन इति भावः ।

भक्त शिरोमणि प्रह्लाद निज प्रभु श्रीनृसिंह को कहे थे—हे प्रभो ! भगवत् चरणार विन्द में भक्ति हीन, अथच धर्म, सत्य, दम, तपस्या, अमात्सर्य्य, तितिक्षा, अनसूया, यज्ञ, दान, धृति, अध्ययन, व्रत–इन द्वादश गुणयुक्त ब्राह्मण से भी भगवच्चरणों में जिसने मन, वचन, चेष्टा, अर्थ एवं प्राण समर्पण किया है, उस श्वपच को मैं श्रेष्ठ मानता हूँ । कारण यह भक्तिमान् श्वपच निज वंश को पवित्र करता है, किन्त

"अन्तं गतोऽपि वेदानां सर्व्वशास्त्रार्थवेद्यपि यो न सर्व्वेश्वरे भक्तस्तं विद्यात् पुरुषाधमम् ।।"२८४।।

**वृहन्नारदीये च—**

"हरिपूजा-विहीनाश्च वेदविद्वेषिणस्तथा। द्विजगोद्वेषिणश्चापि राक्षसाः परिकीर्त्तिताः ।।"२८५।।

**अपरञ्चाह** (भा० १०।२।३२) —

**(११) "येऽन्येऽरविन्दाक्ष विमुक्तमानिन-,स्त्वय्यस्तभावादविशुद्धबुद्धयः।**
**आरुह्य कृच्छ्रेण परं पदं ततः, पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः ।।"२८६।। इति।**

**प्रथमतस्तावत् त्वय्यस्तभावादविद्यमानभक्तित्वादविशुद्धबुद्धयः,** (भा० ११।१४।२२)—

---

भगवान् में भक्ति हीन द्वादश गुणयुक्त ब्राह्मण, भक्ति हीनता दोष से घोरतर अभिमानी होता है, अत वह आत्म शोधन ही नहीं कर सकता है, कुल को पवित्र करना तो दूर है। इस श्लोक के द्वारा भगवान् में भक्ति हीन व्यक्ति को निन्दा की गई है। नारदीय पुराण में भी "श्वपचोऽपि महीपाल" इत्यादि श्लोकों के द्वारा अभक्त की निन्दा की गई है। गरुड़ पुराण में भी उस प्रकार अभक्त की निन्दा का वर्णन है—

"अन्तं गतोऽपि वेदानां सर्व्वशास्त्रार्थवेद्यपि।
यो न सर्व्वेश्वरे भक्तस्तं विद्यात् पुरुषाधमम् ।।"२८४।।

समस्त वेदों में निष्णात होकर भी एवं सर्वशास्त्रार्थ भिज्ञ होकर भी जो मानव सर्वेश्वर भगवान् में भक्ति नहीं करते हैं, उनको पुरुषाधम जानना होगा।

वृहन्नारदीय पुराण में भी अभक्त निन्दा का वर्णन है—

"हरिपूजा-विहीनाश्च वेदविद्वेषिणस्तथा।
द्विजगोद्वेषिणश्चापि राक्षसाः परिकीर्त्तिताः ।।"२८५।। इति

जो लोक, हरि पूजाविहीन, एवं वेदविद्वेषी, तथा गो ब्राह्मण द्वेष कारी हैं, वे सब राक्षस संज्ञा से आनहित होते हैं। श्रीमद् भागवत १०।२।३२ गर्भस्तुति प्रसङ्ग में भी अभक्त की निन्दा की गई है।

(१११) "येऽन्येऽरविन्दाक्ष विमुक्तमानिन--,स्त्वय्यस्तभावादविशुद्धबुद्धयः।
आरुह्य कृच्छ्रेण पर पदं ततः, पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः ।।"२८६।।

टीका—ननु विवेकिनां किं मद् भजनेन मुक्ता एव हि ते तत्राहुः,—येऽन्य इति। विमुक्तमानिनो विमुक्ता वयमिति मन्यमानाः। त्वयि अस्तो निरस्तोऽत एवासन् यो भावस्तस्मात् भक्तेरभावादित्यर्थः, न विशुद्धा बुद्धिर्येषां ते तथा। यद्वा त्वयि अस्तभा, इतिच्छेदः। अस्तमतयो वादेष्वेव विशुद्ध बुद्धयः। कृच्छ्रेण बहु जन्म तपसा परं पदं मोक्ष सनिहितं सत् कुलतपः श्रुतादि। पतन्ति विघ्नैरभिभूयन्ते। न आदृतौ युष्मदङ्घ्री यैस्ते ।।

हे कमल लोचन! भक्तभिन्न जो लोक अपने को स्थूल सूक्ष्म देह बन्धन से मुक्त मानते हैं, उन लोकों की बुद्धि शुद्धि ही नहीं हुई है, कारण, वे लोक आप के प्रति भक्ति न करके केवल इस जगत् के एवं पर जगत् के सुख भोग के प्रति सतृष्ण होकर रहते हैं। कारण, आप के प्रति भक्ति न करने से मनोगत स्थूल सूक्ष्म विषय भोग वासना की निवृत्ति किसी उपाय से भी नहीं होती है। अथच ऐहिक--पाल लौकिक सुख भोग में वितृष्ण न होने पर ब्रह्म जिज्ञासा में अधिकार ही नहीं होता है, वे सब अभिमानी व्यक्तिगण आप के चरणों में एवं आपके भक्त वृन्दों के चरणों भक्ति हीन होने के कारण उक्त अनादर दोष दुष्ट होते हैं, तज्जन्य क्लेशसाध्य श्रुतादि सम्पन्न ब्राह्मणादि कुल में जन्म ग्रहण करके भी अधः पतित होते हैं।

"धर्म्मः सत्य-दयोपेतो विद्या वा तपसान्विता ।
मद्भक्त्यापेतमात्मानं न सम्यक् प्रपुनाति हि ॥" २८७॥

इत्याद्युक्तेः, तथापि ज्ञानमार्गमाश्रित्य विमुक्तमानिनो देहद्वयातिरिक्तत्वेनात्मानं भावयन्तः, ततः (गी० १२।५) "क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्" इत्याद्युक्तेः, कृच्छ्रेण परं पदं जीवन्मुक्तिरूप-मारुह्य प्राप्यापि ततोऽधः पतन्ति भ्रश्यन्ति । कदेत्यपेक्षायामाहुः--अनादृतेति ।

---

कारण, प्रथमतः ही भगवद् भक्ति शून्यता दोष होता है, उक्त दोष से ही ज्ञानी वृन्द अशुद्ध चित्त होते हैं, अर्थात् निपुणता से ऐहिक भोग विलास में रत हो जाते हैं। कारण भा० ११।१४।२२ में उक्त है—

"धर्म्मः सत्य-दयोपेतो विद्या वा तपसान्विता ।
मद्भक्त्यापेतमात्मानं न सम्यक् प्रपुनाति हि ॥" २८७॥

टीका भक्त्यभावेऽन्यत् साधनं व्यर्थमित्याह—धर्म इति द्वाभ्याम् ॥

क्रमसन्दर्भ—"धर्मः सत्यदयोपेतः" इत्याद्यन्तं तदीयमन्तः संस्करणं, प्रायः साधन भक्ति महिमा परमेव । तत्र 'बाध्यमानोऽपि" इति गद्यम् साध्य भक्तौ जातायां बाध्यमानत्वायोगात्, भा० १०।८७।३५ "दधति सकृन्मनस्त्वयि" इत्युक्तेः, विषयाविष्ट चित्तानां विष्णवावेशः सुदूरतः । वारुणीदिग् गतं वस्तु व्रजन्नैन्द्रीं किमाप्नुयात् । इति विष्णु पुराणाच्च--तन्महिम—'साधनभक्त महिम' परत्वेन गम्यते ॥' अत्रैव तावद् वक्ष्यते--कथं विना रोमहर्षं द्रवता चेतसाविना । विनानन्दाश्रुकलया शुद्ध्येद्भक्त्या विनाशयः ॥"

टीका—रोमहर्षादिकं विना कथं भक्ति र्गम्यते भक्त्या विना च कथमाशयः शुध्येदिति ॥

श्रीकृष्ण, उद्धव को कहे थे—सत्य एवं दयायुक्त धर्म, तपस्या युक्त विद्या प्रभृति, मदीय भक्ति विमुख चित्त को सम्यक् शुद्ध करने में असमर्थ हैं। इस में सन्देह नहीं है। भक्ति हीन ज्ञानी का चित्त ऐहिक एवं पारत्रिक सुख भोग में वितृष्ण होना असम्भव है, किन्तु इस अवस्था में भी जीव एवं ईश्वर की अभेद भावना करते करते स्थूल सूक्ष्म देह से ज्ञानी अपने को अतिरिक्त मानते हैं। उस के बाद—गीता में (१२.५) कथित है—

"क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ताहि गति र्दुःखं देहवद्भिरवाप्यते ॥"

टीका—र्तर्हि केनांशे तेषामपकर्ष स्तत्राह क्लेश इति । न केनापि व्यज्यते इत्यक्तं, ब्रह्म, तत्रैवासक्त चेतसां तदेवानुबुभूषूणां तेषां तत् प्राप्तौ क्लेशोऽधिकतरः । हि यस्मात् अव्यक्तः गतिः, केनापि प्रकारेण व्यक्ति भवति सा गति र्देहवद्भि र्जीवै र्दुःखं यथा भवत्येवं अवाप्यते । तथाहि, इन्द्रियाणां शब्दादि ज्ञान विशेष एव शक्तिः, नतु विशेषेतर ज्ञाने इति । अतः, इन्द्रिय निरोधः, तेषां निर्विशेष ज्ञान मिच्छतां अवश्य कर्त्तव्य एव । इन्द्रियाणां निरोधस्तु स्रोतस्वतीनामिव निरोध दुष्कर एव । यदुक्तं सनत् कुमारेण,—'यत्पाद पङ्कज पलाश विलास भक्त्या, कर्माशयं ग्रथित मुद्ग्रथयन्ति सन्तः । तद्वन्नरिक्त मतयो यतयो निरुद्ध स्त्रोतोगणास्तमरणं भजवासुदेवम् ॥ क्लेशो महानिह भवार्णवमप्लवेशं षड् वर्गनक्रमसुखेन तितीर्षयन्ति । तत् त्वं हरेर्भगवतो भजनीयमङ्घ्रि कृत्वड़ुपं व्यसन मुत्तर दुस्तरार्णम् ॥ इति तावता क्लेशेनापि सागति र्यद्यवाप्यते तदपि भक्तिमिश्रणैव । भगवति भक्ति विना केवल ब्रह्मोपासकानान्तु केवल क्लेश एव लाभो नतु ब्रह्मप्राप्तिः । यदुक्तं ब्रह्मणा तेषामसौ क्लेशल एव शिष्यते नान्यत् यथा स्थूलतुषावधातिनाम् । इति ।

यदीति शेषः, तेषां भक्तिप्रभावस्याननुवृत्तेरबुद्धिपूर्व्वकस्य त्वदनादरस्य निवर्त्तकाभावात्, तथापि दग्धानामपि पापकर्म्मणां महाशक्ति-श्रीभगवत्पादपद्मावज्ञया पुनर्विरोहात्। तथा च 'वासना'-भाष्योत्थापितं भगवत्परिशिष्टवचनम्—

"जीवन्मुक्ता अपि पुनर्बन्धनं यान्ति कर्म्मभिः। यद्यचिन्त्यमहाशक्तौ भगवत्यपराधिनः॥"२८८॥

अतएव तत्रैव—

"जीवन्मुक्ताः प्रपद्यन्ते क्वचित् संसारवासनाम्। योगिनो वै न लिप्यन्ते कर्म्मभिर्भगवत्पराः॥२८९॥

तथा तत्र रथयात्रा-प्रसङ्गे विष्णुभक्तिचन्दोदयादि-धृतं पुराणान्तरवचनम्—

"नानुव्रजति यो मोहाद्व्रजन्तं परमेश्वरम्। ज्ञानाग्निदग्धकर्म्मापि स भवेद्ब्रह्मराक्षसः॥" २९०॥

एवमेवोक्तम् (भा० ३।९।१४) —"योऽनादृतो नरकभाग्भिरसत्प्रसङ्गैः" इति। अतएवोपदिष्टम् (भा० ११।१९।५) —

---

हे अर्जुन! जिन के चित्त, निर्विशेष ब्रह्म स्वरूप में आसक्त है, उनको अधिकतर क्लेश प्राप्त करना पड़ता है, श्रीभगवद् गीता में इस प्रकार उल्लेख होने के कारण, ज्ञानि वृन्द प्रचुर क्लेश स्वीकार कर जीवन्मुक्ति अवस्था में उपनीत होकर भी उस अवस्था से अधः पतित होते हैं, अर्थात् भ्रष्ट होते हैं। कब इस प्रकार भ्रष्ट होने का अवसर आता है? उत्तर में कहते हैं—जिस समय ज्ञानि गण, भक्त एवं भगवान् का अनादर करते हैं—कारण भगवदनादर कारी ज्ञानि गण के सम्बन्ध में भगवत् कृष्ण शक्ति का आविर्भाव नहीं होता है। यह तो रही बुद्धि पूर्वक भगवदनादर का सुस्पष्ट फल। अबुद्धि पूर्वक अनादर करने से देहद्वय की आसक्ति की निवृत्ति नहीं होती है। यद्यपि ज्ञानि वृन्द के पाप समूह भस्मीभूत होते हैं, तथापि महाशक्ति युक्त श्रीभगवान् के चरण कमल युगल की अवज्ञा करने के कारण पुनर्वार ज्ञानिगण के हृदय में भोगवासना का उद्गम होता है। उस विषय में वासना भाष्योद्धृत भगवत् परिशिष्ट का वचन इस प्रकार है—

"जीवन्मुक्ता अपि पुनर्बन्धनं यान्ति कर्म्मभिः।
यद्यचिन्त्य महाशक्तौ भगवत्यपराधिनः॥"२८८॥

जीवन्मुक्त महापुरुष वृन्द भी यदि अचिन्त्य महाशक्ति सम्पन्न भगवान् के निकट अपराधी होते हैं तो वे सब, कर्मराशि के द्वारा पुनर्वार बन्धन दशा को प्राप्त करते हैं। अतएव उक्त वासना भाष्य में ही लिखित है—

"जीवन्मुक्ताः प्रपद्यन्ते क्वचित् संसारवासनाम्।
योगिनो वै न लिप्यन्ते कर्म्मभिर्भगवत् पराः॥"२८९॥

जीवन्मुक्त महात्मा गण भी संसार वासना को प्राप्त करते हैं, किन्तु भगवत् परायण योगिगण कभी भी कर्म के द्वारा लिप्त नहीं होते हैं। उस प्रकार विष्णु भक्ति चन्द्रोदय ग्रन्थ के रथयात्रा प्रसङ्ग में उद्धृत पुराणान्तर वचन है—

'नानुव्रजन्ति यो मोहाद्व्रजन्तं परमेश्वरम्।
ज्ञानाग्निदग्धकर्म्मापि स भवेद्ब्रह्मराक्षसः॥"२९०॥

जो मानव, अज्ञान वशतः रथारोहण करके यात्रा कारी श्रीभगवान् के पश्चात् गमन नहीं करते हैं,

"तस्माज्ज्ञानेन सहितं ज्ञात्वा स्वात्मानमुद्धव ।
ज्ञानविज्ञानसम्पन्नो भज मां भक्तिभावितः ॥" २९१॥ इति

तस्मात् सुतरामेव सर्व्वेषां श्रीहरिभक्तिर्नित्येत्यायातम् ॥ देवाः श्रीभगवन्तम् ॥

११२ । प्रेमकृत--कर्म्माशयनिर्धुननानन्तरमपि भक्तिः श्रूयते (भा० ११।१४।२५)—

(११२) "यथाग्निना हेम मलं जहाति, ध्मातं पुनः स्वं भजते च रूपम् ।
आत्मा च कर्म्मानुशयं विधूय, मद्भक्तियोगेन भजत्यथो माम् ॥"२९२ ।

---

वे सब ज्ञानाग्नि दग्ध कर्मा होने पर भी ब्रह्म राक्षस होते हैं । अतएव भा० ३।९।१४ में उक्त है—

"तद्वा इदं भुवन मङ्गल मङ्गलाय
ध्याने स्म नो दरशितं त उपासकानाम् ।
तस्मै नमो भगवतेऽनुविधेम तुभ्यं
योऽनादृतो नरकभाग्भिरसत् प्रसङ्गैः ॥"

टीका—नन्वेवमपि सोपाधिकमेतदर्वाचीनमेवेत्याशङ्क्याह—तद्वै तेदेवेदम् । हे भुवन मङ्गल ! यतस्ते त्वया नोऽस्माकमुपासकानां मङ्गलाय ध्याने दर्शितम् । नहि अव्यक्त वर्त्माभिनिवेशित चित्तानामस्माकं त्वया सोपाधिक दर्शनं दातुं युक्त मिति भावः । अतस्तुभ्यं नमोऽनुविधेम अनुवृत्ता करवाम । तर्हि किमिति के चिन्मां नाद्रियन्ते ? तत्राह योऽनादृत इति । असत् प्रसङ्गैः निरीश्वर कुतर्क निष्ठैः ॥

तुम, असत् प्रसङ्ग कारी नरक गामी वृन्द के द्वारा अनादृत होते रहते हो, इस सेप्रतिपन्न हुआ है कि—जो लोक—श्रीभगवान् को अनादर करते हैं, वे सब नारकी हैं । अतएव भा० ११।१९।५ में उक्त है—

'तस्माज्ज्ञानेन सहितं ज्ञात्वा स्वात्मानमुद्धव ।
ज्ञानविज्ञानसम्पन्नो भज मां भक्तिभावितः ॥"२९१॥

टीका—उपसंहरति । ज्ञानेनसहितं तत्पर्य्यन्तं यथा भवति तथा ज्ञात्वा तत् सम्पन्नः सन् मामेव भज अन्यत् सर्वं त्यजेत्यर्थः ॥

हे उद्धव ! अपर किसी प्रकार पवित्र अनुष्ठान से चित्त विशुद्ध नहीं हो सकता है, जीव का कृष्ण दासत्व अभिमान होने से एवं अनुभव होने से भक्ति साधन में जिस प्रकार आदर एवं आवेश होता है, उस प्रकार किसी भी पवित्र साधनके द्वारा भक्तिमें आवेश तथा उसके प्रति आदर उपस्थित नहीं होता है । अतएव भक्ति अविरुद्ध ज्ञान का वैशिष्ट्य है, अतः शास्त्रार्थ विचार के द्वारा जीव का यथार्थ स्वरूप, भगवद् दासत्व पर्य्यन्त अनुभव करके जीव स्वरूप ज्ञान, एवं अनुभव सम्पन्न होकर भक्ति भाव से मेरा भजन करो, एवं अन्य समुदय आवेश को परित्याग करो ।

इस प्रकार ज्ञानी साधक के पक्ष में भी श्रीहरि में भक्ति करना अवश्य कर्त्तव्य है, उस को दर्शाया गया है । अतएव समस्त श्रेणी के साधकों के पक्ष में श्रीहरिभक्ति अतिशयरूपेण आचरणीय है–यह ही निर्णय हुआ ।

देवतावृन्द—श्रीभगवान् को कहे थे ॥१११॥

११२। भगवत् प्रेम के द्वारा कर्माशय निर्धूत होने के पश्चात् भी भक्ति अनुष्ठान की कथा श्रुत भा० ११।१४।२५ में है—

(११२) "यथाग्निना हेम मलं जहाति, ध्मातं पुनः स्वं भजते च रूपम् ।

तथैवात्मा जीवो मत्प्रेम्णा कर्म्माशयं विधूय ततः शुद्धस्वरूपञ्च प्राप्य मां भजतीत्यर्थः। तदुक्तम् (भा० दी० १०।८७।२१ श्रीस्वामि-टीका-धृत-श्रीसर्वज्ञमुनिवाक्ये)—"मुक्ता अपि लीलया विग्रहं कृत्वा भगवन्तं भजन्ते" इति ॥

श्रीभगवान् ॥

११३। एवमप्युक्तं स्कान्दे रेवाखण्डे—

"इन्द्रो महेश्वरो ब्रह्मा परं ब्रह्म तदैव हि। श्वपचोऽपि भवत्येव यदा तुष्टोऽपि केशव ॥२९३॥
श्वपचादपकृष्टत्वं ब्रह्मेशानादयः सुराः। तदैवाच्युत यान्त्येते यदैव त्वं पराङ्मुखः ॥"२९४॥ इति

तथैवाह (भा० ३।२८।२२)—

(११३) "यच्छौचनिःसृत-सरित्प्रवरोदकेन।
तीर्थेन मूर्द्ध्न्यधिकृतेन शिवः शिवोऽभूत्" इति।

---

आत्मा च कर्म्मानुशयं विधूय, मद्भक्तियोगेन भजत्यथो माम् ॥"२९२॥

टीका—अपि च भक्त्यैव आत्मशुद्धि र्नान्यत इति सदृष्टान्तमाह यथेति। यथेति। यथाग्निना ध्मातं तापितमेव सुवर्णम् अन्तर्मलं जहाति न क्षालनादिभिः स्वं निजं रूपञ्च भजते। कर्मानुशयं कर्मवासनाम्। मां भजते मद्रूपताम् आपद्यते।

श्रीभगवान् उद्धव को कहे थे हे उद्धव! अग्नि द्वारा सुवर्ण जिस प्रकार निज मालिन्य को परित्याग करता है, एवं तापित होने से ही उज्ज्वल वर्ण धारण भी करता है, उस प्रकार जीव भी मद् विषयक प्रेम से कर्माशय को विधूत करके तदनन्तर विशुद्ध स्वरूप को प्राप्त कर मेरा भजन करता है। अर्थात् जीव प्रेम भक्ति के द्वारा कर्म वासना का त्याग करके महा प्रेमाविर्भाव हेतु मेरी परिपूर्ण सेवापद्धति को प्राप्त करता है। भागवत भावार्थ दीपिका १०।८७।२१ में श्रीधर स्वामिकृत उल्लिखित श्रीसर्वज्ञमुनि वाक्य है—

"मुक्ता अपि लीलया विग्रहं कृत्या भगवन्तं भजन्ते"

मुक्त पुरुष वृन्द भी लीलापूर्वक शरीर धारण करके श्रीभगवान् का भजन करते हैं। इस प्रमाण से निर्णीत हुआ कि—विशुद्ध स्वरूप प्राप्ति के पश्चात् भी श्रीभगवान् में भक्ति मुक्त गण करते रहते हैं।

श्रीभगवान् कहे थे। (११२)

११३। स्कन्द पुराण के रेवा खण्ड में भी इस प्रकार उक्ति है—

"इन्द्रोमहेश्वरो ब्रह्मा परं ब्रह्म तदैव हि।
श्वपचोऽपि भवत्येव यदा तुष्टोऽसि केशव ॥२९३॥
श्वपचादपकृष्टत्वं ब्रह्मेशानादयः सुराः।
तदैवाच्युत यान्त्येते यदैव त्वं पराङ्मुखः ॥"२९४॥

हे केशव! इन्द्र, महेश्वर, ब्रह्मा यहाँतक कि श्वपच भी उस समय परम ब्रह्म स्वरूप को प्राप्त कर सकता, जब तुम उनके प्रति प्रसन्न होते हो, किन्तु ब्रह्मा, शिव, इन्द्रादि देवगण तभी श्वपच से भी निकृष्ट हो जाते हैं, जब तुम उनके प्रति अप्रसन्न होते हो, श्रीकपिल देवने भी भा० ३।२८।२२ में कहा है—

(११३)"यच्छौच निःसृत सरित् प्रवरोदकेन
तीर्थेन मूर्द्धन्यधिकृतेन शिवः शिवोऽभूत्।
धातुर्मनः शमलशैल निसृष्ट वज्रं

स्पष्टम् । तस्माद्भक्तेर्महानित्यत्वेनाप्यभिधेयत्वमायातम् । अग्रे (भा० १०।८७।२०)— "स्वकृतपुरेषु" इत्यादौ जीवानां स्वभावसिद्धा सैवेति व्याख्येयम् ॥ श्रीकपिलदेवः ॥

११४ । तदेवमवान्तरतात्पर्य्येण भक्तेरेवाभिधेयत्वं षड्‌विधैरपि लिङ्गैरवगम्यते ।

---

ध्यायेच्चिरं भगवतश्चरणारविन्दम् ॥"

टीका—किञ्च यस्य शौचेन क्षालनेन निःसृतायाः सरित् प्रवराया गङ्गाया उदकेन तीर्थेन संसार तारकेण मूर्द्धिन अधिकृतेन धृतेन शिवोऽपि शिवोऽभूत् अत्यधिकं सुखं प्रापेत्यर्थः । ध्यातुर्मनसि यः शमल शैलः पापपर्वतः, तस्मिन् निसृष्टं क्षिप्तं वज्रमिव यत् । यद्वा शमलशैले निसृष्टं स्वलाञ्छनरूपं वज्रयेन तत् ।

शिव, जिनके चरण प्रक्षालन से निःसृत परम पवित्र सरित् प्रवर गङ्गा जल को मस्तक में धारण करके शिव नाम से अभिहित हुये हैं, अर्थात् स्वयं सुखी होकर अपर को सुखी करने की क्षमता को प्राप्त किये हैं, उन भगवान् के चरण युगल का ध्यान निरन्तर करना चाहिये, कारण, उक्त चरण युगल ही पाप पर्वत को विचूर्ण करने के निमित्त वज्ररूप हैं। इस से प्रतिपन्न होता है कि विशुद्ध स्वरूप होकर भी श्रीभगवद् भक्ति करते हैं। अतएव भक्ति का महानित्यत्व निबन्धन अभिधेयत्व--अर्थात् अवश्य कर्त्तव्यत्व प्रदर्शित हुआ। अग्रिम ग्रन्थ भा० १०।८७।२० में भी उक्त है—

"स्वकृतपुरेष्वमीष्ववहिरन्तरसंवरणं
तव पुरुषं वदन्त्यखिल शक्ति धृतोऽशकृतम् ।
इति नृगतिं विविच्य कवयो निगमावपनं
भवत उपासतेऽङ्‌घ्रिमभवं भुवि विश्वसिताः ॥"

टीका—अपि च कुतो नियमाशङ्का स्यात्, भगवतो देहाद्युपाधि कृतदोष प्रसङ्ग इति यतोऽविद्याकाम कर्मभिः संसरतो जीवस्यापि भगवद् भावं लक्षणय बोधयन्त्यस्तं दोषं निषेधयन्ति । स यश्चायं पुरुषे यश्चासावादित्ये स एकस्तत्वमसीत्याद्याः श्रुतयः । ननु कृतवर्थस्यात्मनः स्तुतिरियम् ईश्वरत्वेन क्रियते न तु तस्येश्वरत्वं बोध्यते । नैतद् युज्यते । यतस्तत्र यस्य देवे पराभक्ति र्यथादेवे तथा गुरौ । तस्यैते कथिताह्यर्थाः प्रकाशन्ते महात्मन इत्याद्याः श्रुतयः कृतावतारस्य भगवत श्चरण भजनमुपायं वदन्तीत्याह स्वकृत पुरेष्विति । स्वकर्मोपार्ज्जितेषु पुरेषु देहेष्वमीषु नरादिषु भोक्तृत्वेन वर्त्तमानं पुरुषम्, अखिल शक्तिधृतः सर्वशक्तचाश्रमस्य पूर्णस्य तवांशकृतं वदन्ति । अंश इवांशः कृत इव कृतः । त्वद्रूपं वदन्तीत्यर्थः । ननु कार्य्य कारण संवृतस्य कुत एवम्भूतत्वं तत्राह-अवहिरन्तर संवरणमिति । वहिः कार्य्यम् अन्तरं कारणम् वस्तुत स्तदावरण शून्यम्, तयोरसत्त्वादित्यर्थः । इत्येवं नृगतिं नु जीवस्य गति तत्त्वं विविच्य विशोध्य कवयो ऽन्यथेदं न प्राप्यत इति जानन्तो निगमावपनं निगमोक्तकर्मणामावपनम् । आ समन्तात् उपान्तेऽस्मिन्नित्यावपनं क्षेत्रं सर्वार्पण विषयमित्यर्थः । यत्रार्पितानि कर्माणि मुक्तिफलं फलन्ति, तं भगवतोऽङ्‌घ्रिम्, अभवं भवनिवर्त्तकं, विश्वसिताः, कृतविश्वासा उपासते--अर्च्चनवन्दनादिभिः सेवन्ते । भुवीति--मर्त्यलोके इदमेवोचितमितिदर्शयति ॥

त्वदंशस्य ममेशान त्वन्मायाकृतबन्धनम् ।
त्वदङ्‌घ्रिसेवामादिश्य परानन्द निवर्त्तय ।"

इस श्लोक में जीव मात्र की जो स्वभाव सिद्धा भगवत् सेवा है, उस का प्रदर्शन आगे होगा ।

श्रीकपिलदेव कहे थे ।

तत्रोप-क्रमोपसंहारयोरेकत्वेन यथा (भा० १।१।१) "जन्माद्यस्य यतः" इत्यादावुपक्रम-पद्ये "सत्यं परं धीमहि" इति। अत्र श्रीगीतासु(१२।१)"एवं सततयुक्ता ये भक्तास्त्वां पर्य्युपासते" इत्यादौ श्रीभगवत्येव ध्यानस्याकष्टार्थत्वेन तद्ध्यानिनो युक्ततमत्वेन चोक्तत्वात् (गी० ७।७) "मत्तः परतरं नान्यत् किञ्चित्, इत्यादौ, (गी० १४।२७) "ब्रह्मणो हि प्रतिष्ठाहम्" इत्यादौ परतत्त्वस्य श्रीभगवद्रूप एव पर्य्यवसानात्, तस्यैव सर्व्वज्ञत्व-सर्व्वशक्तित्वाभ्यां जगज्जन्मादि-हेतुत्वात्तत्र श्रीभगवत्येव ध्यानमभिधीयते। तथैव हि तत् पद्यं (१०४ अनु०) परमात्मसन्दर्भे

---

११४। उक्त रीति से श्रीमद् भागवत् का अभिधेयत्व भक्ति ही है, इस का बोध, अवान्तर तात्पर्य्य से एवं उपक्रम उपसंहार, अभ्यास, अपूर्व फल, अर्थ बाद, उपपत्ति रूप षड़् बिध लिङ्ग के द्वारा होता है। उस के मध्य में उपक्रमोपसंहार का एकत्व हेतु श्रीमद् भागवत के उपक्रम एवं उपसंहार में एक ही अभिधेयत्व वर्णित है, अर्थात् एक ही भगवान् का ध्यान करने की सामर्थ्य लाभ हेतु प्रार्थना जिस प्रकार उपक्रम श्लोक में है, उस प्रकार उपसंहार श्लोक में भी है। "जन्माद्यस्य यतः" इत्यादि उपक्रम श्लोक में "सत्यं परं धीमहि" के द्वारा भगवान् का ध्यान करने की योग्यता प्रार्थना की गई है। ध्यान के सम्बन्ध में श्रीभगवद् गीता १२।१ में उक्त है—"एवं सततयुक्ता ये भक्तस्त्वां पर्य्युपासते" हे भगवन्। इस प्रकार सतत अभियुक्त चित्त से जो सब भक्त तुम्हारी उपासना करते हैं और जो लोक तुम्हारे अव्यक्त निर्विशेष ब्रह्म स्वरूप की उपासना करते हैं, इन सबों के मध्य में योगवित्तम कौन हैं? अर्थात् उभयविध योगी के मध्य में श्रेष्ठ कौन हैं? इत्यादि श्लोक में कथित है कि—जो लोक श्रीभगवान् का ध्यान करते हैं, उनको क्लेश प्राप्त करना नहीं पड़ता है। इस प्रकार कथन से श्रीभगवद्ध्यान का सुख साध्यत्व प्रदर्शित हुआ है। भगवद् गीता ७।७ में उक्त है, "मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय" एवं १४।२७ में उक्त है—ब्रह्मणोहि प्रतिष्ठाहममृतस्याव्ययस्य च॥" एवं "सततयुक्ताः" प्रश्न के उत्तर में श्रीभगवान् कहे थे, हे अर्जुन! जो भक्त मुझ में आविष्टमनाः एवं नित्याभियुक्त होकर परम श्रद्धान्वित हृदय से मेरी उपासना करते हैं, मैं उनको युक्ततम मानता हूँ। इस प्रकार भगवदुक्ति से सुव्यक्त हुआ है कि-भगवत् स्वरूप ध्यान कारी व्यक्ति ही युक्ततम हैं, अतः "सत्यं परं धीमहि" पद व्याख्या में भगवद्ध्यान की योगता प्रार्थना की गई है। इस प्रकार समझना चाहिये।

"ब्रह्मणोहि प्रतिष्ठाहं" श्लोक में कहा गया है—मैं अमृत अव्यय ब्रह्म की प्रतिष्ठा हूँ, अर्थात् परमानन्द घनीभूत श्रीविग्रह हूँ। आश्रय हूँ। निर्विशेष ब्रह्मानन्दरस ही, अघटन घटन पटीयसी चिन्मयी योगमाया शक्ति की वैचित्र्य से भगवद्रूप में अभिव्यक्त होता है। इस उक्ति में "पर तत्त्व" का अर्थात् पार मार्थिक श्रेष्ठतत्त्वका पर्य्यवसान श्रीभगवद्रूप में है, तज्जन्य सविग्रह श्रीभगवान् ही अन्य निरपेक्ष परतत्त्व है, व्यक्त हुआ है। सर्व्वज्ञ एवं सर्वशक्तियुक्त होने के कारण श्रीभगवान् ही जगत् के जन्म स्थिति नाश के हेतु हैं, तज्जन्य "सत्यं परं धीमहि" वाक्यस्थ पर शब्द से श्रीभगवान् ही अभिहित हुए हैं। एवं उक्त भगवद्-ध्यान की प्रार्थना की गइ है। इस उप क्रम वाक्य में भी भक्ति का ध्यानाङ्ग रूप अभिधेयत्व वर्णित हुआ है। परमात्म सन्दर्भ में "जन्माद्यस्य" श्लोक की विस्तृत व्याख्या है, जिस में उक्त श्लोक का तात्पर्य्य श्रीभगवान् में ही पर्य्यवसित हुआ है।

भा० १२।१३।१४ में उक्त है—

"कस्मैयेन विभासितोऽयमतुलोज्ञानप्रदीपः पुरा,
तद्रूपेण च नारदाय मुनये कृष्णाय तद्रूपिणा।

विवृतमस्ति। (भा० १२।१३।१९) "कस्मै येन विभासितोऽयमतुलो ज्ञानप्रदीपः पुरा" इत्यादावुपसंहार-पद्येऽपि "सत्यं परं धीमहि" इति। अतएव स्पष्टमेवास्य श्रीभगवत्त्वम्, श्रीभागवतवक्तृत्वात्, पूर्व्वञ्च (भा० १।१।१) "तेने ब्रह्म हृदा य आदिकवये" इत्युक्तम् अभ्यासेनोदाहरणं, पूर्व्वं दर्शितमदर्शितं चानेकविधमेव, अपूर्व्वतया फलेन च दर्शितं श्रीव्यास-समाधौ (भा० १।७।६

---

योगीन्द्राय तदात्मनाथभगवद्राताय कारुण्यत
स्तच्छुद्धं विमलं विशोकममृतं सत्यं परं धीमहि ॥"

क्रमसन्दर्भ—"वस्त्वद्वितीयं तन्निष्ठम्" इति सामान्यत स्तात्पर्य्यं दर्शयित्वा भा० १।१।२ "जन्माद्यस्य" इत्याद्युपक्रम पोषकं श्रीभगवत्येव तस्य पर्य्यवसानं दर्शयन्नुपसंहरति–कस्मा इति। कस्मै ब्रह्मणे, महावैकुण्ठं दर्शयता श्रीभगवता येन विभाषितः प्रकाशितः, नतु तदा विरचितोऽयं श्रीमद्भागवत रूपः। पुरा—पूर्व परार्द्धादौ, तदात्मनेत्यस्योत्तरेणान्वयः। तत्र तदात्मना श्रीशुकरूपेणेति गम्यम्। 'तद्रूपेण च' इत्यादिभिस्त्रिभिः पदै र्न केवलं चतुःश्लोक्येव ते न प्रकाशिता, अपितु, तत तत्राविष्टेन अखण्डमेवेदं पुराणमिति द्योतितम्। श्रीसङ्कर्षण सम्प्रदाय प्रवृत्तिस्तु, श्रीकृष्ण द्वैपायन कर्त्तृक प्रकाशनान्तर्गतमेवेति पृथङ्नोक्ता। तत् परं सत्यं भगवदाख्यं तत्त्वं धीमहि, 'यत्तत् पदमनुत्तमम्' इति सहस्रनामस्तोत्रे तच्छब्दस्य तन्नामत्वेन गणितत्वात्। परं शब्देन च श्रीभगवानेवोच्यते। आद्योवतारः पुरुष परस्य" इति द्वितीयात्। ब्रह्मादीनां बुद्धि वृत्ति प्रेरकत्वेनाभिधानाद् गायत्र्यर्थोपलक्षितेन धीमहीति गायत्री पदेनोपसंहारः॥

इत्यादि उपसंहार श्लोक में भी 'जन्माद्य' इत्यादि उपक्रम श्लोक के समान 'सत्यं परं धीमहि' अविकृत एक ही पद का उल्लेख हुआ है। अतएव 'सत्यं परं धीमहि' वाक्यस्थ 'पर' शब्द का वाच्य श्रीभगवान् हैं। कारण, श्रीभगवान् ही श्रीमद् भागवत ग्रन्थ वक्ता हैं। संक्षेप में उन्होंने ही श्रीमद् भागवत के मुख्य प्रतिपाद्य परम गुह्य भगवज् ज्ञान, भगवदनुभव, भगवत् प्रेम एवं भगवत् प्रेम प्राप्ति का अव्यभिचारी उपाय साधन भक्ति इन चार तत्त्वों का उपदेश श्रीब्रह्मा को किया था। उपक्रम श्लोक में जिस प्रकार "तेने ब्रह्महृदा य आदिकवये" अर्थात् जिन्होंने ब्रह्मा के हृदय में सृष्टि के प्राक् काल में वेदार्थ तात्पर्य्य का प्रकाश किया था, इस प्रकार उल्लेख है, उस प्रकार उपसंहार वाक्य में भी "कस्मैयेन विभाषितोऽयमतुलो ज्ञान प्रदीपः पुरा" अर्थात् जिन्होने ब्रह्मा के समीप में साध्य साधनादि तत्त्व ज्ञान का प्रदीपस्वरूप श्रीभागवताख्य शास्त्र उपदेश किया, उन सत्यरूप 'पर' अर्थात् भगवान् का ध्यान करने की योग्यता प्रार्थना करता हूँ। इस प्रकार उपक्रम एवं उपसंहार वाक्य के द्वारा श्रीमद् भागवत का तात्पर्य्य श्रीभगवान् के ध्यान में पर्य्यवसित हुआ है।

शास्त्र तात्पर्य्य निर्णय हेतु षड़्विध लक्षण विहित हैं। अर्थात् शास्त्र में प्रसङ्ग क्रम से विविध विषय वर्णित होते हैं, किन्तु शास्त्र का मुख्य प्रतिपाद्य विषय क्या है, इस को अवगत होने के निमित्त उपक्रम उपसंहार, अभ्यास (पुनः पुनः उल्लेख) अपूर्व, फल, अर्थवाद, उपपत्ति (युक्ति) ये छै लक्षणों को अवलम्बन करना पड़ता है। श्रीमद् भागवत के उपक्रम एवं उपसंहार वाक्य में जिस प्रकार श्रीभगवद् ध्यान की प्रार्थना की गई है, उस प्रकार अभ्यास– अर्थात् एक ही विषय का पुनः पुनः उल्लेख के द्वारा भी भगवद् भक्ति का अवश्य कर्त्तव्यतारूप अभिधेयत्व प्रदर्शित हुआ है। इस का प्रदर्शन पूर्व ग्रन्थ में हुआ है। एवं प्रस्तुत सन्दर्भ में अनुल्लिखित रूप में भी श्रीमद् भागवत में अनेक प्रकार उल्लेख हैं। अपूर्व एवं फल का प्रदर्शन श्रीव्यास समाधिस्थ भा० १।७।६ में है—

"अनर्थोपशमं साक्षाद् भक्ति योगमधोक्षजे।

"अनर्थोपशमं साक्षात्" इत्यादि, प्रशंसालक्षणेनार्थवादेन चाभ्यासवद्बहुविधमेव तत्र तत्रास्ति, उपपत्त्या च (भा० ११।२।३७) "भयं द्वितीयाभिनिवेशतः स्तात्" इत्याद्यनेकमिति । अत्र गतिसामान्ये च (भा० १।५।२२)–"इदं हि पुंसस्तपसः श्रुतस्य वा" इत्यादि तथाह (भा०३।५।१२)

---

लोकस्याजानतो विद्वांश्चक्रे सात्वतसंहिताम् ।"

टीका–अनर्थमुपशमयति–योऽधोक्षजे साक्षाद् भक्ति योगः, तञ्चापश्यत् । एतत् सर्वं स्वयं दृष्ट्वा एवमजानतो लोकस्यार्थे सात्वतसंहितां श्रीभागवताख्यां चक्रे । तदनेन श्लोकत्रयेण श्रीभागवतार्थः संक्षेपेण दर्शितः । एतदुक्तं भवति,—विद्याशक्त्या मायां नियन्ता नित्याविर्भूत परमानन्द स्वरूपः सर्वज्ञः सर्वशक्तिरीश्वरः, तन्मायया सम्मोहित स्तिरोभूत स्वरूपस्तद्विपरीत धर्मा जीवः, तस्यचेश्वरस्य भक्त्या लब्धज्ञानेन मोक्ष इति । तदुक्तं विष्णुस्वामिना ह्लादिन्या संविदाश्लिष्टः सच्चिदानन्द ईश्वरः स्वाविद्या संवृतोजीवः संक्लेश निकराकरः । तथा—स ईशो यद्वशे माया स जीवो यस्तयार्दितः । स्वाविर्भूतपरानन्दः स्वाविर्भूतसुखदुःख भूः स्वादृगुत्थ विपर्य्यास भवभेदजभीशुचः । यन्मायया जुषन्नास्ते तमिमं नृहरिं नुमः । इत्यादि ।

साक्षात् भक्ति योग के द्वारा ही अनर्थ की निवृत्ति होती है । अधोक्षज श्रीभगवान् में उस प्रकार साक्षात् भक्ति योग का दर्शन भी श्रीव्यास देव किये थे । इस से भक्ति योग के द्वारा निखिल अनर्थ निवृत्ति रूप अपूर्व, एवं फल का प्रदर्शन हुआ । श्रीमद् भागवत में प्रशंसा लक्षण अर्थ वाद के द्वारा भी अभ्यास के समान भक्तियोग की प्रशंसा विविध रूप से उल्लिखित है । उपपत्ति–अर्थात् युक्ति के द्वारा भी प्रदर्शित हुआ है कि—भगवद् भक्ति के विना, अपर किसी भी उपाय से जीव का मायापसारण एवं स्वरूप ज्ञान नहीं हो सकता है । भा० ११।२।३७ में उसका वर्णन है ।

"भयं द्वितीयाभिनिवेशतः स्या
दीशा पेतस्य विपर्य्ययोऽस्मृतिः ।
तन्माययातो बुध आ भजेत् तं
भक्त्यैकयेशं गुरुदेवतात्मा ।"

टीका–ननु किमेवं परमेश्वर भजनेन । अज्ञान कल्पित भयस्य ज्ञानैक निवर्त्यत्वादित्याशङ्क्याह–च यमिति । यतो भयं तन्माययाभवेत् अतो बुधो बुद्धिमानं स्तमेव आभजेत् । ननु भयं देहाद्यनिभिवेशतो भवति सच देहाहङ्कारतः सच स्वरूपास्मरणात् । किमत्र तस्य माया करोति– अत आह ईशादपेतस्येति । ईश विमुखस्य तन्मायया अस्मृतिर्भगवतः स्वरूपास्फूर्त्ति स्ततो विपर्य्ययो देहोऽस्मीति ततो द्वितीयाभि निवेशाद् भयं भवति । एवं हि प्रसिद्धं लौकिकीष्वपि मायासु । उक्तञ्च भगवता, दैवी ह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते इति एकया अव्यभिचारिण्या भक्त्या भजेत् । किञ्च गुरुदेवतात्मा--गुरुदेव देवता ईश्वर आत्मा प्रेष्ठश्च यस्य तथा दृष्टिः सन्नित्यर्थः ।

श्रीमद् भागवत के(१।१५।२२)में गति सामान्य के द्वारा भी अर्थात् निखिल साधनों का फल रूप में भी भगवद् भक्ति की ही अवश्य कर्त्तव्यता प्रदर्शित हुई है ।

"इदं हि पुंस स्तपसः श्रुतस्य वा स्विष्टस्य सूक्तस्य च बुद्धदत्तयोः ।
अविच्युतोऽर्थः कविभिर्निरूपितो यदुत्तमः श्लोक गुण नु वर्णनम् ।।

टीका—"अनेनैव तप आदि सर्वं तव सफलं स्यादित्याह इदमिति । श्रुतादयो भावे निष्ठा । इदमेव हि तपः श्रवणादेरविच्युतो नित्यः अर्थं फलम् । किं तत् ? उत्तमश्लोकस्य गुणानु वर्णनमिति यत् ।।"

(११४) "मुनिर्विवक्षुर्भगवद्गुणानां, सखापि ते भारतमाह कृष्णः" इत्यादि। स्पष्टम् ॥ श्रीविदुरः ॥

११५। इयमेव भक्तिः (भा० १।१।२) "धर्म्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सताम्" इत्यत्रोक्ता। (भा० २।१०।१) "अत्र सर्गो विसर्गश्च" इत्यादौ दशलक्षण्यामपि सद्धर्म्म

---

मानव मात्र के तपस्या, वेदाध्ययन, यज्ञ, मन्त्रजप, ज्ञान एवं दान—इन सब साधनों का मुख्य फल उत्तम श्लोक श्रीहरि का गुणाणुवर्णन है। अर्थात् मनीषिवृन्द–श्रीहरि गुण कीर्त्तन को ही निखिल साधनों का मुख्य फल कहते हैं। अतएव समस्त साधनों का समान अर्थात् एकफल रूप में श्रीमद् भगवद् भक्ति की ही अवश्य कर्त्तव्यता प्रदर्शित हुई है।

भा० ३।५।१२ में उक्त है—

(११४) "मुनिर्विविक्षु र्भगवद् गुणानां, सखापि ते भारत माह कृष्णः।
यस्मिन्नृणां ग्राम्यसुखानुवादै र्मतिगृहीता नु हरेः कथायाम् ॥

टीका—महाभारतस्यापि अत्रैव तात्पर्य्यमित्याह। मुनिः कृष्णो वेदव्यासः, भगवद्गुणान् मोक्षधर्मान्ते नारायणीयोपाख्यानेन वक्तुमिच्छुः सन्' अर्थ कामादि वर्णनन्तु हरिकथायां मति प्रवेशार्थमेवेत्याह–यस्मिन्निति। नृणां मतिः ग्राम्यसुखानुवादै र्द्वारभूतैः नु निश्चितं हरेः कथायां गृहीता नीता। तदुक्तं इतिहास समुच्चये। कामिनो वर्णयन् कामान् लोभंलुब्धस्य वर्णयन्। नरः किं फल माप्नोति कूपेऽन्धमिव पातयन्। लोकचित्तावतारार्थं वर्णयित्वात्र तेन तौ। इतिहासैः पवित्रार्थैः पुनरत्रैव निन्दितौ। अन्यथा घोरसंसार बन्ध हेतु र्जनस्य तौ। वर्णयेत् स कथं विद्वान् महाकारुणिको मुनिरिति॥"

विदुर मैत्रेय ऋषि को कहे थे— आप के सखा मुनि वेदव्यास, भगवद् गुण वर्णन करने का अभिलाषी होकर महाभारत वर्णन किये हैं, जिस में हरि कथा में मति प्रवेश कराने के निमित्त मानव वृन्दों का अर्थ कामादि वर्णन रूप ग्राम्य सुखानुवाद किये हैं। इस से भी मुख्य पुरुषार्थ श्री हरि कथा कीर्त्तन ही है। "इदं हि पुंसः" श्लोक में निखिल साधनों का मुख्य फल-श्रीहरि कीर्त्तन को ही कहा गया है। अतएव गति सामान्य न्याय से—श्रीमद् भागवत १।५।२२ में उक्त उत्तम श्लोक के गुणानुवाद को मुख फल रूप में दर्शाया गया है। अतएव श्रीमद् भागवत के मुख्य अभिधेय–जो श्रीहरिभक्ति है—इस में कुछ भी संशय नहीं है।

प्रवक्ता श्रीविदुर हैं।।११४।।

११५। उक्त भक्ति की कथा भा० १।१।२ में कही गई है—

"धर्म्मः प्रोज्झित कैतवोऽत्र परमो निर्म्मत्सराणां सतां
वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम्।
श्रीमद् भागवते महामुनिकृते किंवा परैरीश्वरः।
सद्यो हृद्यवरुद्धयतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात्॥"

क्रमसन्दर्भः—अथैतस्य वक्ष्यमाण शास्त्रस्य कर्मज्ञान भक्ति प्रतिपादकेभ्य स्त्रिकाण्ड विषयशास्त्रेभ्यो वैशिष्ट्यं दर्शयन् क्रमादुत्कर्षमाह—धर्म इति। अत्र यस्तावद्धर्म्मो निरूप्यते, स खलु भा० १।२।६ "स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे" इत्यादिकया भा० (१।२।१३) "अतः पुंभिर्द्विजश्रेष्ठा वर्णाश्रम विभागशः। स्वनुष्ठितस्य धर्मस्य संसिद्धि र्हरितोषणम्, इत्यन्तया रीत्या भगवत् सन्तोषणैक तात्पर्य्येण शुद्ध भक्त्युत्पादक तथा निरूपणात् परम एव। यतः सोऽपि तदेकतात् पर्य्यत्वात् प्रोज्झित कैतवः--प्रकर्षेणोज्झितं कैतवं फलाभिसन्धि लक्षणं कपटं यस्मिंस्तथाभूतः। (प्र) शब्देन सालोक्यादि सर्व प्रकार मोक्षाभिसन्धिरपि

इत्येकलक्षणत्वेनोक्ता । तस्या अभिधेयत्वं श्रीभागवत-वीजरूपायां चतुःश्लोक्यामप्युदाहृतम् (भा० २।९।३५) —

"एतावदेव जिज्ञास्यं तत्त्वजिज्ञासुनात्मनः ।
अन्वय-व्यतिरेकाभ्यां यत् स्यात् सर्व्वत्र सर्व्वदा ॥"२९५॥ इत्यादि

पूर्व्वं हि ज्ञान-विज्ञान-रहस्य-तदङ्गानि वक्तव्यत्वेन चत्वार्य्येव प्रतिज्ञातानि । तत्र

---

निरस्तः, यत एवासौ तदेक तात्पर्य्यत्वेन निर्मत्सराणां फल कामुकस्येव परोत्कर्षासहनं मत्सर स्तद्रहितानामेव, तदुपलक्षणत्वेन पश्चालम्भेन दयालूनामिव च सतां स्वधर्म पराणां विधीयते । एवमीदृशं स्पष्टमनुक्तवतः कर्मशास्त्रादुपासनाशास्त्राच्चास्य तत्तत् प्रतिपादकांशेऽपि वैशिष्ट्यमुक्तम् । उभयत्रैव धर्मोत्पत्तेः । तदेवं साक्षात् श्रवण कीर्त्तनादि रूपस्य वार्ता तु दूरत आस्तामिति भावः ॥"

अर्थात् श्रीमद् भागवत में मोक्षाभिसन्धि प्रमुख कपटता शून्य साधुवृन्द के परम धर्म वर्णित है । यहाँपर 'परमधर्म' शब्द से विशुद्ध भक्ति को ही जानना होगा ।

श्रीमद् भागवत के २।१०।१ में उक्त है—

"अत्र सर्गो विसर्गश्च स्थानपोषणमुतयः ।
मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः ॥"

यहाँ दश लक्षण के मध्य में जो सद्धर्म की कथा उल्लिखित है, वह सद्धर्म एवं धर्मः प्रोज्झित कैतवोऽत्र परमोनिर्मत्सराणां सताम् ॥ इत्यादि श्लोक में उक्त परम धर्म का एक ही लक्षण उक्त है। अर्थात् महा पुराण के जो दश लक्षण की कथा उल्लिखित है, उन दश लक्षण के मध्य में "ईशानुकथा" की व्याख्या में, "मन्वन्तराणि सद्धर्म्म" इत्यादि श्लोक में उक्त सद्धर्म, एवं श्रीमद् भागवत के प्रतिपाद्य 'परम धर्म" एकार्थ वाचक है ।

भगवद् भक्ति का अभिधेयत्व का वर्णन श्री मद् भागवत की वीज रूपा चतुःश्लोकी में भी है,

(भा० २।९।३५) "एतावदेव जिज्ञास्यं तत्त्वजिज्ञासुनात्मनः ।
अन्वयव्यतिरेकाभ्यां यत् स्यात् सर्वत्र सर्वदा ॥२९५॥

क्रमसन्दर्भ—अथक्रम प्राप्तं रहस्य पर्य्यन्त साधकत्वात् रहस्यत्वेनैव तदङ्गमुपदिशति--एतावदिति । आत्मनो मम भगवत स्तत्त्व जिज्ञासुना प्रेमरूपं याथार्थ्यं रहस्यमनु भवितु मिच्छु नैतावदेव जिज्ञास्यम्--श्रीगुरुचरणेभ्यः शिक्षणीयम् । किं तत् ? यदेकमेव वस्तु अन्वय व्यतिरेकाभ्यां विधि निषेधाभ्यां सदा सर्वत्र स्यादित्युपपद्यते । तत्रान्वयेन यथा (भा० ७।७।५५ ) "एतावानेव लोकेऽस्मिन्" इत्यादि, ( गी० १८।६१) ईश्वरः सर्वभूतानाम् " इत्यादि, (गी० १८।६५) "मन्मनाभव मद्भक्तः" इत्यादि च । व्यतिरेकेण यथा (भा० ११।५।२) ( "मुखबाहूरुपादेभ्यः इत्यादि भा० ३।९।१०) ऋषयोऽपिदेव, युष्मत् प्रसङ्ग विमुखा इह संसरन्ति" इत्यादि । (गी० ७।१५) "नमां दुष्कृतिनोमूढ़ाः ।" इत्यादि, (भ० स० ११५ तमानुच्छेदधृत पाद्म वचनम् ) 'यावज्जनो भजति नो भुवि विष्णुभक्ति--इत्यादि वा कुत्र कुत्रोपपद्यते ? सर्वत्रशास्त्रकर्त्तृ देश-करण--द्रव्य--क्रिया--कार्य्य -फलेषु समस्तेष्वेव । तत्र समस्त शास्त्रेषु यथा स्कान्दे ब्रह्मनारद संवादे--संसारेऽस्मिन् महाघोरे जन्ममृत्यु समाकुले । पूजनं वासुदेवस्य तारकं वादिभिः स्मृतम् ।।" इति । तत्राप्यन्वयेन यथा--(भा० २।२।३४) (भगवान् ब्रह्म कार्त्स्न्येन ) इत्यादि । तथा पाद्मे स्कान्दे लैङ्गे च—'आलोड्य सर्व शास्त्राणि विचार्य्य च पुनः पुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा । इति । व्यतिरेकोदाहरणम् ।

चतुःश्लोक्याः प्राक्तनास्त्रयोऽर्था अपि ( ६५ अनु० ) भगवत्सन्दर्भे क्रमेणैव प्राक्तन-श्लोकत्रये व्याख्याताः । 'रहस्य'-शब्देन तत्र प्रेमभक्तिः, 'तदङ्ग'-शब्देन साधनभक्तिरुच्यते । टीका च--

---

गारुड़े—'पारं गतोऽपि वेदानां सर्वशास्त्रवेद्यपि यो न सर्वेश्वरे भक्त स्तं विद्यात् पुरुषाधमम् ।' इत्यादिकं सर्वत्रावगन्तव्यम् । तच्चान्ते दर्शयिष्यते । एकादशे च ( भा० ११।११।१८ ) 'शब्द ब्रह्मणि निष्णातो न निष्ण यात् परेयदि श्रमस्तस्य श्रमफलो ह्यधेनुमिवरक्षकः इति । सर्व वर्त्तेषु यथा भा० ११।१७।४६ 'ते वै विदन्त्यति तरन्ति च देवमायां, स्त्री शूद्र--हून--शवराः अपि पाप जीवाः । यद्यद्भुत क्रम परायण शील शिक्षा स्तिर्य्यग् जना अपि किमु श्रुतधारणा ये' । इति गारुड़े च—'कीटपक्षि मृगानाञ्च हरौ संन्यस्त चेतसाम् ऊर्द्ध्वामिव गतिं मन्ये किं पुन र्ज्ञानिणां नृणाम् ।" इति, तत्रैव साचारे दुराचारे ज्ञानिन्यज्ञानिनि, विरक्ते रागिणि मुमुक्षौ--मुक्ते,भक्तच सिद्धे, भक्ति सिद्धे । तस्मिन् भगवत् पार्षदतां प्राप्ते, तस्मिन्नित्य पार्षदे' च सामान्येन दर्शनादपि सार्वत्रिकतः । तत्र साचारे दुराचारे च यथा—(गी० ६।३०) 'अपिचेत् सुदुराचारो भजते मामनन्यभाक् । साधुरेव स मन्तव्यः सम्यग् व्यवसितो हि सः ।' इति । सदाचारस्तु किं वक्तव्य इत्यपेरर्थः । ज्ञानिन्यज्ञानिनि च (भा० ११।११।३३) ज्ञात्वाज्ञात्वाथ ये वै माम् " इत्यादि (बृहन्नारदीये ) 'हरि र्हरति पापानि दुष्ट चित्तैरपिस्मृतः । इति । विरक्ते रागिणि च ( भा० ११।१४।१८) "बाध्यमानोऽपि मद्भक्तो विषयैरजितेन्द्रियः । प्रायः प्रगल्भया भक्त्या विषयैर्नाभि-भूयते' इति । अबाध्यमानस्तु सुतरां नाभिभूयत इत्यपेऽर्थः । मुमुक्षौ मुक्ते च (भा० १।२।२६) 'मुमुक्षवो घोररूपान्' इत्यादि । (भा० १।७।१०) 'आत्मारामाश्च मुनयः' इत्यादि च । भक्तचसिद्धे भक्तिसिद्धे च (भा० ६।१।१५) 'केचित् केवलया भक्त्या वासुदेवपरायणा.' इत्यादि । (भा० ११।२।५३) 'न चलति भगवत् पदारविन्दाल्लवनिमिषार्द्धमपि सवैष्णवाग्रचः' इति च । भगवत्पार्षदतां प्राप्ते (भा० ६।४।६७) "मत्सेवया प्रतीतं ते इत्यादि (भा० ३।१५।२२) 'वापीषु विद्रुमतटास्वमलामृताप्सु ' इत्यादि । सर्वेषु दर्षेषु, भुवनेषु, ब्रह्माण्डेषु तेषां वहिश्च तै स्तैः श्रीभगवदुपासनायाः क्रियमाणायाः श्रीभागवतादिषु प्रसिद्धिः सिद्धैवेति सर्व देशोदाहरणं ज्ञेयम् । सर्वेषु करणेषु यथा 'मनसेनोपचारेण परिचर्य्य हरिं मुदा । परे वाङ्मनसा गम्यं तं साक्षात् प्रतिपेदिरे ।' इति । एवम्भूत वचने हि अस्तु तावद् वहिरिन्द्रियेण, मनसा वचसापि तत् सिद्धिरिति प्रसिद्धिः, सर्व द्रव्येषु यथा (भा० १०।८१।४) 'पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति' इत्यादि । सर्व क्रियासु यथा ( भा० ११।२।१२) 'श्रुतोऽनुपठितो ध्यात आदृतो वानुमोदितः । सद्यः पुनाति सद्धर्मो देव विश्वद्रुहोऽपि हि ।" इति । (गी० ६।२७) 'यत् करोषि यदश्नासि' इत्यादि । एवं भक्त्याभासेषु भक्त्या-भाषापराधेष्वप्यजामिल मूषिकादयो दृष्टान्ताः गम्याः । सर्वेषु कार्य्येषु यथा (स्कान्दे) 'यस्य स्मृत्या च नामोक्त्या तपोयज्ञोक्रियादिषु । न्यूनं सम्पूर्णतामेति सद्यो वन्दे तमच्युतम् ।' इति । सर्वफलेषु यथा— (भा० २।३।१० ) 'अकामः सर्वकामो वा' इत्यादि, तथा (भा० ४।३१।१४) 'यथातरोर्मूलनिषेचनेन' इत्यादि वाक्येन श्रीहरि पर्य्यायां क्रियमाणायां सर्वेषामन्येषामपि देवादीनामुपासना स्वत एव भवतीत्यतोऽपि सार्व त्रिकता । यथोक्तं स्कान्दे श्रीब्रह्म नारद संवादे—'अर्चिते देवदेवेशे शङ्ख चक्र गदाधरे । अर्चिताः सर्वदेवाः स्युर्यतः सर्व गतोहरिः ।" इति । एवं यो भक्तिं करोति, यद् गवादिकं भगवते दीयते, येन द्वारभूतेन भक्तिः क्रियते, यस्मै श्रीभगवत् प्रीणनार्थं दीयते, यस्माद् गवादिकात् पय आदिकमादाय भगवते निवेद्यते, यस्मिन् देशादौ कुले वा कश्चिद् भक्तिमनुतिष्ठति, तेषामपि भगवत् कृतार्थ त्वं पुराणेषु दृश्यत इतिकारक गतापि । एवं सार्वत्रिकत्वं साधितम् ।

सदातनत्वमप्याह सर्वदेति । तत्र सर्गादौ यथा (भा० ११।१४।३) 'कालेन नष्टा वाणीयं प्रलये वेदसंज्ञिता इति । सर्गमध्ये तु बहुत्रैव । चतुर्विध प्रलयेष्वपि (भा० ३।७।३७) 'तत्रेमं क उपासीरन्' इति विदुर प्रश्ने ।

"रहस्यं भक्तिस्तदङ्गं साधनम्" इत्येषा । ततः क्रम-प्राप्तत्वेन (भा० ११।१४।३) –

"कालेन नष्टा प्रलये वाणीयं वेद-संज्ञिता ।
मयादौ ब्रह्मणे प्रोक्ता धर्म्मो यस्यां मदात्मकः ।।"२९६।।

---

सर्वेषु युगेषु यथा--(भा० १२।३।५२) 'कृतेयद्ध्यायतो विष्णुं त्रेतायां भजतो मखैः । द्वापरे पारचर्य्यायां कलौ तद्धरि कीर्त्तनात्" इति । किं बहुना ? सा हानिस्तन्महच्छिद्रं स मोह स च विभ्रमः । यन्मूहूर्त्तं क्षणं वापि वासुदेवं न चिन्तयेत् । इत्यपि वैष्णवे । सर्वावस्थास्वपि—गर्भे श्रीनारदकारित श्रवणेन श्री-प्रह्लादे प्रसिद्धम् । बाल्ये श्रीध्रुवादिषु । यौवने श्रीमदम्बरीषादिषु, वार्द्धक्ये खट्वाङ्ग, ययाति, धृतराष्ट्रादिषु मरणे अजामिलादिषु, स्वर्गितायां चित्र केत्वादिषु, नारकितायामपि, 'यथायथा हरेर्नाम कीर्त्तयन्ति स्म नारकाः । तथा तथा हरौ भक्ति मुद्वहन्तो दिवं ययुः । 'इति नृसिंह पुराणे । अतएवोक्तं दुर्वाससा (भा० ९।४।६२) 'मुच्येत यन्नाम्न्युदिते नारकोऽपि इति । यथा (भा० २।१।११) 'एतन्निर्विद्यमानानाम्' इत्यादावपि सर्वावस्थोदाहृतिः ।।'

अथ तत्र तत्र व्यतिरेकोदाहरणानि च कियन्ति दर्श्यन्ते 'पारं गतोऽपि वेदानां सर्वशास्त्रार्थ वेद्यपि । यो न सर्वेश्वरे भक्तस्तं विद्यात् पुरुषाधमम् । इति । किं वेदैः किमुशास्त्रै र्वा किं वा तीर्थ निषेवणैः । विष्णु भक्ति विहीनानां किं तपोभिः किमध्वरैः । इत्यादि । वाजपेय सहस्रै र्वा भक्ति र्यस्य जनार्दने ।' इत्यादि गारुड़ बृहन्नारदीय पाद्म वचनानि, तथा (भा० २।४।१७) 'तपस्विनो दानपरा यशस्विनो, मनस्विनो मन्त्र विदः सुमङ्गलाः क्षेमं न विन्दन्ति विना यदर्पणं तस्मै सुभद्र श्रवसे नमो नमः ।' (भा० ५।१९।२३) न यत्र वैकुण्ठ कथा सुधापगा, न साधवो भगवता स्तदाश्रयाः । न यत्र यज्ञेशमखा महोत्सवाः सुरेशलोकोऽपि न वै स सेव्यताम् ।" (भा० १०।५९।४१) "यया च आनम्य किरीटकोटिभिः" इत्यादि, (भा० ३।२९।१३) 'सालोक्य सार्ष्टि--सारूप्य--सामीप्य" इत्यादि ।' (भा० ७।७।५२) 'न दानं न तपोनेज्य इत्यादि, (भा० १।५।१२) (१२।१२।५३) 'नैष्कर्म्यमप्यच्युतभाव वर्णितम् ।' इत्यादि (भा० ३।१५।४८) 'नात्यन्तिकं विगणन्त्यपि ते प्रसादम्' इत्यादयः ।

अथ सर्वत्र सर्वदा यदुपपद्यत इति योजनिकार्थो युगपद् यथा (भा० २।२।३६) "तस्मात् सर्वात्मना राजन् हरिः सर्वत्र सर्वदा" इत्यादि । अन्वय-व्यतिरेकाभ्यां सर्वत्र सदा यदुपपद्यत इत्यत्र यथा (पाद्मे) 'स्मर्त्तव्यः सततं विष्णुः' इत्यादि । साकल्येऽपि यथा ( भा० २।२।३३) 'नह्यतोऽन्यः शिवः पन्थाः' इत्युपक्रम्य तदुपसंहारे (भा० २।२।३६) 'तस्मात् सर्वात्मनाराजन् हरिः सर्वत्र सर्वदा श्रोतव्य कीर्त्तितव्यश्च स्मर्त्तव्यो भगवान् नृणाम् ।।" इति । अत्र नृणां जीवानाम् ।

पहले श्रीभगवान् ज्ञान, विज्ञान, रहस्य एवं उस के अङ्ग इन चारो विषयों का वर्णन करेंगे—इस प्रकार प्रतिज्ञा किये थे ! उक्त चतुः श्लोको के मध्य में ज्ञान विज्ञान एवं रहस्य का कथन 'अहमेवास मेवाग्र ऋतेऽर्थं यत् प्रतीयेत' 'यथामहान्ति भूतानि" तीन श्लोकों के द्वारा हुआ है । उक्त प्रति ज्ञात विषय चतुष्टय के मध्य में 'रहस्य' शब्द का अर्थ--प्रेम भक्ति एवं उसके अङ्ग शब्द का अर्थ साधन भक्ति है । श्रीधर स्वामिपाद कृत टीका में भी 'रहस्यं भक्तिस्तदङ्गं साधनं' उल्लेख है । अर्थात् रहस्य शब्द का अर्थ भक्ति है, एवं अङ्ग शब्द का अर्थ उस प्रेम भक्ति प्राप्ति की उपाय स्वरूप श्रवण कीर्त्तनादि विशुद्ध साधन भक्ति है । अतएव क्रम प्राप्त होने के कारण भा० ११।१४।३ में वर्णित है—

"कालेन नष्टा प्रलये वाणीयं वेद संज्ञिता ।
मयादौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः ।।"

क्रमसन्दर्भ कालेनेति सार्द्धकम् । तैः । कालेन नष्टा, तत्रापि प्रलये कल्पान्ते, बहुधा नष्टेत्यर्थः ।

इति भगवद्वाक्यानुसारेण च चतुर्थेऽस्मिन् पद्ये साधनभक्तिरेव व्याख्याता ।

अत्र च पुनर्व्याख्या विवरणायोत्थाप्यते । तथा हि,-आत्मनो मम भगवतः, तत्त्वजिज्ञासुना प्रेमरूपं रहस्यमनुभवितुमिच्छुना, एतावन्मात्रमेव जिज्ञासितव्यं श्रीगुरुचरणेभ्यः शिक्षणीयम् । किन्तत् ? यदेकमेव अन्वयेन विधि-मुखेन, व्यतिरेकेण निषेध-मुखेन च स्यादुपपद्यते ।

---

इयमिति (२य श्लोक ) 'भवता' इत्यादिना यथा भवतानूद्यते, तथा निरूपितेत्यर्थः । एतेन ज्ञानादिकं ज्ञानादि मिश्रत्वं मदावेशान्य (मद्भक्तियोगं विनान्य) फलत्वञ्च न मन्मति बोधितम् । आदौ ब्रह्म कल्पादौ । मदात्मक मत् स्वरूपभूतः--ह्लादिनी साररूपत्वात् ।

स्वामी टीका—तत्र भक्तिरेव महाफलत्वेन मुख्या अन्यानि तु स्व प्रकृत्यनुसारेण पुष्पस्थानीय स्वर्गादि फल बुद्धिभिः प्राणिभिः प्राधान्येन परि कल्पितानि क्षुद्रफलानीति विवेक्तुं प्रकृत्यनुसारेण बहुधा वेदार्थ प्रतिपत्तिमाह, कालेनेति सप्तभिः । मदात्मकः मय्येवात्मा चित्तं येन सः ।।

हे उद्धव ! प्रलय काल में विशुद्ध भक्ति ग्रहणोपयोगी पात्र न होने के कारण—इस जगत् में वेद की मुख्य आदेश वाणी रूप यह भक्ति अप्रकाशित थी । सृष्टि के प्रथम समय में मैंने ब्रह्मा को जिस आदेश वाणी के द्वारा मेरा स्वरूप भूत धर्म का उपदेश दिया था । जिसमें विशुद्ध भक्ति धर्म का विवरण ही था । इस प्रकार भगवदुपदेश वाक्यानुसार ही चतुः श्लोकी के चतुर्थ श्लोक—(एतावदेव जिज्ञास्यम्) श्लोक की व्याख्या साधन भक्ति पर हुई है । यहाँपर उक्त श्लोक की व्याख्या विस्तृत रूप से करने के निमित्त उक्त श्लोक का उल्लेख किया गया है । व्याख्या यह है—

आत्मा—भगवान् जो मैं हूँ वह मेरा प्रेम रूप रहस्य तत्त्व का अनुभव करने के निमित्त जो व्यक्ति इच्छुक है, वह व्यक्ति, श्रीगुरु चरण के समीप में एतावन्मात्र ही जिज्ञासा करे । वह जिज्ञास्य विषय क्या है ? उत्तर में कहते हैं - जो एक वस्तु है, उस की उपलब्धि सर्वत्र अन्वय मुख से अर्थात् विधिमुख से एवं व्यतिरेक मुख से अर्थात् निषेध मुख से होती है, वही जिज्ञास्य है ।

उस के मध्य में अन्वय मुख से प्राप्ति भा० ७।७।५५ में है—

"एतावानेव लोकेऽस्मिन् पुंसः स्वार्थः परः स्मृतः ।
एकान्त भक्ति र्गोविन्दे यत् सर्वत्र तदीक्षणम् ।।"

टीका—अध्याय द्वयोक्तमुपसंहरति एतावानिति । तदीक्षणं, गोविन्द दृष्ट्या सम्माननम् ।

क्रमसन्दर्भ—तस्य भगवत एव ईक्षणं स्फूर्त्तिः (भा० ११।२।४५) "सर्व भूतेषु यः पश्येत्" इत्यादेः ।।

मानव मात्र को मङ्गल लाभ वह ही है यदि श्रीगोविन्द के चरण युगल में एकान्त भक्ति हो, और सर्वत्र श्रीगोविन्द की स्फूर्त्ति हो । (भा० ३।३५।४४) में भी श्रीकपिल देव ने जननी को कहा है—

"एतावानेव लोकेऽस्मिन् पुंसां निःश्रेयसोदयः ।
तीव्रेण भक्ति योगेन मनोमय्यर्पितं स्थिरम् ।।

क्रमसन्दर्भ—देवानामित्यादिवत् स्वस्य तु मतमाह—एतावानिति । तीव्रेण दृढ़ेन योग कर्मादिर-भङ्गुरेण शुद्धेनेत्यर्थः । तेनैवार्पितं सत् स्थिरं भवतीति यत्—एतावानेव निःश्रेयसस्य परमपुरुषार्थस्याविर्भावः ।

हे मातः ! तीव्र भक्ति योग के द्वारा मुझ में मनः अर्पण करने से ही मनःस्थिर होता है । यही मानव जगत् में निःशेष मङ्गल प्राप्ति है । (भगवद् गीता ९।३४--१८।६५ में उक्त है—

तत्रान्वयेन, यथा (भा० ७।७।५५)--"एतावानेव लोकेऽस्मिन्" इत्यादि, (गी० ९।३४, १८।६५) "मन्मना भव मद्भक्तः" इत्यादि च। व्यतिरेकेण, यथा (भा० ११।५।२-३)—

"मुखबाहूरुपादेभ्यः पुरुषस्याश्रमैः सह।
चत्वारो जज्ञिरे वर्णा गुणैर्विप्रादयः पृथक्॥२९७॥
य एषां पुरुषं साक्षादात्मप्रभवमीश्वरम्।
न भजन्त्यवजानन्ति स्थानाद्भ्रष्टाः पतन्त्यधः॥"२९८॥

---

"मन्मनाभव मद् भक्तो मद् याजी मां नमस्कुरु।
मामेवैष्यसि युक्त्वैव मात्मानं मत् परायणः।

टीका—भजन प्रकारं दर्शयन्नुपसंहरति—मन्मना इति। एवं आत्मानं मनो देहञ्च युक्त्वा मयि नियोज्य।

"मन्मना भव मद् भक्तो मद् याजी मां नमस्कुरु।
मामेवैष्यसि सत्यं ते प्रति जाने प्रियोऽसि मे।

टीका—मन्मना भवेति। मद्भक्तः सन्नेव मां चिन्तय वा भूत्वा मद्ध्यानं कुर्विदर्थः। यद्वा मन्मना-भव, मह्यं श्याम सुन्दराय सुस्निग्धाकुञ्चित कुन्तलकाय, सुन्दर भ्रूवल्लिमधुरकृपाकटाक्षामृतवर्षिवदन चन्द्राय। स्वीयं देयत्वेन मनोयस्य तथा भूतो भव। अथवा श्रोत्रादीन्द्रियानि देहीत्याह। मद्भक्तोभव। श्रवण कीर्त्तन मन्मूर्त्ति दर्शन, मन्मन्दिर मार्जन लेपन पुष्पाहरण मन्मालाङ्कारच्छत्रचामरादि भः सर्वेन्द्रिय करणकं मद् भजनं कुरु। अथवा मह्यं गन्ध पुष्प धूपदीप नैवेद्यादीनि देहीत्याह मद्याजी भव,—मत् पूजनं कुरु। अथवा मह्यं नमस्कारमात्रं देहीत्याह। मां नमस्कुरु। भूमौ निपत्य अष्टाङ्गं पञ्चाङ्गं वा प्रणामं कुरु। एषां चतुर्णां मच्चिन्तन सेवन पूजन प्रणामानां समुच्चयमेकतरं वा त्वं कुरु। मामेवैष्यसि प्राप्स्यसि। मनः प्रदानं श्रोत्रादीन्द्रिय प्रदानं गन्ध पुष्पादि प्रदानं वा त्वं कुरु। तुभ्यं अहमात्मानं एव दास्यामीति सत्यं ते तवैव नात्र संशयिष्ठा इति भावः। सत्यं शपथ तत्थ्ययोरित्यमरः। ननु माथुर देशोद्भूता लोकाः प्रति वाक्यमेव शपथं कुर्वन्ति। सत्यं, तर्हि प्रतिजाने प्रतिज्ञां कृत्वा ब्रवीमित्वं मे प्रियोसि नहि प्रियं कोऽपि वञ्चयतीति भावः।

हे अर्जुन! तुम मद्विषयक सङ्कल्पयुक्त भक्त हो जाओ। मेरी पूजा शील हो ओ, मुझ को प्रणाम करो, एसा करने पर मुझ को प्राप्त करोगे। मैं तुम्हारे निकट शपथ कर कहता हूँ। एवं प्रतिज्ञा करता हूँ-इस प्रकार मेरा भजन करने से तुम अवश्य ही मुझ को प्राप्त करोगे। इस विषय में मैं प्रतिभू रहा। अर्थात् मैं जामिन हूँ। कारण, तुम मेरा अतीव प्रिय हो, तुम जिस किसी साधन के द्वारा क्यों न च लो, मुझ को प्राप्त कर न सकोगे। भुक्ति, मुक्ति, अर्थात् स्वरूपानन्दास्वादन में डूब जाओगे। मेरी कथा तुम्हारे मानस पटल में उदित नहीं होगी। मैं तुम को प्रीति करता हूँ। तुम को पाने के निमित्त मेरी अतीव आकाङ्क्षा भी है। यदि तुम इस भक्ति पथ को अवलम्बन करते हो तो, मेरे सहित तुम्हारा नित्यसम्बन्ध सर्वदा ही हृदय में जाग्रत होगा। मुझ प्राप्त कर तुम सुखी होगे। और मैं भी तुम को प्राप्त कर सुखी बनूँगी। यह विशुद्ध भक्ति पथ ही मेरा प्रापक है। श्रीमद् भागवत एवं श्रीमद् भगवद् गीता शास्त्र में अन्वय मुख से भक्ति की अवश्य कर्त्तव्यता निर्दिष्ट हुई है। व्यतिरेक-अर्थात् निषेध मुख से भी श्रीमद् भागवत के ११।५। २-३ में भक्ति की अवश्य कर्त्तव्यता वर्णित है।

"मुख बाहूरुपादेभ्यः पुरुषस्या श्रमैः सह।
चत्वारो जज्ञिरे वर्णा गुर्णविप्रादयः पृथक्॥२९७॥

(गी० ७।१५) "न मां दुष्कृतिनो मूढ़ाः" इत्यादि,

"यावज्जनो भजति न भुवि विष्णुभक्ति,--वार्त्तासुधारसमशेषरसैकसारम् ।
तावज्जरामरणजन्मशताभिघात-,दुःखानि तानि लभते बहु-देहजानि ।।"२९९।।

---

च एषां पुरुषं साक्षादात्मप्रभवमीश्वरम् ।
न भजन्त्यवजानन्ति स्थानाद् भ्रष्टाः पतन्त्यधः ।।"२९८।।

क्रमसन्दर्भ—मुखबाह्विति । विराट् तदन्तर्य्यामिणोरभेदोक्तिः । मुख बाहूरुपादेभ्यः' इत्युपलक्षण-मेवाश्रमेषु । यथा वक्ष्यते, (भा० ११।१०।१४) 'गृहाश्रमो जघनतो ब्रह्मचर्य्यं हृदो मम । वक्षः स्थलाद् वनेवासः सन्न्यासः शिरसि स्थितः । इति । न भजन्त्यतएवावजानन्तीत्यर्थः । यद्वा, केचिदश्रुत्वा न भजन्ति, केचिच्छ्रुत्वापि न भजन्ति चेदवजानन्त्येवेत्यर्थः । स्थानाद् वर्णाश्रमरूपात् स्वाश्रमाद् भ्रष्टाः सन्तः क्रमादधोधो गच्छन्तीत्यर्थः ।

श्री चमस योगीन्द्र निमिमहाराज को कहे थे—हे राजन् ! द्वितीय पुरुष के मुख, बाहु, उरु एवं चरण युगल से क्रमशः सत्त्वगुण से ब्राह्मण, रजः सत्त्व गुण से क्षत्रिय, रज स्तमो गुण से वैश्य, केवल तमो गुण से शूद्र—इन चारों वर्णो की उत्पत्ति हुई है । पुरुष के जघन देश से गार्हस्थ्य, हृदय से ब्रह्मचर्य्य, वक्षः स्थल से वान प्रस्थ, एवं मस्तक से सन्न्यास आश्रम की उत्पत्ति हुई है । चार वर्ण एवं आश्रमों के मध्य में जो व्यक्ति निज जनक स्वरूप परम पुरुष परमेश्वर का भजन नहीं करते हैं, वे उनकी अवज्ञा करते हैं, एवं निजाधिकृत स्थान से भ्रष्ट होकर निपतित होते हैं । श्रीमद् भागवत के उक्त श्लोक द्वय के द्वारा श्रीभगवद् अभजन कारी के प्रति दोष प्रदर्शन पूर्वक भगवद् भजन की अवश्यकर्त्तव्यता प्रदर्शित हुई है । श्रीभगवद् गीता ७।१५ में भी उक्त है—

"न मां दुष्कृतिनो मूढ़ाः प्रपद्यन्ते नराधमाः ।
माययापहृत ज्ञाना आसुरं भावमाश्रिताः ।।"

टीका—ननु तर्हि पण्डिता अपि केचित् किमिति त्वां न प्रपद्यन्ते । तत्र ये पण्डितास्ते मा प्रपद्यन्त एव, पण्डित मानिन एव न मां प्रपद्यन्त इत्याह न मामिति । दुष्कृतिनः दुष्टाश्च ते कृतिनः पण्डिताश्चेति ते कुपण्डिता इत्यर्थः । ते च चतुर्विधाः । एके मूढ़ाः पशु तुल्याः कर्म्मिणः । यदुक्तं "नूनं दैवेन निहता ये चाच्युत कथा सुधां । हित्वा शृण्वन्त्यसद् गाथाः पुरीषमिव विड्भुज । इति । मुकुन्दं को वै न सेवेत विना नरेतर-मिति च । अपरे नराधमाः, कञ्चित् कालं भक्तिमत्त्वेन प्राप्तनरत्वाः, अप्यन्ते फल प्राप्तौ न साधनोपयोगः, इति मत्वा स्वेच्छयैव भक्तित्यागिणः । स्व कर्त्तृक भक्ति त्याग लक्षणमेव तेषामधमत्वमिति भावः । अपरे शास्त्राध्ययनाध्यापनादि मत्त्वेऽपि मायया अपहृतं ज्ञानं येषां ते । वैकुण्ठ विराजिनी नारायण मूर्त्तिरेवसार्वकालिकी भक्तिप्राप्या, न तु कृष्णा रामादि मूर्त्ति मानुषीति मन्यमानाइत्यर्थः । यद्वक्ष्यते—"अव जानन्ति मां मूढ़ा मानुषीं तनुमाश्रितमिति । ते खलु मां प्रपद्यमाना अपि नमां प्रपद्यन्ते, इति भावः । अपरे असुरं भावमाश्रिताः । आसुराः जरासन्धादयः । मद् विग्रहं लक्ष्यी कृत्यशरैं विद्धयन्ति । तथैव दृश्यत्वानि हेतुमत् कुतर्कै मंद्विग्रहं वैकुण्ठस्थमपि खण्डयन्त्येव नतु प्रपद्यन्त इत्यर्थ ।"

हे अर्जुन ! दुष्कृति मूढ़, माया के द्वारा विलुप्त बुद्धि असुर भावापन्न नराधम गण मेरी शरण ग्रहण नहीं करते हैं । इस श्लोक में भी भगवदभजन कारी के प्रति प्रचुर तर निन्दा प्रदर्शन के द्वारा भगवद् भजन की अवश्य कर्त्तव्यता दर्शायी गई है । पद्म पुराण में भी लिखित है—

"यावज्जनो भजति न भुवि विष्णुभक्ति,
वार्त्ता सुधारसमशेष रसैक सारम् ।

इति पद्मपुराणे च। कुत्र कुत्रोपपद्यते ? सर्व्वत्र-शास्त्र-कर्त्तृ-देश-करण-द्रव्य-क्रिया-कार्य्य-फलेषु समस्तेष्वेव। तत्र (१) समस्तशास्त्रेषु यथा स्कान्दे-ब्रह्मनारद-संवादे—

"संसारेऽस्मिन् महाघोरे जन्म-मृत्यु-समाकुले। पूजनं वासुदेवस्य तारकं वादिभिः स्मृतम् ॥"३००॥

(क) तत्राप्यन्वयेन यथा, (भा० २।२।३४) "भगवान् ब्रह्म कार्त्स्न्ये त्रिरन्वीक्ष्य मनीषया" इत्यादि, तथा स्कान्दे, पाद्मे च—

"आलोडच सर्व्वशास्त्राणि विचार्य्य च पुनः पुनः। इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥"३०१॥

---

तावज्जरा मरण जन्मशतानि घात,
दुःखानि तानि लभन्ते बहु देह जानि ॥"२९९॥

इस पृथिवी में जो व्यक्ति जन्म ग्रहण करके अशेष आस्वादन की मुख्य सार वस्तु विष्णु भक्ति कथा सुधारस सेवा नहीं करता है, वह बहु बहु जन्म देह धारण करके जरा मरण जन्म शत दुःख भोग करता है। पद्म पुराण में भी इस प्रकार वचन उपलब्ध है।

इस प्रकार दोष कीर्त्तन के द्वारा भगवद् भक्ति की अवश्य कर्त्तव्यता प्रतिपादित हुई है। अन्वय अर्थात् विधिमुख से, व्यतिरेक—अर्थात् निषेध मुख से भगवद् भक्ति का जो संवाद सर्वत्र उपलब्ध है, उस को स्थापन कर कहते हैं, जो पदार्थ सर्वत्र सर्वदा उपलब्ध होता है, श्रीगुरु चरण के समीप में उस पदार्थ की शिक्षा करना अवश्य कर्त्तव्य है। किस वस्तु की उपलब्धि सर्वत्र होती है, व्याख्या के द्वारा उस को कहते हैं। जो सर्व शास्त्र में, सर्वकर्त्ता में, सर्व देश में, सर्व करण में सर्व द्रव्य में, सर्व क्रिया में, सर्व कार्य्य में, सर्व फल में वह ही जिज्ञास्य है। उसका प्रदर्शन क्रम पूर्वक करते हैं।

(१) समस्त शास्त्र में भगवद् भक्ति की अवश्य कर्त्तव्यता का वर्णन स्कन्द पुराण के ब्रह्म नारद संवाद में इस प्रकार है—

"संसारेऽस्मिन् महाघोरे जन्म मृत्यु समाकुले।
पूजनंवासु देवस्य तारकं वादिभिः स्मृतम् ॥"३००॥

समस्त शास्त्र कर्त्ता ऋषिगण कहते हैं—इस महाघोर जन्ममृत्यु समाकुल संसार में श्रीवासुदेव का पूजन ही संसार दुःख से उद्धार कारी है। इस कथन से समस्त शास्त्रों में श्रीभगवद् भजन की ही अवश्य कर्त्तव्यता प्रतिपादित है, उसका प्रदर्शन हुआ।

(क) अन्वय मुख से समस्त शास्त्रों में जो भगवद् भजन की अवश्यकर्त्तव्यता प्रति पादित हुई है, उसका वर्णन श्रीमद् भागवत के २।२।३४ में श्रीशुकदेव--महाराज परीक्षित् को कहे हैं—

"भगवान् ब्रह्म कार्त्स्न्येनत्रिरन्वीक्ष्य मनीषया ."
तदध्यवस्यन् कूटस्थो रतिरात्मन् यतो भवेत् ॥"

भगवान् ब्रह्मा, एकाग्रचित्त से तीन वार समग्र वेद विचार करके यही स्थिर किये थे—जिस से भगवान् श्रीहरि में प्रीति का उदय होता है, समग्र वेद अवश्यकर्त्तव्य रूप से उस को ही कहते हैं। इस से निखिल वेदों का मुख अभिधेय श्रीभगवद् भक्ति ही है। इस को दर्शाया गया है। स्कन्द पुराण में एवं पद्म पुराण में उस प्रकार वर्णन है—

'आलोडच सर्वशास्त्राणि विचार्य्य च पुनः पुनः।
इदमेकं सुनिष्पन्नं ध्येयो नारायणो सदा ॥३०१॥

(ख) व्यतिरेकेण, यथा गारुड़े—"पारङ्गतोऽपि वेदानाम्" इत्यादिकं सर्व्वत्रावगन्तव्यम्। तच्चान्ते दर्शयिष्यते।

(२) सर्व्वकर्त्तृषु, यथा (भा० २।७।४६)—

"ते वै विदन्त्यतितरन्ति च देवमायां
स्त्री-शुद्र-हून-शवरा अपि पापजीवाः।
यद्यद्भुतक्रमपरायणशीलशिक्षा-
स्तिर्य्यग्जना अपि किमु श्रुतधारणा ये॥"३०२॥ इति।

गारुड़े च—

"कीटपक्षिमृगाणाञ्च हरौ सन्न्यस्तचेतसाम्। ऊद्र्ध्वामेव गतिं मन्ये किं पुनर्ज्ञानिनां नृणाम्॥"३०३॥

---

समस्त शास्त्रों को आलोड़न करके एवं पुनः पुनः विचार करके मुख्य रूप से यही सुनिष्पन्न हुआ कि—"सर्वदा ही श्रीनारायण का ध्यान करना चाहिये (३०१)

(ख) व्यतिरेक अर्थात् निषेध मुख से भी गरुड़ पुराण में भगवद् भजन का अवश्य कर्त्तव्यत्व प्रतिपादित हुआ है। "पारं गतोऽपि वेदानाम्" सर्ववेदविद् होकर भी जो व्यक्ति जनार्दन श्रीहरि में भक्ति हीन है, उसका समस्त अध्ययन पण्डश्रम मात्र होता है। इसका प्रदर्शन अग्रिम ग्रन्थ में होगा।

(२) सम्प्रति समस्त व्यक्ति ही भक्ति के अधिकारी हैं, इसका उदाहरण प्रस्तुत हो रहा है—श्रीमद् भागवत के २।७।४६ में उक्त है—

"ते वै विदन्त्यतितरन्ति च देवमायां
स्त्री—शूद्र-हून-शवरा अपि पाप जीवाः।
यद्यद्भुत क्रमपरायण शीलशिक्षा—
स्तिर्य्यग्जना अपि किमु श्रुतधारण ये॥"३०२॥

स्त्री, शूद्र, हून, शवर, यहाँतक कि जिस की उत्पत्ति पाप से ही हुई है, वेश्यापुत्र प्रभृति। वे भी यदि यदि अद्भुत पराक्रम श्रीहरि जिनके एकमात्र आश्रय हैं, उन भगवद् भक्तवृन्द के स्वभाव का अनुशीलन यदि करते हैं, तो, वे भी श्रीभगवत्तत्त्व को जान सकते हैं, वे भी माया को अतिक्रम करने में समर्थ होंगे। अधिक क्या है? हंस, गज, शुक, शारी, सर्प प्रभृति भी भक्त के सहित यदि भक्तवृन्द के आचरण का अनुसरण करते हैं तो वे भी भगवत्तत्त्व जानने में सक्षम होंगे। एवं माया से उत्तीर्ण हो सकते हैं। वैसी स्थिति होने पर जो सब मनुष्य, श्रीसद् गुरु के मुख से श्रीभगवन्नाम जप प्रभृति श्रवण करके श्रवण कीर्त्तन स्मरणादि करते हैं, वे सब भगवत्तत्त्व को जानेंगे, एवं माया से उत्तीर्ण हो जायेंगे। इस विषय में संशय का अवसर कहाँ है? इस से समस्त व्यक्ति ही भगवद् भजन में अधिकारी हैं, यह दर्शाया गया है। (३०१) गरुड़ पुराण में भी उक्त है—

"कीटपक्षिमृगाणाञ्च हरौ सन्न्यस्तचेतसाम्।
ऊद्र्ध्वामेव गतिं मन्ये किं पुनर्ज्ञानिनां नृणाम्॥"३०३

श्रीभगवान् श्रीहरि में अर्पित चित्त होने से कीट पक्षी, मृग प्रभृति की भी ऊद्र्ध्वगति होती है, अतएव ज्ञानि मानव वृन्द की जो ऊद्र्ध्वगति होगी इस में संशयित होने का क्या है? ३०३

अत्रैव साचारे दुराचारे, ज्ञानिनि अज्ञानिनि, विरक्ते रागिणि, मुमुक्षौ मुक्ते, भक्त्यसिद्धे भक्तिसिद्धे, तस्मिन् भगवत्पार्षदतां प्राप्ते, तस्मिन्नित्यपार्षदे च सामान्येन दर्शनादपि सार्व्वत्रिकता। तत्र (क) साचारे दुराचारे च, यथा (गी० ९।३०)—

"अपि चेत् सुदुराचारो भजते मामनन्यभाक्।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः॥"३०५॥ इति।

सदाचारस्तु किं वक्तव्य इत्यपेरर्थः।

(ख) ज्ञानिनि अज्ञानिनि च (भा० ११।११।३३)-- "ज्ञात्वाज्ञात्वाथ ये वै माम्" इत्यादि, (बृहन्नारदीये) "हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः" इत्यादि।

---

यहाँ साचार— दुराचार में ज्ञानी अज्ञानी में, रागी विरक्त में, मुमुक्षु— मुक्त में भक्ति सिद्ध, भक्ति असिद्ध में, भगवत् पार्षदता प्राप्त एवं नित्य पार्षद प्रभृति में साधारण रूप से भक्ति की व्याप्ति दृष्ट होने के कारण भक्ति का सर्वत्र अधिकार है।

(क) तन्मध्य में सदाचार निष्ठा में एवं दुराचार में जो भक्ति का अधिकार है— उसका दृष्टान्त गीता ९।३० में है—

"अपि चेत् सुदुराचारो भजते मामनन्यभाक्।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः॥"३०४॥

दुष्कर्मरत सुदुराचारी व्यक्ति भी अन्य देवताका भजन न करके मेरा भजन करता है तो उसको साधु मानना चाहिये। यह मेरा साक्षात् आदेश है। कारण, वह दुराचार होने पर भी हृदय में अनन्य भक्ति के द्वारा मेरे प्रति श्रद्धालु हुआ है। अति सत्वर वह धर्म जीवन को प्राप्त करेगा, एवं निरन्तर अनुतप्त होने के कारण दुष्कृति से निष्कृति लाभ किया है, कारण, वह अनन्य भक्ति में विश्वस्त हुआ है। उसका विनाश कभी नहीं होगा। यदि असदाचारी व्यक्ति भी श्रीहरि भक्ति अनुष्ठान में अधिकारी होता है तो, सदाचार सम्पन्न व्यक्ति जो भक्ति में अधिकारी होगा, इस में कहना ही क्या है? "अपिचेत् सुदुराचारः" श्लोकस्थ 'अपि' शब्द द्वारा उक्तार्थ प्रकाशित हुआ है।

(ख) ज्ञानी एवं अज्ञानी—उभय ही भक्ति अनुष्ठान के अधिकारी हैं। इसका दृष्टान्त भा० ११।११। ३३ में है—

"ज्ञात्वा ज्ञात्वाथ ये वै मां यावान् यश्चास्मि यादृशः।
भजन्त्यनन्य भावेन ते मे भक्ततमा मताः॥"

हे उद्धव! देश कालादि द्वारा अपरिच्छिन्न सर्वात्मा सच्चिदानन्द स्वरूप मुझको जानकर हो, अथवा न जानकर ही हो, केवल श्रीव्रजराज नन्दन रूप में निज अभीप्सित दास्यादि भाव के मध्य में एकतर भाव से मेरा भजन करते हैं। किन्तु कभी भी अन्यभाव से भजन नहीं करते हैं। उनको मैं भक्ततम मानता हूँ। इस से ज्ञानी एवं अज्ञानी उभय व्यक्ति में ही भक्ति की वृत्ति दृष्ट होती है। बृहन्नारदीय पुराण में भी वर्णित है—

"हरि र्हरति पापानि दुष्टचित्तैरपिस्मृतः॥"

अर्थात् दुष्ट चित्त सम्पन्न जनगण भी यदि श्रीहरि का स्मरण करते हैं, तो, श्रीहरि, उनके समस्त पापों को विनष्ट कर देते हैं। इत्यादि प्रमाण से सुव्यक्त होता है कि— पापी जन का भी श्रीहरि भक्ति में अधिकार है।

(ग) विरक्ते रागिणि च (भा० ११।१४।१८)—

"बाध्यमानोऽपि मद्भक्तो विषयैरजितेन्द्रियः।
प्रायः प्रगल्भया भक्तचा विषयैर्नाभिभुयते ॥"३०५॥

अबाध्यमानस्तु सुतरां नाभिभूयत इत्यपेरर्थः।

(घ) मुमुक्षौ मुक्ते च (भा० १।२।२६)—"मुमुक्षवो घोररूपान्" इत्यादि, (भा० १।७।१०) आत्मारामाश्च मुनयः" इत्यादि च।

(ङ) भक्तयसिद्धे भक्तिसिद्धे च (भा० ६।१।१५)—

"केचित् केवलया भक्तचा वासुदेवपरायणाः।
अघं धुन्वन्ति कार्त्स्न्येन नीहारमिव भास्करः ॥"३०६॥ इति,

(भा० ११।२।५३) "न चलति भगवत् पदारविन्दा,--ल्लवनिमिषार्द्धमपि स वैष्णवाग्रच" इति च।

---

अधिकार है। विषय विरक्त एवं विषयासक्त—उभय विध व्यक्ति ही जो भक्ति अनुष्ठान में अधिकारी हैं, उसका उल्लेख श्रीमद् भागवत

(ग) (११।११।३३) में सुस्पष्ट रूप से है—

"बाध्यमानोऽपि मद्भक्तो विषयैरजितेन्द्रियः।
प्रायः प्रगल्भया भक्तचा विषयैर्नाभिभूयते ॥"३०५॥

हे उद्धव! मेराभक्त, भक्ति के प्रारम्भ में विषय समूह के द्वारा आकृष्यमाण होकर भी प्रायशः समर्था भक्ति के प्रभाव से विषय के द्वारा अभिभूत नहीं होता है। इस से विषयासक्त जन में भी भक्ति का अधिकार प्रदर्शित हुआ है। अतएव विषय विरक्त व्यक्ति, भक्ति के प्रभाव से जो विषय के द्वारा अभिभूत नहीं होता है, यह कहना बाहुल्य मात्र है। बाध्यमानोऽपि" श्लोकस्थ 'अपि' शब्द के द्वारा यह अर्थ ध्वनित हुआ है।

(घ) मुमुक्षु एवं मुक्त पुरुष में भी जो भक्ति की वृत्ति है—उसका वर्णन इस श्लोक में है—(भा० १।२।२६)

"मुमुक्षवो घोररूपां हित्वा भूतपतीनथ।
नारायणकलाः शान्ता भजन्ति ह्यनसूयवः ॥"

अविद्या बन्धन से जो लोक मुक्त होने के इच्छुक हैं, वे सब मुमुक्षु मानवगण, घोरमूर्त्ति भैरवादि को परित्याग पूर्वक शान्त मूर्त्ति श्रीनारायण की विभूति समूह की उपासना करते रहते हैं। किन्तु देवतान्तर के प्रति दोष दृष्टि नहीं करते हैं। इस में मुमुक्षु जन में भक्ति की वृत्ति प्रदर्शित हुई है। (भा० १।७।१०) में मुक्त जनों में भक्ति की वृत्ति का वर्णन है—

"आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे।
कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतो गुणोहरिः ॥"

हे शौनक! अहङ्कार रूप चित् जड ग्रन्थि से निर्म्मुक्त होकर आत्मारामामुनिगण भी श्रीहरि के गुणों से आकृष्ट होकर श्रीहरि में अहैतुकी भक्ति करते रहते हैं। इस श्लोक के द्वारा मुक्त पुरुष में भी भक्ति की वृत्ति प्रदर्शित हुई है।

(च) भगवत्पार्षदतां प्राप्ते (भा० ६।४।६७)

"मत्सेवया प्रतीतं ते सालोक्यादिचतुष्टयम् ।
नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत् कालविप्लुतम् ।।" ३०७।। इति ।

नित्यपार्षदे च (भा० ३।१५।२२) —

"वापीषु विद्रुमतटास्वमलामृताप्सु, प्रेष्यान्विता निजवने तुलसीभिरीशम् ।
अभ्यर्च्चती स्वलकमुन्नसमीक्ष्य वक्त्र-,मुच्छेषितं भगवतेत्यमताङ्ग यच्छ्रीः ।।" ३०८।।

(३) सर्व्वेषु वर्षेषु भुवनेषु ब्रह्माण्डेषु "तेषां वहिश्च तैस्तैः श्रीभगवदुपासनायाः क्रियमाणायाः श्रीभागवतादिषु प्रसिद्धिः सिद्धैवेति सर्व्वदेशोदाहरणं ज्ञेयम् ।

---

(ङ) (भा० ६।८।१५) में भक्ति में असिद्ध, अर्थात् अजातरति एवं भक्ति साधन द्वारा सिद्ध, अर्थात् जिन्होंने श्रीहरिचरणों में रति लाभ किया है। उभयविध व्यक्ति में भक्ति की वृत्ति की विद्यमानता का दृष्टान्त है।

"केचित् केवलया भक्त्या वासुदेव परायणाः ।
अघं धुन्वन्ति कार्तस्न्येन नीहारमिव भास्करः ।।" ३०६।।

श्रीशुक देव महाराज परीक्षित् को कहे हैं—हे राजन् ! वासुदेवपरायण कतिपय महानुभवगण, केवला भक्ति के प्रभाव से, भास्कर जिस प्रकार कुज्झटिका विनष्ट करते हैं, उस प्रकाव पाप राशि को विनष्ट करते हैं। इस से अजातरति भक्त में भक्ति की वृत्ति प्रदर्शित हुई। (भा० ११।२।५३) में भी उसका वर्णन है—

"त्रिभुवनविभवहेतवे ऽप्यकुण्ठ स्मृतिरजितात्मसुरादिभिर्विमृग्यात् ।
न चलति भगवत् पदारविन्दाल्लव निमिषार्द्धमपि स वैष्णवाग्र्यः ।।"

श्री हवियोगीन्द्र श्रीनिमिमहाराज को कहे थे—

हे राजन् ! त्रिभुवन वैभव प्राप्ति की सम्भावना होने पर भी देवगण कर्त्तृक अन्वेषणीय श्रीभगवत् चरणार विन्द से जिस का चित्त लव निमेषार्द्ध काल के निमित्त भी कभी भी विचलित नहीं होता है, वह वैष्णवों के मध्य के श्रेष्ठ है। इस से जात रति भक्त में भक्ति की वृत्ति प्रदर्शित हुई है।

(च) भगवत् पार्षद देह प्राप्त भक्त में भी भक्ति की वृत्ति दृष्ट होती है। (भा० ६।४।६७) में उक्त है—

"मत् सेवया प्रतीतं ते सालोक्यादिचतुष्टयम् ।
नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत् कालविप्लुतम् ।।" ३०७।।

श्रीवैकुण्ठ नाथ श्रीदुर्वासा को कहे थे—हे मुनिवर ! मेरे निष्काम भक्तवृन्द, भक्ति के प्रभाव से सालोक्य, सार्ष्टि, सामीप्य, सारूप्य नामक मुक्ति चतुष्टय स्वयं उपस्थित होने पर भी वे सब, उक्त मुक्ति चतुष्टय के मध्य में एक के प्रति इच्छा प्रकाश नहीं करते हैं। कारण, वे सब मेरी सेवानन्द में विभोर होने के कारण, मुक्ति समूह के प्रति अति तुच्छ बुद्धि करते हैं। जब वे परमानन्द स्वरूप मुक्ति के प्रति आकाङ्क्षा नहीं करते हैं—तब काल द्वारा विनष्ट पदार्थ के प्रति उनकी आकाङ्क्षा नहीं होगी, यह कथन बाहुल्य मात्र है। इस से प्राप्त भगवत् पार्षद देह भक्त में भक्ति वृत्ति दर्शायी गई है।

भा० ३।१५।२२ में नित्य पार्षदों में भक्ति वृत्ति का वर्णन है।

"वापीषु विद्रुमतटास्वमलामृताप्सु, प्रेष्यान्विता निजवने तुलसीभिरीशम्
अभ्यर्च्चती स्वलकमुन्नसमीक्ष्य वक्त्र--,मुच्छेषितं भगवतेत्यमताङ्ग यच्छ्रीः ।।" ३०८।।

(४) सर्वेषु करणेषु, यथा—

"मानसेनोपचारेण परिचर्य्य हरिं मुदा । परेऽवाङ्मनसागम्यं तं साक्षात् प्रतिपेदिरे ॥"३०९॥ इत्यादि ।

एवम्भूत-वचने हि, अस्तु तावद्बहिरिन्द्रियेण, मनसा वचसापि तत्सिद्धिप्रसिद्धिः ।

(५) सर्व्वद्रव्येषु, यथा (भा० १०।८१।४) —

"पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।

तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥"३१० ॥ इति ।

(६) सर्व्वक्रियासु, यथा (भा० ११।२।१२) —

"श्रुतोऽनुपठितो ध्यात आदृतो वानुमोदितः ।

सद्यः पुनाति सद्धर्म्मो देवविश्वद्रुहोऽपि हि ॥"३११॥ इति,

---

श्रीब्रह्मा देवगण को कहे थे । हे देववृन्द ! जहाँ सरोवर के जल अति स्वच्छ एवं अमृत तुल्य स्वादु है, एवं तट समूह प्रवाल मय हैं, लक्ष्मी उस तट के निकटवर्त्ती निज कानन में उपवेशन कर दासी गण के सहित तुलसी के द्वारा श्रीविष्णु की पूजा करती रहती हैं। अर्च्चन समय में सरोवर के सलित में निज सुकुञ्चित सुन्दर कुन्तलावली एवं उत्कृष्ट नासिका युक्त श्रीमुख को अवलोकन करके लक्ष्मी यह मानती है कि—श्रीनारायण उनके मुख चुम्बन कर रहे हैं, लक्ष्मी के हृदय में इस प्रकार भावोदय होता है । इस से नित्य सिद्ध परिकर लक्ष्मी में श्रीविष्णु भक्ति का अवस्थान प्रमाणित होता है ।

(३) समस्त वर्ष में सकल भुवन में, समस्त ब्रह्माण्ड में एवं वर्ष, भुवन, ब्रह्माण्ड के बाहर जो अष्ट आवरण हैं, उक्त आवरण समूह में भी अवस्थित जन गण जो श्रीभगवान् की उपासना करते रहते हैं, उस का वर्णन श्रीमद् भागवत प्रभृति शास्त्र में सुस्पष्ट रूप में है । इस के द्वारा सर्व देश में श्रीहरि भक्ति वृत्ति का उदाहरण जानना होगा ।

(४) समस्त करणों भक्ति वृत्ति का उदाहरण प्रस्तुत करते हैं—

"मानसोपचारेण परिचर्य्य हरिं मुदा ।

परे वाङ्मनसागम्यं तं साक्षात् प्रतिपेदिरे ॥३०९॥

आनन्द पूर्वक मानस उपचार से श्रीहरि का अर्च्चन करके महाभाग्यवान् मानववृन्द अवाङ्मनस गोचर उन श्री हरि का साक्षात् कार प्राप्त किये हैं । इत्यादि प्रमाण के द्वारा अन्तः करण से श्रीभगवद् उपासना का संवाद प्राप्त होता है । इस प्रकार वहिरिन्द्रिय के द्वारा अर्थात् मनसा वचसा भी श्रीहरि की उपासना करने से श्री हरि भक्ति सिद्ध होती है, वह प्रसिद्ध है ।

(५) समस्त द्रव्य में भगवत् भक्ति सिद्धि की उपयोगिता का उदाहरण यह है । (भा० १०।८१।४)

"पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।

तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥"३१०॥

श्रीकृष्ण श्रीदाम विप्र को कहे थे—आपने क्या उपायन घर से लाया है । भक्त के द्वारा अर्पित स्वल्प उपायन भी मेरे पक्ष में भूरि होते हैं । भक्ति पूर्वक मुझ को जो व्यक्ति पत्र, पुष्प, फल, जल प्रदान करता है, भक्त प्रदत्त उस वस्तु को मैं भोजन करता हूँ ।

(६) समस्त क्रिया में भगवद् भक्ति की जो वृत्ति है उस का दृष्टान्त भा० ११।२।१२ में इस प्रकार है—

"श्रुतोऽनुपठितो ध्यात आदृतो वानुमोदितः ।

सद्यः पुनाति सद्धर्म्मो देवविश्वद्रुहोऽपि हि ॥"३११॥

(गी० ६।२१)—

"यत् करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम् ॥"

एवं भक्त्याभासेषु भक्त्याभासापराधेष्वपि अजामिल-मूषिकादयो दृष्टान्ता गम्याः।

(७) सर्व्वेषु कार्य्येषु, यथा (स्कान्दे)

"यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु। न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥३१३॥

(८) सर्व्व-फलेषु यथा (भा० २।३।१०)--"अकामः सर्व्वकामो वा मोक्षकाम उदारधीः"

---

देवर्षि नारद श्रीवसुदेव को कहे थे- हे वसुदेव! हे वसुदेव! भागवत धर्म श्रवण करने पर श्रीगुरु मुख से श्रवण करने के पश्चात् स्वयं पाठ करने से, ध्यान करने से, आदर करने पर, अथवा भागवत धर्मानुष्ठानकारी की प्रशंसा करने से तत् क्षणात् विश्वद्रोही मानव देहावेश से मुक्त होकर श्रीभगवच्चरणों में आविष्ट हो सकता है।

टीका—आहृतः—आस्तिक्येन गृहीतः। अनुमोदितः परैः क्रियमाणः संस्तुतः। सद्धर्म्मो भागवत धर्म्मः। देव हे वसुदेवेत्यर्थः। यद्वा, देवेभ्यो विश्वस्मै च द्रुह्यन्ति ये तानपि।

श्रीमद् भगवद् गीता में भी समस्त क्रिया में भगवद् भक्ति वृत्ति का संवाद उल्लिखित है।

(गी० ६।२७) "यत् करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम् ॥"३१२॥

हे अर्जुन! तुम जो कुछ करते हो, जो भोग करते हो, जो हवन करते हो। जो तपस्या करते हो, उन सब को मुझ में अर्पण करो, अर्थात् समस्त मुझ को अर्पण करके ही करो। इस प्रकार भक्त्याभास— अर्थात् जो भक्ति नहीं है, वस्तुत अपराध जनक है, इस प्रकार भक्ति अनुष्ठान जनित फल प्राप्ति, अजामिल मूषिक प्रभृति में सुस्पष्ट है। आसन्न मृत्यु समय में निज पुत्र को नारायण नाम से आह्वान करके अजामिल भक्ति प्राप्य वैकुण्ठ धाम में प्रस्थान किया। एक मूषिक—श्रीभगवन्मन्दिर में निवास करता था, प्रत्यह श्रीभगवान् की आरती की वत्ती को मुँह से जो जाता था, एकदिन लेजाते समय वत्ती जलगई, उस से उस की मृत्यु हो गई। उस से वह सुन्दरी कन्या होकर जन्म ग्रहण किया, एवं राजमहिषी होकर बहुल दीप मालिका उत्सव के द्वारा श्रीभगवदाराधना करके भगवद् धाम में प्रस्थान किया।

यहाँ भगवद् दीप वर्त्तिका अप हरण जनित अपराध उस प्रकार हो, किन्तु अपहरण समय में प्रज्वलित वर्त्तिका के द्वारा भगवद् आरात्रिक का अनुकरण होने से दीप प्रदान रूप भक्ति से भगवान् सन्तुष्ट होकर उस को भक्ति लभ्य निज धाम प्रदान किये थे।

(७) जगत् में जो सब वैदिक वा तान्त्रिक अनुष्ठान है, तत् समुदाय के मध्य में भी भक्ति की वृत्ति परिदृष्ट होती है, उदाहरण—स्कन्द पुराण में लिखित है—

"यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥"३१३

जिनका स्मरण करने से एवं नाम ग्रहण करने से तप, यज्ञ, एवं क्रिया प्रभृति तत्क्षणात् निश्चित् रूप से पूर्ण होते हैं उन अच्युत को नमस्कार करता हूँ।

इत्यादि, तथा, (भा० ४।३१।१४) "यथा तरोर्मूलनिषेचनेन" इत्यादि-वाक्येन हरिपरिचर्य्यायां क्रियमाणायां सर्व्वेषामन्येषामपि देवादीनामुपासना स्वत एव सिध्यतीत्यतोऽपि सार्व्वत्रिकता, यथोक्तं स्कान्दे श्रीब्रह्मनारद-संवादे—

अर्च्चिते देवदेवेशे शङ्खचक्रगदाधरे। अर्च्चिताः सर्व्वदेवाः स्युर्यतः सर्व्वगतो हरिः॥" ३१४॥

एवं यो भक्तिं करोति, यद्गवादिकं भगवते दीयते, येन द्वारभूतेन भक्तिः क्रियते, यस्मै श्रीभगवत् प्रीणनार्थं दीयते, यस्माद्गवादिकात् पयआदिकमादाय भगवते निवेद्यते, यस्मिन् देशादौ कुले वा कश्चिद्भक्तिमनुतिष्ठति, तेषामपि कृतार्थत्वं पुराणेषु दृश्यत इति 'कारक' गतापि, एवं सार्व्वत्रिकत्वं साधितम्।

---

इस श्लोक में सर्वविध अनुष्ठान श्रीहरि स्मृति के द्वारा एवं श्रीहरि नाम ग्रहण के द्वारा सम्पूर्ण होते होते हैं, – इसका उल्लेख है।

(८) इह लोक एवं पर लोक में जितने प्रकार फल प्राप्ति की सम्भावना है, उक्त समस्त प्रकार फल प्राप्ति में ही भगवद् भक्ति की अनुवृत्ति है। उसका उदाहरण भा० २।३।१० में है—

"अकामः सर्वकामो वा मोक्षकाम उदारधीः।
तीव्रेण भक्ति योगेन यजेत पुरुषं परम्॥

उदार बुद्धि विशिष्ट एवं भगवद् भक्तगण यदि किसी प्रकार काम्य फल प्रार्थी होते हैं, अथवा नहीं होते हैं, किं वा यदि समस्त विषयों में कामना विशिष्ट होते हैं, तो उन के पक्ष में तीव्र भक्ति योग के द्वारा परम पुरुष भगवान् की आराधना करनी चाहिये। इस से प्रतिपन्न हुआ कि--समस्त फल प्राप्ति में भगवद् भक्ति की सुस्पष्ट अनुवृत्ति है। उस प्रकार भा० ४।३१।१४ में उक्त है—

"यथा तरोर्मूल निषेचनेन तृप्यन्ति तत स्कन्धभुजोपशाखाः।
प्राणोपहाराच्च यथेन्द्रियाणां तथैव सर्वार्हणमच्युतेज्या॥"

जिस प्रकार वृक्ष मूल में जल सेचन करने पर वृक्ष के स्कन्ध शाखा उपशाखा, फल पुष्प प्रभृति सुतृप्त होते हैं, जिस प्रकार भोजन करने पर समस्त इन्द्रिय तृप्त होती हैं, उस प्रकार अच्युत का अर्च्चन करने पर समस्त देवता की अर्च्चना निष्पन्न होती है। इस वाक्य के द्वारा प्रतिपादित हुआ कि—श्रीहरि की पूजा करने से अन्यान्य समस्त देवता की पूजा स्वतः ही निष्पन्न होती है। तज्जन्य श्रीहरि भक्ति की सार्वत्रिकता प्रदर्शित हुई है। स्कन्द पुराण के ब्रह्म नारद संवाद में उस प्रकार ही वर्णित है।

"अर्च्चिते देवदेवेशे शङ्खचक्रगदाधरे।
अर्च्चिताः सर्व्वदेवाः स्युर्यतः सर्व्वगतो हरिः॥"३१४॥

शङ्ख, चक्र, गदाधर देवदेव अर्च्चित होने पर समस्त देवता ही अर्च्चित होते हैं। कारण श्रीहरि, सर्व देव मय हैं।

इस प्रकार जो भक्ति करते हैं,जो जो द्रव्य प्रभृति भगवान् को अर्पण करते हैं,जिस व्यक्ति को अवलम्बन कर भक्ति का अनुष्ठान किया जाता है, श्रीभगवत् प्रीत्यर्थ जिस को जो कुछ दान किया किया जाता है। एवं जिस देश में जिस कुल में यदि कोई व्यक्ति भक्ति का अनुष्ठान करते हैं-सभी व्यक्ति कृतार्थ होते हैं,

इस का विवरण समस्त पुराणों में दृष्ट होता है। इस रीति से समस्त कारको में ही भक्ति की अनुवृत्ति साधित हुई है। अर्थात् भक्ति की सार्वत्रिकता साधित हुई है।

सदातनत्वमाह,— सर्व्वदेति । तत्र (१) सर्गादौ यथा (भा० ११।१४।३) –"कालेन नष्टा प्रलये वाणीयं वेदसंज्ञिता" इत्यादि, सर्ग-मध्ये बहुत्रैव ।

(२) चतुर्विध-प्रलयेष्वपि (भा० ३।७।३७) "तत्रेमं क उपासीरन् क उ स्विदनुशेरते" इति विदुर-प्रश्ने ।

(३) सर्व्वेषु युगेषु, (भा० १२।३।५२) –

"कृते यद्धचायतो विष्णुं त्रेतायां यजतो मखैः ।
द्वापरे परिचर्य्यायां कलौ तद्धरिकीर्त्तनात् ।।"३१५।। इति ।

किं बहूना ?—

"सा हानिस्तन्महच्छिद्रं सः मोहः स च विभ्रमः । यन्मुहूर्त्तं क्षणं वापि वासुदेवो न चिन्त्यते ।।"३१६।।

---

भक्ति, पूर्वकाल में थी, एवं वर्त्तमान काल में भी है, एवं भविष्यत में भी रहेगी अर्थात् सर्वदा है, अतः भक्ति का सदातनत्व का वर्णन करते हैं ।

(१) उस में सृष्टि के आदि में भक्ति की स्थिति का वर्णन भा० ११।१४।३ में है—

"कालेन नष्टा प्रलये वाणीयं वेदसंज्ञिता ।
मयादौ ब्रह्मणे प्रोक्ता धर्म्मो यस्यां मदात्मकः ।।"

जिस में मदीय धर्म्म उक्त है, वह वेद वाक्य कालक्रम से लुप्त हो गया था । पश्चात् मैंने सृष्टि के पूर्व में ब्रह्मा को कहा था । "धर्मो यस्यां मदात्मकः" कहने पर समझने में आता है कि--प्रलय के पूर्व में भी भागवत धर्म विद्यमान था ।

सृष्टि के मध्य वर्त्ती काल में भक्ति की विद्यमानता की वार्त्ता अनेकस्थलों में घोषित है ।

(२) चतुर्विध प्रलय में भी भगवद् भक्ति की वार्त्ता श्रुत है— भा० ३।७।२७ में विदुर के प्रश्न से प्रकाशित है— "तत्रेमं क उपासीरन् क उ स्विदनुशेरते"

प्रलय काल में परमेश्वर शयन करने पर निद्रित उन परमेश्वर की उपासना कौन करते हैं, और कौन उन में लीन होकर रहते हैं । विदुर के प्रश्न से परिस्फुट होता है कि प्रलय सम काल में भी भगवद् भक्ति विद्यमान रहती है ।

(३) सम्प्रति, सत्य, त्रेता, द्वापर, एवं कलि युग में जो हरिभक्ति विद्यमान है, उसका वर्णन भा० १२।३।५२ में कहा है—

"कृते यद्धचायतो विष्णुं त्रेतायां यजतो मखैः ।
द्वापरे परिचर्य्यायां कलौ तद्धरिकीर्त्तनात् ।।"३१५।।

सत्य युग में भगवद् ध्यान कारी को जो फल मिलता है, त्रेता युग में यज्ञ द्वारा भगवान् की आराधना करने से जो फल होता है, द्वापर युग में अर्च्चन के द्वारा जो फल होता है । कलियुग में केवल श्री हरिकीर्त्तन के द्वारा ही उक्त समस्त फल लाभ होता है । इस श्लोक के द्वारा प्रतिपादित हुआ है कि भगवद् भक्ति के अङ्ग समूहका अनुष्ठान समस्त युगों में होता रहता है । प्रस्तुत श्लोक के द्वारा वह संवाद सूचित हुआ है ।

अधिक कहना ही क्या है ? विष्णु पुराण में लिखित है—

"सा हानि स्तन्महच्छिद्रं स मोहः स च विभ्रमः ।
यन्मुहूर्त्तं क्षणं वापि वासुदेवो न चिन्त्यते ।।"३१६।।

इत्यपि वैष्णवे ।

(४) सर्व्वावस्थास्वपि,—(क) गर्भे श्रीनारद-कारितश्रवणेन श्रीप्रह्लादे प्रसिद्धम्, (ख) बाल्ये श्रीध्रुवादिषु, (ग) यौवने श्रीमदम्बरीषादिषु, (घ) वार्द्धक्ये धृतराष्ट्रादिषु, (ङ) मरणे अजामिलादिषु, (च) स्वर्गितायां श्रीचित्रकेत्वादिषु, (छ) नारकितायामपि—

"यथा यथा हरेर्नाम कीर्त्तयन्ति स्म नारकाः । तथा तथा हरौ भक्तिमुद्वहन्तो दिवं ययुः ॥"३१७॥

इति श्रीनृसिंहपुरणात् । अतएवोक्तं दुर्व्वाससा (भा० ९।४।६२):-"मुच्येत यन्नाम्नुचदिते नारकोऽपि" इति, तथा, (भा० २।१।११)—

"एतन्निर्विद्यमानानामिच्छतामकुतोभयम् ।
योगिनां नृप निर्णीतं हरेर्नामानुकीर्त्तनम् ॥"३१८॥

---

वही हानि है, वही महाच्छिद्र है, वही मोह, है, एवं वही विभ्रम है, जो मुहूर्त्त अथवा क्षण वासुदेव चिन्ताव्यतीत अति वाहित होता है । इस श्लोक में सर्वक्षण ही श्रीहरिस्मरण की व्यवस्था दी गई है ।

(४) जीववृन्द की जितनी अवस्था होती हैं, समस्त अवस्था में ही भगवद् भक्ति की विद्यमानता हो सकती है, उस को कहते हैं—

(क) गर्भा वस्था में श्रीनारद, प्रह्लाद को हरि कथा श्रवण कराये थे । इस से गर्भ में भी हरिभक्ति की अनुवृत्ति दृष्ट होती है ।

(ख) बाल्यकाल में ध्रुव प्रभृति में हरि भक्ति की विद्यमानता दृष्ट होती है ।

(ग) यौवन में अम्बरीष महाराज में हरिभक्ति दृष्ट होती है ।

(घ) वार्द्धक्य में धृतराष्ट्र प्रभृति में हरिभक्ति देखी जाती है ।

(ङ) मृत्यु समय में अजामिल प्रभृति में हरिभक्ति दृष्ट होती है ।

(च) स्वर्ग प्राप्त होकर भी श्रीचित्रकेतु प्रभृति में श्रीहरिभक्ति का अनुष्ठान दृष्ट होता है ।

(छ) नारकी अवस्था में भी श्रीहरिभक्ति की अनुवृत्ति शास्त्र में दृष्ट होती हैं । श्रीनृसिंह पुराण में उक्त है—

"यथा यथा हरेर्नामकीर्त्तयन्ति स्म नारकाः ।
तथा तथा हरौ भक्तिमुद्वहन्तो दिवं ययुः ॥३१७॥

नारकी जीव गण, जैसे जैसे श्रीहरि नाम कीर्त्तन करते हैं, तैसे तैसे वे सब श्रीहरि भक्ति को अवलम्बन करके स्वर्ग में प्रस्थान किये थे । यहाँ 'स्वर्ग' का अर्थ—'वैकुण्ठ' है ।

अतएव श्रीदुर्व्वासा ने भा० ९।४।६४ में कहा भी है—

"मुच्येत यन्नाम्न्युदिते नारकोऽपि"

जिनके नाम ग्रहण करने से नारकी जीव भी मुक्त होते हैं । उस प्रकार भा० २।१।११ में वर्णित है

"एतन्निर्विद्यमानानामिच्छतामकुतोभयम् ।
योगिनां नृप निर्णीतं हरेर्नामानुकीर्त्तनम् ॥"३१८॥

हे राजन् ! श्रीहरि के नामानुकीर्त्तन फलाकाङ्क्षि पुरुषों का एवं तत् फलों का साधन है, मुमुक्षु वृन्द का वह मोक्ष साधन है । ज्ञानिवृन्द का यही ज्ञान का फल है । अतएव साधक सिद्ध—सब के पक्ष में

इत्यत्रापि ।

अथ तत्र तत्र व्यतिरेकोदाहरणानि च कियन्ति दर्श्यन्ते—

"किं वेदैः किमु शास्त्रैर्वा किंवा तीर्थनिषेवणैः । विष्णुभक्तिविहीनानां किं तपोभिः किमध्वरैः ॥"३१९॥

"किं तस्य बहुभिः शास्त्रैः किं तपोभिः किमध्वरैः । वाजपेयसहस्रैर्वा भक्तिर्यस्य जनार्द्दने ॥"३२०॥

इति वृहन्नारदीय-पाद्म-वचनादीनि, तथा (भा० २।४।१७, ५।१९।२३, १०।५९।४१)

"तपस्विनो दानपरा यशस्विनो, मनस्विनो मन्त्रविदः सुमङ्गलाः ।
क्षेमं न विन्दन्ति विना यदर्पणं, तस्मै सुभद्रश्रवसे नमो नमः ॥३२१॥
न यत्र वैकुण्ठकथासुधापगा, न साधवो भागवतास्तदाश्रयाः ।
न यत्र यज्ञेशमखा महोत्सवाः, सुरेश-लोकोऽपि न वै स सेव्यताम् ॥३२२॥

---

श्रीहरि नाम सङ्कीर्त्तन की अपेक्षा अपर कोई साधन एवं परम मङ्गल कर नहीं है।

यहाँपर विषयी, मोक्षार्थी एवं ज्ञानी अवस्था में भी भगवद् भक्ति अनुर्वात्तत होती है, यह दिखाया गया है।

श्रीहरि भक्ति की, सर्वत्र सर्वदा अनुवृत्ति है, उसका वर्णन निषेध मुख से भी करते हैं। वृहन्नारदीय एवं पद्म पुराण में लिखित है—

'किं वेदैः किमु शास्त्रैर्वा किंवा तीर्थनिषेवणैः ।
विष्णुभक्तिविहीनानां किं तपोभिः किमध्वरैः ॥' ३१९॥

"किं तस्य बहुभिः शास्त्रैः किं तपोभिः किमध्वरैः ।
वाजपेयसहस्रैर्वा भक्तिर्यस्य जनार्द्दने ॥"३२०॥

विष्णु भक्ति विहीन व्यक्ति के पक्ष में वेदादि शास्त्र अध्ययन, तीर्थ सेवा, तपस्या एवं यज्ञानुष्ठान से कुछ भी फल नहीं होता है। अर्थात् श्रीहरि भक्ति परायण व्यक्ति के पक्ष में ही उक्त सब फलद हैं। इस से वेदादि शास्त्र ज्ञानादि में श्रीहरि भक्ति की अनुवृत्ति की कथा अनुमोदित हुई है। अन्वय मुख से भी कहते हैं—जिनकी भक्ति श्री जनार्दन में है,उनके पक्ष में बहु शास्त्र ज्ञान का क्या प्रयोजन है ? तपस्या वा यज्ञका अनुष्ठान भी उन के पक्ष में निष्प्रयोजन है। सहस्र सहस्र वाजपेय यज्ञ से भी उनका क्या प्रयोजन सिद्ध होगा ? यहाँ सर्वत्र श्रीहरि भक्ति का अनुवर्त्तन पूर्ववत् वर्णित हुआ है। उस प्रकार श्रीमद् भागवत में भी वर्णित हैं - (भा० २।४।१७)

"तपस्विनो दानपरा यशस्विनो, मनस्विनो मन्त्रविदः सुमङ्गलाः ।
क्षेमं न विन्दन्ति विना यदर्पणं, तस्मै सुभद्रश्रवसे नमो नमः ॥३२१॥

श्रीशुकदेव कहते हैं—हे नाथ ! आप के चरणों में भक्ति हीन जन गण के निखिल साधन व्यर्थ होते हैं। ज्ञानि गण, दान पर कर्म्मिगण, यशोलिप्सु कर्म्मिगण, अर्थात् अश्वमेधादि यज्ञानुष्ठानकारि व्यक्तिगण, मनस्वियोगिगण, मन्त्रजपकारिगण, सदाचार निष्ठ गण,—निज निज अनुष्ठित साधनों का अर्पण आप को न करने से फल लाभ नहीं करते हैं, एवं विविध विघ्न से उपद्रुत होते रहते हैं। उन सुमङ्गल यशाः--अर्थात् जिन के कथा श्रवण कीर्त्तनादि से ही सर्वाभीष्ट लाभ होता है। एवं सर्वानर्थ निवृत्ति होती है, आप के चरणों में मेरा भूयोभूयः प्रणाम ।

'द्यूतसदनम्' इत्यत्र च वासक्रियैव विवक्षिता, 'मन्निकेतम्' इत्यत्रापि, किन्तु भगवत् सम्बन्ध-माहात्म्येन निकेतस्यापि निर्गुणत्वं भवेत्, स्पर्शमणि-न्यायेन । तादृशत्वन्तु तादृशभक्ति-चक्षुर्भिरेवोपलब्धव्यम् (ब्राह्मे)--"दिविष्ठास्तत्र पश्यन्ति सर्व्वानेव चतुर्भुजान्" इतिवत् । एवमेव टीका च–"भगवन्निकेतन्तु साक्षात्तदाविर्भावान्निर्गुणं स्थानम्" इत्येषा ॥

१३६ । एवं वासमात्रस्य तादृशत्वमुक्त्वा सर्व्वासामेव तत्क्रियाणामाह (भा० ११।२५।२६)

(१३६) "सात्त्विकः कारकोऽसङ्गी रागान्धो राजसः स्मृतः ।
तामसः स्मृतिविभ्रष्टो निर्गुणो मदपाश्रयः ॥" ३७४॥

अत्र च क्रियायामेव तात्पर्य्यम्, न तदाश्रये द्रव्ये, सात्त्विक-कारकस्य शरीरादिकं हि गुणत्रयपरिणतमेव ॥

१३७ । तदेवं क्रियामात्रस्य तादृशत्वमुक्त्वा, तत्प्रवृत्तिहेतुभूतायाः श्रद्धाया अप्याह,

---

समष्टि रूप वन,- रजस्तमः प्रधान है, किन्तु उस में रहने की प्रवृत्ति सात्त्विक है, वन में रहते रहते सत्त्व गुण की वृद्धि होती है, तज्जन्य 'वनेवासः' को सात्त्विक कहा गया है । इस प्रकार ग्राम एवं द्यूतसदन को भी जानना होगा । श्री भगवन् मन्दिर किन्तु स्वरूपतः ही निर्गुण है, मन्दिर में निवास करने से सत्वगुण की वृद्धि होती है, तज्जन्य निर्गुण है, ऐसा नहीं हैं । किन्तु श्रीभगवन् मन्दिर का निर्गुणत्व की उपलब्धि, भगवत् सेवा परायण भक्त वृन्द के नेत्र से ही होती है । जिस प्रकार क्षेत्र माहात्म्य प्रसङ्ग में कथित है,

"दिविष्ठास्त्र पश्यन्ति सर्वानेव चतुर्भुजान् ।"

अर्थात् देवगण—क्षेत्र वासिगण को चतुर्भुज रूप में देखते हैं, किन्तु साधारण लोक नहीं देखते हैं । श्रीभगवन्मन्दिर के सम्बन्ध में भी उस प्रकार जानना होगा । श्रीधर स्वामिपाद कृत टीका का यही अभिप्राय है ।

"भगवन् निकेतन्तु साक्षात् तदाविर्भावात् निर्गुणं स्थानम्".

अर्थात् श्रीभगवान् के निकेतन किन्तु साक्षात् उनका आविर्भाव हेतु निर्गुणस्थान है ॥१३५॥

१३६ । इस प्रकार श्रीभगवन् मन्दिर में केवल मात्र रहने को ही निर्गुण कहकर भगवत् सम्बन्धि निखिल क्रिया का ही निर्गुणत्व वर्णन स्वयं श्रीकृष्ण करते हैं (भा० ११।२५।२६)

(१३६) "सात्त्विकः कारकोऽसङ्गी रागान्धो राजसः स्मृतः ।
तामसः स्मृतिविभ्रष्टो निर्गुणो मदपाश्रयः ॥" ३७४॥

टीका—कारकः कर्त्ता, असङ्गी—अनासक्तः । रागान्धोऽत्यभिनिवेशवान् । स्मृतिविभ्रष्टो अनुसन्धान शून्यः मदपाश्रयो मदेक शरण" स हि निरहङ्कारत्वात् निर्गुणः ॥

अनासक्त भाव से जो व्यक्ति कर्म करता है, वह कर्त्ता सात्त्विक है, जो कर्त्ता, फललाभ हेतु अभिनिविष्ट है, वह राजस है, जो व्यक्ति, अनुसन्धान रहित होकर कार्य्य करता है । वह तामस है । जो व्यक्ति, एकमात्र मुझ में शरणागत है, वह निर्गुण है । यहाँ समझने की बात है कि–क्रिया में ही सात्त्विक, राजसिक, तामसिक सत्त्व का तात्पर्य्य है, किन्तु क्रियाश्रय द्रव्य में नहीं । कारण, जो सात्त्विक कार्य्य करता है, उस का शरीर सत्त्व, रजः तमोगुण का ही विकार है ॥१३६॥

(भा० ११।२५।२७)—

(१३७) "सात्त्विक्याध्यात्मिकी श्रद्धा कर्म्मश्रद्धा तु राजसी ।
तामस्यधर्म्मे या श्रद्धा मत्सेवायान्तु निर्गुणा ।।"३७५।।

अधर्म्मोऽपरधर्म्मः, अन्यत् पूर्व्ववत् ।। श्रीभगवान् ।।

१३८ । अत आह, (भा० ६।२।२४)—

(१३८) "धर्म्मं भागवतं शुद्धं त्रैवेद्यञ्च गुणाश्रयम्" इति ।

"शुद्धं निर्गुणम्, त्रैवेद्यं वेदत्रयप्रतिपाद्यं गुणाश्रयम्" इति टीका च । वेद-शब्देनात्र कर्म्मकाण्डमेवोच्यते, (गी ९।२१)--"एवं त्रयीधर्म्मम्" इत्यादेः ।। श्रीशुकः ।

१३९ । अतएव भक्तेः श्रीभगवत्स्वरूपशक्तित्वबोधकं स्वयंप्रकाशत्वमाह, (भा० ५।१४।४५)

(१३९) "यज्ञाय धर्म्मपतये विधिनैपुणाय, योगाय सांख्यशिरसे प्रकृतीश्वराय ।
नारायणाय हरये नम इत्युदारं, हास्यन् मृगत्वमपि यः समुदाजहार ।।"३७६

---

१३७ । उक्त रीति से भगवत् सम्बन्धि क्रिया मात्र का निर्गुणत्व कहकर भगवत् सम्बन्धीय क्रिया करने की हेतु रूपा श्रद्धा का निर्गुण कहते हैं—(भा० ११।२५।२०)

(१३७) "सात्त्विक्याध्यात्मिकी श्रद्धा कर्म्मश्रद्धा तु राजसी ।
तामस्यधर्म्मे या श्रद्धा मत् सेवायान्तु निर्गुणा ।।"३७५।

टीका—अधर्म्मे धर्म इति या श्रद्धा सा तामसी ।

अध्यात्म तत्त्व विषय में जो श्रद्धा—वह सात्त्विकी है, कर्मानुष्ठान में जो श्रद्धा,–वह राजसी है, अपर धर्म में जो श्रद्धा है, वह तामसी है, किन्तु मेरी सेवाहेतु जो श्रद्धा है, वह निर्गुणा है । अधर्म शब्द का अर्थ-अपर धर्म है । श्रीभगवान् कहे थे—।१३७।

१३८ । अतएव श्रीशुकदेवने (भा० ६।२।२४ ) में कहा है—

(१३८) "धर्म्मं भागवतं शुद्धं त्रैवेद्यञ्च गुणाश्रयम् " इति ।

टीका—त्रैवेद्यं—वेद त्रय प्रतिपाद्यं गुणाश्रयं यमदूतानां धर्मं कृष्णदूतानाञ्च भागवतं भगवत् प्रणीतं, शुद्धं, निर्गुणं धर्ममाकर्ण्येति योज्यम् । भक्तिमानासीदित्युत्तरस्यानुषङ्गः ।

हे राजन् ! भगवत् प्रणीत धर्म शुद्ध है, अर्थात् मायागुण संस्पर्श रहित होने के कारण निर्गुण है । श्रीविष्णु दूत गण के द्वारा वर्णित भागवत धर्म को अजामिल सुने थे, एवं यमदूतगण कर्त्तृक वर्णित वेदत्रय प्रतिपाद्य त्रिगुणमय धर्म्म को भी सुने थे । तत् पश्चात् श्रीविष्णु दूतगण द्वारा वर्णित भागवत धर्म श्रवण करके तत् क्षणात् श्रीभगवान् में भक्तिमान् भी हुये थे । यहाँ वेद शब्द से कर्म्मकाण्ड ही लक्षित हुआ है । कारण गीता में ९।२१ में उक्त है—

"एवं त्रयी धर्ममनुप्रपन्ना गतागतं काम कामा लभन्ते" ।।

प्रवक्ता श्रीशुक हैं—१३८।।

१३९ । अतएव भक्ति, जो भगवान् की स्वरूप शक्ति है, उसका वर्णन स्वयं प्रकाश धर्म के द्वारा सुस्पष्ट रूप से भा० ५।१४ ५४ में किया गया है ।

य आर्षभेयो भरतः, मरणसमये तत्रापि मृगशरीरे, तद्वचनजन्मात्यन्तासम्भवात् स्वप्रकाशत्वमेव तस्याः कीर्त्तनलक्षणाया भक्तेः सिद्धयति । एवं गजेन्द्रेऽपि ज्ञेयम् ।। श्रीशुकः ।।

१४० । परमसुखरूपत्वञ्च दृश्यते । तत्र साधनदशायाम् (भा० १।२।२२) "अतो वै कवयो नित्यं भक्ति परमया मुदा" इत्यादौ, (भा० ११।१८।१२) "कर्म्मण्यस्मिन्ननाश्वासे" इत्यादौ च तद्रूपत्वाभिव्यक्ति-र्दर्शितैव । सिद्धदशायान्तु सुतरां तत् प्रकटीभवति, यथा (भा० ६।४।३७)

---

(१३) 'यज्ञाय धर्म्मपतये विधिनैपुणाय, योगाय सांख्यशिरसे प्रकृतीश्वराय ।
नारायणाय हरये नम इत्युदारं, हास्यन् मृगत्वमपि यः समुदाजहार ।।" ३७६।।

टीका—तस्य सेवानुरागमाह । यज्ञायेति । यज्ञ रूपाय धर्मपतये यज्ञादि फलदात्रे । विधौ नैपुण्यं यस्यतस्मै धर्मानुष्ठात्रे योगोऽष्टाङ्गस्तस्मै । सांख्यं ज्ञानं तच्छिरः, प्रधान फलं यस्तु तस्मै योगाय । प्रकृतीश्वराय-मायानियन्त्रे, अतएव नारं, जीव समूह, अरणमाश्रयो यस्य तस्मै सर्व जीव नियन्त्रे । एवं कर्म ज्ञान देवता काण्डैः प्रति पादिताय हरये नम इति उदारम् उच्चैः यः सम्यगुच्चारितवान् । मृगत्वं, मृगदेहमपि हास्यन् त्यक्ष्यन् । य एवम्भूतः तस्य तदुचितमिति वा, तस्यानुवर्त्म नार्हतीति वा सम्बन्धः ।

महा भागवत भरत, द्वितीय जन्म में मृगदेह प्राप्त किये थे, किन्तु पूर्व जन्म के संस्कार हेतु मृगदेह त्याग के समय उन्होंने उच्चैःश्वर से कहा था—'जो यज्ञ पुरुष, यज्ञादि फल दाता, यथाविधि धर्मानुष्ठान कारी, अष्टाङ्ग योग स्वरूप, आत्मानात्म विवेक के मूल स्वरूप, मायानियन्ता, सर्व जीवान्तर्यामी हैं, मैं उन श्रीहरि को नमस्कार करता हूँ । अर्थात् जो कर्म, ज्ञान, एवं देवता काण्ड के प्रति पाद्य हैं, उन श्रीहरि को मैं आत्म समर्पण कर रहा हूँ । इस प्रकार कहते कहते मृगदेह को परित्याग किये थे । इस प्रकरण में ज्ञातव्य यह है कि भरत—मृत्यु यन्त्रणाग्रस्त थे, उस में भी मृग शरीर में श्रीभगवन् नामात्मक वाक्यस्फूर्त्ति होना अत्यन्त असम्भव है । कारण, पशु पक्षी प्रभृति शरीर में जो रसना है, उस में ध्वनि उच्चारित होने की ही सम्भावना है, किन्तु हरि, कृष्ण प्रभृति वर्णोच्चारण की सामर्थ्य नहीं है । एक ओर मृत्यु समय दूसरी ओर मृगशरीर, उस में भी भरत ने सुस्पष्ट रूप से श्रीभगवन्नामोच्चारण किया था । इस से सुस्पष्ट प्रतीत होता है कि, वह कीर्त्तन लक्षणा भक्ति, रसना की अपेक्षा नहीं करती--किन्तु स्वयं प्रकाशित होती है । श्रीहरि भक्ति, यदि स्वरूप शक्ति की वृत्ति स्वरूपा नहीं होती तो जिह्वा प्रभृति की अपेक्षा न करके स्वयं प्रकाशित नहीं हो सकती । इस प्रकार गजराज के विषय में भी जानना होगा ।

प्रवक्ता श्रीशुक हैं ।। १३९।।

१४० । भगवद् भक्ति- परम सुख स्वरूपिणी है, उसका वर्णन श्रीमद्भागवत में है । उसके मध्य में साधन अवस्था में भक्ति का परम सुख रूपत्वका वर्णन भा० १।२।२२ में है—

"अतो वै कवयो नित्यं भक्ति परमया मुदा ।
वासुदेवे भगवति कुर्वन्त्यात्मप्रसादनीम् ।।"

टीका—तत्र सदाचारं दर्शयन् उपसंहरति अत इति । आत्म प्रसादनीं मनः शोधनीं वासुदेवे भक्ति कुर्वन्तीति भजनीय विशेषोदर्शितः ।

अतएव सुविज्ञ जन, परम आनन्द के सहित भगवान् श्रीवासुदेव में नित्य मनः शोधनी भक्ति करते रहते हैं । इस श्लोक में 'परमया मुदा' इस प्रकार उल्लेख के द्वारा साधन दशा में भी भक्ति अनुष्ठान में परमानन्द धर्म प्रदर्शित हुआ है । उस प्रकार भा० ११।१८।१२ में वर्णित है—

(१४०) "मत्सेवया प्रतीतन्ते सालोक्यादिचतुष्टयम् ।
नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत् कालविप्लुतम् ।।"३७७।।

अत्रान्यस्य कालविप्लुतत्वमिति सेवायास्तदभावप्राप्तै निर्गुणत्वं सिद्धम् । अत्र कालविप्लुतं सालोक्यादिभ्यो ऽतिशये तु किमुतेति ।। श्रीविष्णुर्दुर्व्वाससम् ।।

१४१ । श्रीभगवद्विषयक-रतिप्रदत्वमुक्तम् (भा० ७।७।३३) "एवं निर्जितषड़्वर्गैः क्रियते भक्तिरीश्वरे" इत्यादिना । यत्तु (भा० ५।६।१८) "अस्त्वेवमङ्ग भजतां भगवान् मुकुन्दो, मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगम्" इत्युक्तचापि तद्रतिर्न प्राप्यत इति शङ्क्यते, तत्

---

"कर्म्मण्यस्मिन्ननाश्वासे धूमधूम्रात्मनां भवान्
आपाययति गोविन्द पादपद्मासवं मधु ।।"

टीका—किञ्च अस्मिन् कर्मणि सत्रे अनाश्वासे अविश्वसनीये । वैगुण्यं बाहुल्येन फलति निश्चया भावात् । धूमेन धूम्रः विवर्ण आत्मा शरीरं येषां तान् अस्मान् । कर्म्मणि षष्ठी । आसवं मकरन्दं, मधु मधुरम् ।

श्रीशौनकादि ऋषि गण कहे थे—हे सूत ! विघ्न बाहुल्य वशतः फललाभ में अविश्वसनीय कर्मात्मक यज्ञीय धूम से हमारे शरीर एवं मन विवर्ण हो गये हैं । इस प्रकार हम सब को आप श्रीगोविन्द चरण कमल मधु आस्वादन कराकर आप्यायित कर रहे हैं । श्रीसुत एवं श्रीशौनकादि की उक्ति से श्रीभगवद् भक्ति की आनन्द स्वरूपता सुस्पष्ट रूप से प्रकाशित हुई है । साधन दशा में ही जब भक्ति आनन्द स्वरूपिणी है, तब सिद्ध दशा में भक्ति परि पूर्ण आनन्द स्वरूपिणी होकर सुतरां प्रकटित होती है । उस का वर्णन भा० ९।४।६७ में है—

(१४०) "मत् सेवया प्रतीतन्ते सालोक्यादिचतुष्टयम् ।
नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत् कालविप्लुतम् ।।"३७७।।

श्रीवैकुण्ठ नाथ—दुर्वासा को कहे थे—मुनिवर ! निष्काम भक्त वृन्द मेरी सेवा के द्वारा अनायास प्राप्त सालोक्यादि चतुर्विध मुक्ति को नहीं चाहते हैं, कारण वे सब सेवानन्द से ही परिपूर्ण काम होते हैं, सुतरां काल कवलीकृत स्वर्गादि सुख लिप्सु वे सब होते ही नहीं । स्वर्गादि सुख को काल विनाशी प्रति पादन करने के कारण—श्रीभगवत् सेवा रूपा भक्ति जो काल विनाशी नहीं है, वह सुस्पष्ट हुआ । अतएव भक्ति का निर्गुणत्व भी प्रति पादित हुआ । श्रीविष्णु दुर्वासा को कहे थे ।।१४०।।

१४१ । श्रीभगवद् विषयक प्रीति प्रदत्व का वर्णन भा० ७।७।३३ में है—

"एवं निर्जित षड़्वर्गैः क्रियते भक्तिरीश्वरे ।
वासुदेवे भगवति मया संलभ्यते रतिः ।।

टीका—निर्जितः षण्णां काम क्रोध लोभ मोह मद मात्सर्य्याणाम् इन्द्रियाणां वा वर्गो यैः ।

श्रीप्रह्लाद, असुर बालक वृन्द को कहे थे—हे भ्रातृ वृन्द ! श्रीगुरु शुश्रूषा प्रभृति भक्त्यङ्ग का अनुष्ठान करते करते काम क्रोधादि षड़्वर्ग अथवा इन्द्रियादि के वेग पराजित होते हैं । अनन्तर लय विक्षेप शून्य हृदय में भगवद् भक्ति का अनुष्ठान करते करते भगवान् परमेश्वर वासुदेव में रतिलाभ होता है । इत्यादि वर्णनों से प्रति पादित होता है कि—साधन भक्ति में श्रीभगवान् में रति प्रदान सामर्थ्य प्रचुर परिमाण में है । किन्तु भा० ५।६।१८ में उक्त है—

"राजन् पतिर्गुरुरलं भवतां यदूनां दैवं प्रियः कुलपतिः क्वचकिङ्करो वः ।

खल्वविवेकादेव, कर्हिचिदिति भक्तियोगाख्य-तद्रतिपुरुषार्थतायां शैथिल्ये सत्येवेत्यर्थलाभात्, कर्हिचिदपीत्यनुक्तत्वात्, "असाकल्ये तु चिच्चनौ" इत्यमरकोषाच्च। तथापि यद्यपि चिरमावृत्तिः स्यात्तदा रतिमपि ददाति, (भा० ५।१९।२६) "सत्यं दिशत्यर्थितमर्थितो नृणाम्"

---

अस्त्वेवमङ्ग भजतां भगवान् मुकुन्दोमुक्ति ददाति कर्हिचित् स्म न भक्तियोगम् ॥

टीका—"ननु भगवतोऽतिसुलभत्वदर्शनात् मोक्षस्य चाति दुर्ल्लभत्वादियमतिस्तुति रेवेत्याशङ्क्याह। हे राजन्! भवतां पाण्डवानां यदूनाञ्च पतिः पालकः, गुरुः, उपदेष्टा, दैवमुपास्यः, प्रियः सुहृत् कुलस्य पतिर्नियन्ता, किं बहुना क्वच कदाचिद् दौत्यादिषु वः पाण्डवानां किङ्करोऽपि आज्ञानुवर्त्ती। अस्तु नामैवं तथापि अन्येषां नित्यं भजतामपि मुक्ति ददाति, नतु कदाचिदपि स प्रेमभक्ति योगम् ॥"

भगवान् मुकुन्द, निज पाद पद्म में भक्ति अनुष्ठानकारी भक्त वृन्द को मुक्ति दान करते हैं, किन्तु कभी भी "प्रेम भक्ति" दान नहीं करते हैं। इस उक्ति से प्रतीत होता कि,—साधन भक्ति के द्वारा भगवत् चरणों में रति लाभ नहीं होता है। इस प्रकार संशय उपस्थित होता है। किन्तु वह संशय, अविचार से ही उत्पन्न होता है, कारण, विचार करने से दृष्ट होता है कि—मूल श्लोक में "कर्हिचित्" पद का उल्लेख हुआ है, किन्तु कर्हिचिदपि पद का प्रयोग नहीं हुआ है। कारण—असाकल्य अर्थ में ही 'चित् एवं चन' प्रत्यय होता है। कारण, अमरकोष में उक्त है—"असाकल्येचित्चनौ" अर्थात् असर्वकाल, असर्वदेश, असर्व पात्र विशेष में ही 'चित् एवं चन' प्रत्यय का प्रयोग होता है। मूल में उल्लिखित 'कर्हिचित्' पद का अर्थ है,—कभी दान नहीं करते हैं। किन्तु यदि कहते कि—'कर्हिचिदपि' तब अर्थ होता कभी भी नहीं देते। इस से उक्त आशङ्का होती। मूल श्लोकस्थ 'कर्हिचित्' पद से कभी दान नहीं करते हैं, इस प्रकार अर्थ होता है। कर्हिचित् शब्द के सहित अपि शब्द का प्रयोग न होने से समझना होगा कि—जिस रति का नाम भक्तियोग है, वह भक्ति योग नामक भगवद् रति ही परम पुरुषार्थ है। जब तक उस पुरुषार्थ में अर्थात् श्रीभगवान् में रति ही मूल प्रयोजन है, इस प्रकार निश्चयकर उस की प्राप्ति हेतु आकुल आकाङ्क्षा नहीं होती है, तब तक ही श्रीभगवान् भक्ति साधक को निज चरणार विन्द में प्रीति वा रति प्रदान नहीं करत हैं। 'कर्हिचित्' पद से यही अर्थ होता है।

"तेषां सतत युक्तानां भजतां प्रीति पूर्वकम्।
ददामि बुद्धि योगं तं येन मामुपयान्ति ते ॥"

इस रीति से प्रीति पूर्वक सतत भजन यदि होता है, तो भगवान् रति भी प्रदान करते हैं,। 'कर्हिचित्' पदका सार्थक उदाहरण भा० ५।१९।२६ में है—

"सत्यं दिशत्यर्थितो नृणां नैवार्थदो यत् पुनरर्थिता यतः।
स्वयं विधत्ते भजतामनिच्छतामिच्छापिधानं निजपादपल्लवम् ॥"

टीका—तत्रापि निष्कामाः कृतार्था इत्याहुः सत्यमिति। प्रार्थितः सन् अर्थितं ददातीति सत्यं तथापि परमार्थदो न भवत्येव। यद् यस्मात् यतो दत्तादनन्तरं पुनरपि अर्थिता भवति। ननु नार्थितश्चेत्, किमपि न दद्यात्, इत्याशङ्क्याहुः। अनिच्छतां निष्कामाणान्तु इच्छानां पिधानमाच्छादकं, सर्वकामपरिपूरकं निजपाद पल्लवं स्वयमेव सम्पादयति ॥

प्रार्थित वस्तु प्रदान करने से पुनर्वार अतृप्त होकर प्राप्त करने की वासना होती है, अतः एक समय वैसा ही करते हैं, जिस से प्रार्थना करने का विवर सुरभित हो जाय, अर्थात् विषय तृष्णा उद्गम के विवर में निज पद पल्लव ही दे देते हैं, जिससे समस्त तृष्णा श्रीचरणारविन्द की दास्य गन्ध से सुरभित

इत्यादेरिति च कर्हिचित्--पदेन गम्यते ।

भक्तविषयक- भगवत् प्रीत्येकहेतुत्वमप्युदाहृतम् (भा० ७।७।५१) "नालं द्विजत्वं देवत्वम्" इत्यादि । तथा चाह (भा० ७।९।९) —

(१४१) "मन्ये धनाभिजनरूपतपःश्रुतौज,-स्तेजः प्रभाव-बलपौरुषबुद्धियोगाः ।
नाराधनाय हि भवन्ति परस्य पुंसो, भक्त्या तुतोष भगवान् गजयूथपाय ।।'३७८

अभिजनः सत्कुलजन्म, बुद्धिर्ज्ञानियोगः, योगोऽष्टाङ्गः ।। प्रह्लादः श्रीनृसिंहदेवम् ।।

१४२ । ननु निरतिशय-नित्यानन्दरूपस्य भगवतः कथं तया सुखमुत्पद्येत, निरतिशयत्व-नित्यत्वयोर्विरोधात् ? उच्यते,--शास्त्रे खलु निरतिशयानन्दत्वं नित्यत्वञ्च भगवतः श्रूयते,

---

होकर ही निकलें । कभी विषय प्रदान करते हैं, कभी तो सोचते हैं, विषय प्रार्थना से इसे मुक्त कर दूँ, अतः स्व चरण पद्म प्रदान जिस प्रकार करते हैं, उस प्रकार कभी भक्ति योग भी देते हैं, अर्थात् जब तक योग्य नहीं होता, अर्थात् विषय लोलुपता रहती है, तब तक भक्ति योग नहीं देते हैं । भक्ति प्राप्ति हेतु महती उत्कण्ठा होने से सत्वर प्रदान करते हैं ।

एकमात्र भक्ति योग के द्वारा ही भगवान् सन्तुष्ट होते हैं उसका उदाहरण भा० ७।७।५१ में है—

"नालं द्विजत्वं देवत्वमृषित्वं वासुरात्मजाः ।
प्रीणनाय मुकुन्दस्य न वृत्तं न बहुज्ञता ।।"

श्रीप्रह्लाद ने असुर बालकों को कहा था—हे असुर बालक वृन्द ! द्विजत्व, देवत्व, ऋषित्व, बहु वैभव शालित्व किं वा बहु शास्त्राभिज्ञता मुकुन्द की प्रीति सम्पादन नहीं कर सकती है । उस प्रकार श्रीनृसिंह देव को स्तव करके प्रह्लाद कहे थे—भा० ७।९।९

(१४१) "मन्ये धनाभिजनरूपतपःश्रुतौज,-स्तेजः प्रभाव-बलपौरुषबुद्धियोगाः ।
नाराधनाय हि भवन्ति परस्य पुंसो, भक्त्या तुतोष भगवान् गजयूथपाय ।।"३७८।।

टीका—हरितोषणे स्वस्यायोग्यतामाशङ्क्य योग्यतां सम्भावयति मन्य इति द्वाभ्याम् । अभिजनः सत् कुले जन्म । रूपं—सौन्दर्य्यम् । श्रुतं पाण्डित्यम् । ओज इन्द्रिय नैपुण्यम् । तेजः कान्तिः । प्रभावः प्रतापः । बलं शारीरम् । पौरुषम् उद्यमः । बुद्धिः प्रज्ञा । योगोऽष्टाङ्गः । एते धनादयो द्वादश अपि गुणाः परस्य पुंसः आराधनाय न भवन्ति । हि यतः केवलया भक्त्यैव गजेन्द्राय तुष्टोऽभवत् ।।

मेरा विश्वास यह है कि—धन, सत् कुल में जन्म, रूप, तपस्या, वेदाभिज्ञता, ऐन्द्रियक बल, कान्ति, प्रताप, शरीरिक बल, उद्यम, ज्ञान योग एवं अष्टाङ्ग योग--इन द्वादशों के मध्य में हे परम पुरुष ! एक भी तुम्हारे सन्तोष विधान करने में समर्थ नहीं है । किन्तु एकमात्र भक्ति के द्वारा ही भगवान् प्रसन्न होते हैं, तज्जन्य केवल भक्ति से ही गजेन्द्र के प्रति भगवान् प्रसन्न हुये थे । उक्त प्रमाण द्वय के द्वारा प्रतिपादित हुआ कि—एकमात्र भक्ति द्वारा ही भगवान् भक्त के प्रति सु प्रसन्न होते हैं ।

प्रह्लाद—श्रीनृसिंह देव को कहे थे ।।१४१।।

१४२। उक्त विषय में प्रश्न हो सकता है कि--निरतिशय नित्य आनन्द स्वरूप ही भगवान् हैं, उनका सन्तोष भक्ति के द्वारा कैसे हो सकता है । भक्ति के द्वारा भगवान् यद्यपि सन्तुष्ट होते हैं, तथापि भगवत् स्वरूपानन्द में निरतिशयत्व एवं नित्यत्व का व्याघात उपस्थित होता है । कारण, जो निरतिशय है,

भक्तेरपि तथा तत्प्रीतिहेतुत्वं श्रूयते, तत एवं गम्यते,—तस्य परमानन्दैकरूपस्य स्वपरानन्दनी स्वरूपशक्तिर्या ह्लादिनीनाम्नी वर्त्तते, प्रकाशवस्तुनः स्वपरप्रकाशन-शक्तिवत् तत्परमवृत्तिरूपैवैषा। ताञ्च भगवान् स्ववृन्दे निक्षिपन्नेव नित्यं वर्त्तते। तत्सम्बन्धेन च स्वयमतितरां प्रीणातीति। अतएव तस्य प्रीतिरूपस्यापि भक्तिप्रीणनीयत्वमाह, (भा० ५।१५।१३)

(१४२) "यत्प्रीणनाद्वर्हिषि देव-तिर्य्यङ्-मनुष्य-वीरुत्तृणमाविरिञ्चात्।
प्रीयेत सद्यः स ह विश्वजीवः, प्रीतिः स्वयं प्रीतिमगाद्गयस्य॥"३७८॥

विश्वजीवः सर्व्वजीवनहेतुः, देवादीनां द्वन्द्वैक्यम्, प्रीतिः सुखरूपोऽपि॥ श्रीशुकः॥

१४३। अतएव तथाभूतत्वेनात्मारामस्य पूर्णकामस्यापि तस्य क्षुद्रगुणवस्त्वपि परितोषाय

---

अर्थात् जिस से अधिक अपर कुछ भी नहीं हैं, एवं जो ध्वंस प्रागभाव रहित है। उसका यदि अतिशय सुख होता है, तो निरतिशयत्व एवं नित्यत्व का व्याघात होना अवश्यम्भावी है। इस के उत्तर में कहते हैं—उच्यते। अर्थात् इस विषय में सार सिद्धान्त को कहते हैं। शास्त्र में श्रीभगवत् स्वरूप का वर्णन निरतिशय आनन्द एवं नित्य रूप में हुआ है। एवं भक्ति का वर्णन, भगवत् सुख हेतु रूप में हुआ है। अतएव उक्त वाक्य की सामञ्जस्यरक्षा करके ही सिद्धान्त करना समीचीन है। उस से बोध होता है कि—श्रीभगवान् अनन्तस्वरूप सम्पन्न होने पर भी मुख्य परमानन्द विग्रह हैं। उनकी ह्लादिनी नाम्नी जो स्वरूप शक्ति है--वह शक्ति श्रीभगवान् को स्वरूपानन्दास्वादन कराने में एवं भक्त वृन्द को भगवत् सेवा सुखास्वादन कराने में सक्षम है। जिस प्रकार सूर्य्य—निज प्रकाश शक्ति के द्वारा निज को एवं अपर वस्तु समूह को प्रकाशित करने में सक्षम है, उस प्रकार प्रकाश शील वस्तु का स्वभाव यह है कि—वह स्वयं को एवं अपर को प्रकाश करने में समर्थ है, उस ह्लादिनी शक्ति की परम वृत्ति रूपा यह भक्ति है, उक्त शक्ति को भगवान् भक्त वृन्द में निक्षेप करके नित्य विद्यमान हैं। अतएव ह्लादिनी शक्ति की सार वृत्ति रूपा प्रीति लक्षणा भक्ति के द्वारा भगवान् अतिशय सन्तुष्ट होते हैं।

अतएव स्वयं सुखरूप श्रीभगवान् भक्ति से ही अतिशय प्रीत होते हैं--इस का उदाहरण भा० ५।१५।१३ में है—

(१४२) "यत् प्रीणनाद्वर्हिषि देव-तिर्य्यङ्,-मनुष्य-वीरुत्तृणमाविरिञ्चात्।
प्रीयेत सद्यः स ह विश्वजीवः, प्रीतिः स्वयं प्रीतिमगा द्गयस्य॥"३७९॥

टीका—यस्य भगवतः प्रीणनात्। देवादीनां द्वन्द्वैक्यम्, तत् सद्यः प्रीयेत। प्रीतिं गच्छेत्। स विश्व जीवः सर्वान्तर्य्यामी स्वयं प्रीति रूप एव। वर्हिषि यज्ञे गयस्य, ह स्फुटं—प्रीतिमगात्, तृप्तोऽस्मीति--प्रत्यक्षं प्रीतिमाविष्कृतवानित्यर्थः।

विश्व जीव—शब्द का अर्थ— सर्व जीवन हेतु है। प्रीति—अर्थात् भगवान् सुख रूप होकर भी सुखी हुये थे। अर्थात् जो श्रीभगवान्, सन्तुष्ट होने पर देवता, मनुष्य, पशु, पक्षी, लता, तृण, प्रभृति समस्त ब्रह्माण्ड तृप्त होते हैं, उन सर्व जीवन हेतु श्रीभगवान् स्वयं सुखरूप होकर भी गय राजा के यज्ञ में 'तृप्तोऽस्मि' 'मैं परितृप्त हूँ।' इस प्रकार कहकर स्वीय तृप्ति को प्रकट किये थे।

प्रवक्ता श्रीशुक हैं॥१४२॥

१४३। अतएव यद्यपि श्रीभगवान् परमानन्द स्वरूप होने के कारण ही निज स्वरूपानन्द में विभोर

कल्पत इति दृष्टान्तेनाह, (भा० १।११।४–५)—

(१४३) "तत्रोपनीतवलयो रवेर्दीपमिवादृताः ।
आत्मारामं पूर्णकामं निजलाभेन नित्यदा ॥३८०॥
प्रीत्युत्फुल्लमुखाः प्रोचुर्हर्षगद्गदया गिरा ।
पितरं सर्व्वसुहृदमवितारमिवार्भकाः ॥"३८१॥

तत्र श्रीद्वारकायाम्, रवेरुपहाररूपं दीपमादृतवन्तो जना इवेत्यर्थः । एवं स्तुत्यादिकमपि तत्-प्रीणनतामर्हतीत्याह,—प्रीत्येति । पितरमर्भका इवेति दृष्टान्तः । तस्य प्रीतावसाधारणं गुणविशेषमप्याह,—सर्व्वसुहृदमिति । सर्व्वसुहृत्त्वे लिङ्गम्--'अवितारम्' इति । तथा आत्माराम-पूर्णकामत्वेऽपि तादृशस्य-स्वसम्बन्धाभिमानि–प्रीतिमत्पुत्रादिषु प्रीतिविशेषोदयो

---

रहते हैं, तज्जन्य आप आत्माराम एवं पूर्णकाम हैं, तथापि क्षुद्र गुण सम्पन्न वस्तु भी उनके सन्तोष सम्पादन में योग्य है, इसका वर्णन भा० १।११।४-५ में उक्त दृष्टान्त के द्वारा करते हैं—

(१४३) "तत्रोपनीतवलयो रवेर्दीपमिवादृता ।
आत्मारामं पूर्णकामं निजलाभेन नित्यदा ॥३८०॥
प्रीत्युत्फुल्लमुखाः प्रोचुर्हर्षगद्गदया गिरा ।
पितरं सर्व्वसुहृदमवितारमिवार्भकाः ॥"३८१॥

द्वारका वासि प्रजावृन्द, यद्यपि जानते थे कि—श्रीकृष्ण, आत्माराम एवं परमानन्द स्वरूप होने के कारण सर्वदा ही पूर्णकाम हैं, तथापि सूर्य्य पूजा में प्रदीप प्रदान के समान, द्वारका वासि प्रजावृन्द, वहाँपर विविध उपहार आनयन किये थे । एवं बालक गण, जिस प्रकार प्रीति संपृक्त हृदय से पिता को अनेक कुछ कहते हैं, उस प्रकार ही वे सब प्रीति प्रफुल्ल वदन से हर्षगद् गद वाक्य द्वारा सर्व लोक सुहृत् एवं रक्षक उन भगवान् श्रीकृष्ण को कहने लगे थे। तात्पर्य्य यह है कि—यद्यपि भगवान् परम आनन्द स्वरूप हैं, तथापि भक्ति पूर्वक उनका स्तव करने से सन्तुष्ट होते हैं । इस विषय में दृष्टान्त यह है – बालक वृन्द, जिस प्रकार परमविज्ञ पिता को प्राप्त कर कल वाक्य से तात्पर्य्य शून्य अनेक कुछ कहते हैं, पिता परम विज्ञ होने पर भी "अमृतं बालभाषितम्" इस उक्ति से सन्तोष प्राप्त करते हैं, उस प्रकार श्री भगवान् श्रीकृष्ण, समस्त शक्ति पति होकर भी निज भक्त वृन्द के प्रीति पूरित कण्ठ से कृत स्तुति से भी सन्तोष प्राप्त करते हैं । भक्त कृत स्तुति से भगवान् सन्तुष्ट होते हैं—उस में उनका असाधारण गुण विषय का वर्णन करते हैं । "सर्व सुहृदम्" अर्थात् आप सर्व जीव के हितकर बन्धु हैं । आप सर्व सुहृद हैं, उस में एक दृष्टान्त यह है--- 'अवितारम्' अर्थात् सबके रक्षक हैं । अतएव आप आत्माराम एवं पूर्णकाम होकर भी निज सम्बन्धाभिमानी प्रीतियुक्त पुत्रादि के प्रति पिता प्रभृति की प्रीति जिस प्रकार होती है, उस प्रकार श्रीभगवान् के सहित दास सखा, प्रभृति सम्बन्ध के अभिमान कारी अथच श्रीभगवान् में जो लोक प्रीति युक्त हैं, उन सब भक्त के प्रति श्रीभगवान् आनन्द स्वरूप होकर भी प्रीति युक्त होते रहते हैं । इस प्रकार जहाँ जहाँ श्रीभगवान् को कल्प तरु स्थानीय कहकर दृष्टान्त दिया जाता है, वहाँ वहाँ समझना होगा कि—कल्पतरु जिस प्रकार आश्रित जन के सङ्कल्प पूरण करते हैं, श्रीभगवान् भी भक्ति विषय में अनुरूप कृपा प्रकाश उस प्रकार करते हैं । जो लोक, श्रीभगवच्चरणों में प्रीति कामना करके उनका भजन करते हैं—उन सब के प्रति अनुरूप प्रीति प्रदान का याथार्थ्य अवश्य स्वीकार्य्य है । कारण, कल्पतरु प्रार्थिव्यक्ति की प्रार्थना पूरण जिस प्रकार करते

यथा दृश्यते, तथा तेषु तं प्रीतिमन्तमित्यर्थः। एवं कल्पतरुदृष्टान्तेऽपि भगवतो भक्ति विषयिका कृपा यथार्थमेवोपपद्यते,— ये खलु सहजतत्प्रीतिमेवात्मनि प्रार्थयमाना भजन्ते, तेभ्यस्तद्दान-याथार्थ्यस्यावश्यकत्वात्। तस्मादस्त्येवानन्दरूपस्यापि भक्तावानन्दोल्लास इति। सूतः॥

१४४। एवं भक्तिरूपायास्तच्छक्तेर्जीवेऽभिव्यक्तौ भगवानेव कारणम्। तत्तदिन्द्रियादिप्रवृत्तौ च स एवेति तस्मिंस्तया जीवस्योपकारकाभासत्वमेव। तथापि भक्तानुरज्यदात्मत्वे भगवतः स्वकृपाप्राबल्यमेव कारणमिति वदत् पूर्व्वार्थमेव साधयति, (भा० १२।८।४०) —

(१४४) "किं वर्णये तव विभो यदुदीरितोऽसुः
संस्पन्दते तमनु वाङ्मनइन्द्रियाणि।
स्पन्दन्ति वै तनुभृतामज-शर्वयोश्च
स्वस्याप्यथापि भजतामसि भावबन्धुः॥"३८२॥

---

हैं, एवं वाञ्छित पूरण करना धर्म जिस प्रकार आगन्तुक अथवा अभिनय नहीं है, किन्तु स्वभाव सिद्ध है, उस प्रकार ही जो लोक, श्रीभगवान् के प्रति अकपट प्रीति प्रार्थना करके भजन करते हैं, उन सब को स्वयं के प्रति अकपट स्वाभाविक प्रीति प्रदान भी श्रीभगवान् का स्वरूप धर्म है, आगन्तुक वा अभिनय नहीं है। अतएव आनन्द स्वरूप श्रीभगवान् में भक्ति जनित आनन्दोल्लास अवश्य है।

प्रकरण प्रवक्ता श्रीसूत हैं ॥१४३॥

१४४। इस प्रकार भक्ति स्वरूपा भगवत् शक्ति का आविर्भाव जीव में होने का कारण श्रीभगवान् ही हैं। यद्यपि जीव मात्र की बुद्धि इन्द्रिय प्रभृति की स्वस्व विषय में प्रवृत्ति के प्रति कारण भी श्रीभगवान् ही है। इन्द्रिय वृन्द को निज निज विषयों में प्रवृत्ति प्रदान कर श्रीभगवान् जो उपकार करते रहते हैं, वह यथार्थतः उपकार नहीं है--उपकार का आभास मात्र है। तथापि श्रीभगवान् भक्त के प्रति जो अनुरक्त चित्त होते हैं, उसका कारण ही है—श्रीभगवान् में असाधारणी कृपा का प्राबल्य। अर्थात् श्रीभगवान् की कृपा—साधारणी एवं असाधारणी भेद से द्विविध हैं, उस के मध्य में भगवद् वहिर्मुख साधारण जीव मात्र के बुद्धीन्द्रिय प्रभृति को निज निज विषयों में प्रवृत्त होने की सामर्थ्य प्रदान, भगवान् करते हैं, वह उनकी असाधारणी कृपा है, अथवा, आपाततः दृष्टि से उसको कृपा मानते हैं, किन्तु वह वास्तविक कृपा नहीं है। कारण, जड़ीय वस्तु भोग हेतु जीव मात्रके इन्द्रिय वृन्द को प्रवृत्ति प्रदान करके निज स्वरूपानन्दास्वादन से वञ्चित करना ही होता है, अतः उस साधारणी कृपा का नाम कृपाभास ही है। अपर कृपा—असाधारणी है, अर्थात् जिस कृपा से जीव, बुद्धीन्द्रिय द्वारा जड़ीय वस्तु ग्रहण करने में अरुचि प्राप्त कर श्रीभगवत् स्वरूपानन्दास्वादन बुद्धीन्द्रिय के द्वारा करने में उन्मुख होता है। उसका नाम ही श्रीभगवान् की असाधारणी कृपा है। प्राप्त महत् सङ्ग सम्पन्न जीव ही इस प्रकार कृपा पात्र करने का अधिकारी होता है. शास्त्र, इस कृपा को ही जीव के प्रति श्रीकृष्ण का परम कारुणिकत्व की अभिव्यक्ति कहते हैं। भक्त में श्रीभगवान् का चित्त जो अनुरक्त होता है, उस के प्रति श्रीभगवान् की निज कृपा ही मूल कारण है। इस को कहने के निमित्त भा० १२।८।४० में श्रीमार्कण्डेयऋषि पूर्व वर्णित तात्पर्य्य का वर्णन करते हैं—

(१४४) "किं वर्णये तवविभो यदुदीरितोऽसुः
संस्पन्दते तमनु वाङ् मन इन्द्रियाणि।

हे विभो, तव किमहं वर्णये,—त्वत्कृपालुतायाः कियन्तमंशं वर्णयेयमित्यर्थः। यतो येन त्वयैव उदीरितः प्रेरितोऽसुः प्राणः संस्पन्दते प्रवर्त्तते, तमसुमनु च वागादयः स्पन्दन्ते। तत्र हेतुः—'वै' अन्वय-व्यतिरेकाभ्याम् (वृ० ४।४।१८) "श्रोत्रस्य श्रोत्रम्" इत्यादि-श्रुतिभिश्च तत् प्रसिद्धमित्यर्थः। न केवलं प्राकृतानां तनुभृताम्, किन्तु अज-शर्वयोश्च। अतः स्वस्य ममापि तथैव। एवं यद्यपि न क्वचिदपि कस्यापि स्वातन्त्र्यम्, तथापि दारुयन्त्रवत् त्वत्प्रवर्त्तितैरपि वागादिभिर्भजतां पुंसां भावेन स्वदत्तयैव भक्त्या बन्धुरसीति॥ मार्कण्डेयः श्रीनर-नारायणौ।

१४५। भगवदनुभव-कर्त्तृत्वेऽनन्यहेतुत्वमाह, (भा० १।८।३६)—

(१४५) "शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः, स्मरन्ति नन्दन्ति तवेहितं जनाः।

---

स्पन्दन्ति वै तनुभृतामजशर्वयोश्च
स्वस्याप्यथापि भजतामसि भावबन्धुः॥"३८२॥

अन्तर्यामी श्रीभगवान् ही प्राणादि इन्द्रिय वर्ग का प्रवर्त्तक हैं। उनकी प्रेरणा से ही तनु, वाक् मन, इन्द्रिय प्रभृति निज निज क्षेत्र में कार्य्यक्षम होते हैं। अतएव श्रीभगवान् का स्तव करते समय अपनी कुछ भी सामर्थ्य नहीं है, यह अनुभव करके श्रीमार्कण्डेय बोले थे,—हे विभो! मैं कैसे आप का स्तव कर सकता हूँ? आप के द्वारा प्रेरित होकर ही प्राण निःश्वासादि में क्रिया कारित्व होता है, आप की प्रेरणा से ही शरीर धारी जीव मात्र की, यहाँतक-कि—ब्रह्मा, शिव, एवं मेरी वाक्यमन, इन्द्रिय प्रभृति ज्ञान एवं क्रिया शक्ति सम्पन्न होते हैं। अतएव किसी में भी स्वतन्त्र रूप से कुछ भी करने की सामर्थ्य नहीं हैं। तथापि आप के द्वारा प्रवर्त्तित वाक् प्रभृति इन्द्रय के द्वारा जो लोक आप का भजन करते रहते हैं, उनके पक्ष में आप के द्वारा प्रदत्त भक्ति के द्वारा ही आप उन सब के भावबन्धु रूप में प्रकाशित होते हैं। अर्थात् परम हित कारी रूप में उनसब भजन कारी के समक्ष में प्रकट होते हैं। अतएव मैं आप की परम कृपालुता के किस अंश का वर्णन कर सकता हूँ? आप की प्रेरणा से ही इन्द्रिय प्रभृति निज क्षेत्र में प्रवृत्त होने में समर्थ हैं, आप की प्रेरणा व्यतीत कोई भी कुछ करने में सक्षम नहीं हैं, उसका वर्णन श्रुति ने इस प्रकार किया है—"श्रोत्रस्य श्रोत्रम्" अर्थात् श्रोत्र की श्रवण सामर्थ्य जिन के चिदाभास सम्वलन से ही प्रकाशित होती है। विधि एवं निषेध मुख उस विषय का वर्णन श्रुति में सुस्पष्ट रूप से ही हैं। केवल प्रकृत देह धारी व्यक्ति गण के प्रति आप की यह प्रेरणा है, यही नहीं, किन्तु अप्राकृत ब्रह्मा, एवं शङ्कर के सम्बन्ध में भी यही व्यवस्था है। अत मेरा सम्बन्ध में भी वही व्यवस्था है। काष्ठ पुत्तलिका को जिस प्रकार नट इच्छानुरूप परिचालित कर नृत्य कराता रहता है, उसकी क्षमता स्वयं की नहीं है। उसी प्रकार प्राकृत अप्राकृत निखिल जीव को आप जिस प्रकार प्रेरणा करते हैं, वे सब उस प्रकार निज निज कार्य्य क्षेत्र में कार्य्य करते रहते हैं। अतएव भजनांश में भी किसी का स्वातन्त्र्य नहीं है, जिस को जिस प्रकार भाव प्रदान कर प्रिय हितकारी भावबन्धु आप होते हैं, आप की प्रेरणा प्राप्त व्यक्ति भी उसी प्रकार आप का भजन करते हैं, आप स्वयं भक्ति प्रदान कर उस के सेव्य होते हैं। उक्त कथन का तात्पर्य्य यह है कि—भक्ति रूपाचित् शक्ति का आविर्भाव जीव हृदय होने का एक मात्र कारण ही श्रीभगवत् कृपा है।

मार्कण्डेय श्रीनर नारायण को कहे थे॥१४४॥

१४५। श्रीभगवान् की श्रवण कीर्त्तनादि रूपा विशुद्धा भक्ति को छोड़कर अपर किसी साधन से भगवदनुभव नहीं होता है।

त एव पश्यन्त्यचिरेण तावकं, भवप्रवाहोपरमं पदाम्बुजम् ॥"३८३॥

स्पष्टम् ॥ श्रीकुन्ती श्रीभगवन्तम् ॥

१४६ । श्रीभगवत्प्रापकत्वमाह, (भा० ११।१८।४५)—

(१४६) "भक्त्योद्धवानपायिन्या सर्व्वलोक महेश्वरम् ।
सर्व्वोत्पत्त्यप्ययं ब्रह्मकारणं मोपयाति सः ॥"३८४॥

टीका च—"महेश्वरत्वे हेतुः,-सर्व्वोत्पत्त्यप्ययं सर्व्वस्योत्पत्त्यप्ययौ यस्मात्, अतएव तत्-कारणं मा मां ब्रह्मस्वरूपं वैकुण्ठनिवासिनम्, यद्वा, ब्रह्मणो वेदस्य कारणं मामुपयाति सामीप्येन प्राप्नोति" इत्येषा । श्रीगीतासु (८।२२) "पुरुषः स परः पार्थ भक्त्या

---

भा० १।८।३६ में श्रीकुन्ती देवी श्रीकृष्ण को कही थीं ।

(१४५) "शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः, स्मरन्ति नन्दन्ति तवेहितं जनाः ।
त एव पश्यन्त्यचिरेण तावकं, भवप्रवाहोपरमं पदाम्बुजम् ॥"३८३॥

टीका—अस्य पक्षस्य सिद्धान्ततामभिप्रेत्य श्रवणादि फलमाह—शृण्वन्तीति । नन्दन्ति, अन्यैः कीर्त्यमानमभिनन्दन्ति, ये जनाः । ईहितं चरितम् । तावकं त्वदीयं पदाम्बुजम् । त एव पश्यन्त्येव अचिरेणैवेति सर्वत्रावधारणम् । कीदृशं ? भव प्रवाहस्य जन्म परम्परायाः उपरमो यस्मिन् तत् ॥

हे गोविन्द ! जो लोक, निरन्तर तुम्हारे चरित्र श्रवण, गान, कीर्त्तन, स्मरण, एवं अपर के द्वारा गीत का अभिनन्दन करते हैं, वे सब ही अति सत्वर आप के चरण कमल युगल का दर्शन करते हैं, जिस से संसार परम्परा की निवृत्ति होती है । इस श्लोक में 'त एव' का प्रयोग है, अर्थ है, वे सब ही दर्शन करते हैं । 'एव' कार का प्रयोग होने के कारण ज्ञान कर्मादि साधन समूह के द्वारा दर्शन होने की सम्भावना निरस्त हुई है । इसका उल्लेख सुस्पष्ट है ।

श्रीकुन्ती श्रीभगवान् को कही थीं ॥१४५॥

१४६ । एकमात्र अव्यभिचारिणी भक्ति के द्वारा ही श्रीभगवत् प्राप्ति होती है, उसका वर्णन भा० ११।१८।४५ में है—

(१४६) "भक्त्योद्धवानपायिन्या सर्व्वलोक-महेश्वरम् ।
सर्व्वोत्पत्त्यप्ययं ब्रह्मकारणं मोपयाति सः ॥"३८४॥

श्रीकृष्ण कहे थे, हे उद्धव ! जो व्यक्ति पूर्व वर्णित लक्षणाक्रान्त भक्ति का अनुष्ठान करता है, वह ही अव्यभिचारिणी भक्ति सर्व लोक महेश्वर, सर्वोत्पत्ति विनाशक, सर्व कारण कारण विभु स्वरूप मुझ को प्राप्त करता है । मैं महेश्वर हूँ । कारण, मुझ से सब की उत्पत्ति होती है, एवं विनाश भी होता है । अतएव मैं ही विश्व का उपादान कारण एवं निमित्त कारण हूँ । मैं विभु स्वरूप होकर भी वैकुण्ठ में निवास करता हूँ । अथवा, मैं ही ब्रह्म शब्द वाच्य वेद का कारण हूँ । इस प्रकार अर्थ भी सुसङ्गत है, कारण, श्रीभगवद् गीता में उक्त है । "वेदान्त कृद् वेद विदेव चाहम्" अर्थात् मैं ही वेदन्त का कर्त्ता हूँ, एवं मैं ही वेदार्थ वित् हूँ । श्रुति में भी वर्णित है—"अस्य महतो भूतस्य निःश्वसितमेतत्" 'ऋग्वेद' इत्यादि । मूल श्लोक में "याति" क्रिया का प्रयोग है । उसके पहले 'उप' उपसर्ग का भी प्रयोग है । उस से 'प्राप्ति'—अर्थ सूचित हुआ है । श्रीभगवद् गीता में भी (८।२२) उक्त है—"पुरुषः स परः पार्थ ! भक्त्यालभ्यस्त्वनन्यया"

लभ्यस्त्वनन्यया" इति ॥ श्रीभगवान् ॥

१४७। तथा मनसोऽप्यगोचरफलदाने श्रीध्रुवचरितं प्रमाणम्, परमभक्तिसम्बलित-स्वलोकदानात्। तद्वशीकारित्वं तूदाहृतम् (भा० ११।१४।२०) "न साधयति मां योगः" इत्यादौ। तथा, तत्पश्चान्ते (भा० ११।१४।२१)—

(१४७) "भक्त्याहमेकया ग्राह्यः श्रद्धयात्मा प्रियः सताम्" इति।

अत्रैवं विवेचनीयम्,—यद्यप्यस्य वाक्यस्य एकादश-चतुर्द्दशाध्यायप्रकरणे साध्य-साधन-भक्त्योरविविक्ततयैव महिम-निरूपणमिति साधनपरत्वं दुर्निर्णेयम्, तथापि फलभक्ति-

---

हे अर्जुन! उन परम पुरुष को अनन्या भक्ति के द्वारा ही प्राप्त किया जा सकता है।

उक्त प्रमाण समूह के द्वारा प्रति पादित हुआ है कि– अनन्या भक्ति ही भगवत् प्रापिका है। श्रीभगवान् कहे थे ॥१४६॥

१४७। भक्ति मानस सङ्कल्पागोचर फल प्रदान में सक्षम है—उस विषय श्रीध्रुव चरित्र ही प्रमाण है—कारण, श्रीध्रुव को परम भक्ति सम्बलित निज लोक प्रदान भगवान् किये थे। भक्ति में भगवान् वशीभूत होते हैं उसका उदाहरण भा० ११।१४।२० में है।

"न साधयति मां योगो न सांङ्क्षंच धर्म उद्धव।
न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता॥"

टीका—अत एवम्भूतं श्रेयो नान्यदस्तीत्याह न साधयतीति द्वाभ्याम्।

इस के बाद श्लोक में कह हैं – भा० ११।१४।२१

(१४७) "भक्त्याह मेकया ग्राह्यः श्रद्धयात्मा प्रियः सताम्।
भक्तिः पुनाति मन्निष्ठा श्वपाकानपि सम्भवात्।

टीका—श्रद्धया या भक्ति स्तया। सम्भवात् जाति दोषादपीत्यर्थः॥

हे उद्धव! श्रद्धा पूर्विका अव्यभिचारिणी भक्ति के द्वारा साधुगण प्रिय मैं गृहीत होता हूँ। यहाँ इस प्रकार विचार करना आवश्यक है—यद्यपि भा० ११।१४।२१–८१ में साधन एवं साध्य भक्ति के अविचारित भाव से ही भक्ति महिमा वर्णित है—, जिस में "भक्त्याहमेकया ग्राह्यः" एवं "न साधयति मां योगः" वाक्य द्वय का प्रयोग हुआ है। तज्जन्य पूर्व वर्णित भक्ति की महिमा वर्णन प्रसङ्ग में साधन भक्ति की महिमा कहना दुःसाध्य है। तथापि साधन भक्ति का फल ही भाव भक्ति है, भाव भक्ति की महिमा कहने से उसके द्वारा साधन भक्तिकी महिमा का निर्णय भी निर्बाध रूप से होता है। अतः भा० ११।१४।२१ अध्याय में वर्णित विषय का तात्पर्य्य को भक्ति महिमा वर्णन पर ही जानना होगा। अर्थात् जिस साधन भक्ति से भगवान् वशीभूत होते हैं, उस अभिप्राय को प्रकट करने के निमित्त भङ्गी पूर्वक साधन भक्ति की महिमा का कथन हुआ है। यहाँ का अभिप्राय यह है कि—"न साधयति मां योगः" इत्यादि श्लोक में कथित है – अष्टाङ्ग योग, आत्म अनात्म विचार, वर्णाश्रम धर्मसमूह, मुझ को साधित अर्थात् वशीभूत नहीं कर सकते हैं। बलवति भक्ति जिस प्रकार मुझ को वशीभूत करती है। इस से प्रतिपन्न हुआ है कि भक्ति ही श्रीभगवान् को वशीभूत करनेमें समर्था है। श्लोकमें लिखित अष्टाङ्ग योग प्रभृति साधन है, उक्त साधन समूह के सहित ही भक्ति का उल्लेख हुआ है। इस से प्रकरण प्राप्त भक्ति शब्द से साधन

महिमद्वारापि साधनमहिमपरत्वमेव, यत्रेदृशमपि फलं भवतीति (भा० ११।१४।१) "वदन्ति कृष्ण श्रेयांसि" इत्यादि--प्रश्नमारभ्य साधनस्यैवोपक्रान्तत्वात्, (भा० ११।१४।२६) "यथा यथात्मा परिमृज्यतेऽसौ, मत्पुण्यगाथा-श्रवणाभिधानैः" इत्यादिना तस्यैवोपसंहृतत्वाच्च ।

---

को ही जानना होगा। किन्तु भक्ति रसामृत सिन्धु ग्रन्थ में भक्ति गुण वर्णन, प्रसङ्ग में सुस्पष्ट उल्लेख है कि—साधन भक्ति की फल रूपा भक्ति के बिना साधन भक्ति के द्वारा श्रीभगवान् को वशीभूत करना असम्भव है। अर्थात् भक्ति रसामृत सिन्धु ग्रन्थ में प्रथमतः

"अन्याभिलाषिताशून्यं ज्ञानकर्म्माद्यनावृतम् ।
आनुकूल्येन कृष्णानुशीलनं भक्तिरुत्तमा ॥"

के द्वारा भक्ति का लक्षण किया गया है। अनन्तर, उक्त उत्तमा भक्ति के तीन भेद साधन, भाव, प्रेम कहे गये हैं। उस के मध्य में क्लेशघ्नी, शुभद्रा, साधन भक्ति के गुण हैं, मोक्ष लघुताकृत् एवं दुर्ल्लभा, भाव भक्ति के असाधारण गुण हैं, सान्द्रानन्द विशेषात्मा, श्रीकृष्णाकर्षिणी—प्रेम भक्ति के गुणद्वय का उल्लेख है। उस में भी प्रेम भक्ति में उक्त षड् गुण विद्यमान है। इस वर्णन से प्रतीत होता है कि--श्रीकृष्ण को वशीभूत करने की शक्ति प्रेम भक्ति की हैं। अथच "न साधयति मां योगः" इत्यादि श्लोकों में भक्ति को अष्टाङ्ग योग प्रभृति साधनों का प्रतियोगी रूप में उल्लेख किया गया है, कारण साधन का प्रतियोगी साधन ही हो सकता है, साधन का फल नहीं जिस प्रकार पण्डित ही पण्डित का प्रतियोगी हो सकता है, किन्तु मूर्ख पण्डित का प्रतियोगी नहीं होगा। उस प्रकार अष्टाङ्ग योग वर्णाश्रम धर्म प्रभृति साधन है, उन सब साधनों का प्रतियोगी साधन भक्ति ही हो सकती है, साध्य रूपा भाव भक्ति अथवा प्रेम भक्ति नहीं हो सकती। अथच प्रेम भक्ति के बिना भगवान् वशीभूत भी नहीं होते हैं। इस प्रकार संशय निरसन हेतु विचार का प्रारम्भ यहाँ हुआ है। सन्दर्भकार कहते हैं— भा० ११।१४।१

"वदन्ति कृष्ण श्रेयांसि बहूनि ब्रह्मवादिनः ।
तेषां विकल्प प्राधान्यमुताहू एक मुख्यता ॥"

टीका—एवं तावद् भगवता भक्त्या मोक्ष इत्युक्तम्, अन्ये तु अन्यानि साधनानि वदन्ति तत्र विशेष निर्धारणां गच्छति। वदन्तीति श्रेयांसि श्रेयः साधनानि । किं विकल्पेन प्राधान्यम्, उताहो किं वा एकस्यैव मुख्यता।।

हे कृष्ण! वेदज्ञ ऋषिगण, मानव वृन्द को मङ्गल प्राप्त कराने के निमित्त विविध साधनों का उल्लेख करते रहते हैं, अथच उन सब की उक्ति के मूल प्रमाण, वेद को ही मानते हैं, यदि उन सब के उल्लिखित साधन समूह वेद मूलक नहीं होते तो उन सब की उक्ति-- अयथार्थ होती। ऐसा होने पर वेद मूलकसाधन समूह के मध्य में प्रत्येक का याथार्थ्य अङ्गाङ्गि भाव से मानना होगा, अथवा 'इदं वा इदं वा" रूप से अर्थात् यह भी हो सकता है, यह भी हो सकता,इस रीतिसे प्रत्येक ही मङ्गल प्रापिका मुख्य साधन होगा? उद्धवकृत इस प्रश्न से आरम्भ कर साधन विषय का ही उपक्रम हुआ है। एवं उपसंहार वाक्य में भी साधन भक्ति में ही पर्य्यवसान दृष्ट होता है। (भा० ११।१४।२६)

"यथा यथात्मा परिमृज्यतेऽसौ, मत्पुण्यगाथा-श्रवणाभिधानैः ।
तथा तथा पश्यति वस्तु सूक्ष्मं चक्षुर्यथैवाञ्जन सम्प्रयुक्तम् ॥"

टीका—ननु ब्रह्म विदाप्नोति परम् । तमेव विदित्वातिमृत्युमेति--इत्यादि श्रुतिभ्यो ज्ञानादेव अविद्या निवृत्त्या त्वत्प्राप्तिरवगम्यते कुतो भक्तियोगेनेत्युच्यते तत्राह यथा यथेति । आत्मा चित्तं परिमृज्यते शोध्यते

विशेषतस्तु तत्र (भा० ११।१४।१८) "धर्म्मः सत्यदयोपेतः" इत्याद्यन्तं तदीयमन्तः प्रकरणं प्रायः साधनमहिमपरमेव। तत्र "बाध्यमानोऽपि" इति पद्यम्,—साध्यभक्तौ जातायां बाध्यमानत्वा-योगात्, (भा० १०।८७।३५) "दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुखे, न पुनरुपासते पुरुषसारहरावसथान्" इत्युक्तेः,

"विषयाविष्टचित्तानां विष्ण्वावेशः सुदूरतः। वारुणी-दिग्गतं वस्तु व्रजन्नैन्द्रीं किमाप्नुयात् ॥" ३८५

---

मत्पुण्यकथानां श्रवणैरभिधानैश्च। भक्तेरेवावान्तरव्यापारो ज्ञानं, न पृथगित्यर्थः।

अर्थात् मेरी कथा का श्रवण कीर्त्तन द्वारा चित्त जैसा जैसा परिमार्जित होगा, वैस वैसा ही सूक्ष्म पारमार्थिक वस्तु दर्शन की योग्यता होगी। इस प्रकार श्रवण कीर्त्तनादि लक्षणा साधन भक्ति में ही पर्य्यवसान किया गया है। किन्तु चतुर्दश अध्याय में कथित प्रकरण के मध्य में

"बाध्यमानोऽपि मद्भक्तो विषयैरजितेन्द्रियः।
प्रायः प्रगल्भया भक्त्या विषयैर्नाभिभूयते" ११।१४।१८

टीका—अपि च आस्तां तावदुत्तम भक्त कथा, यतः प्राकृतोऽपि भक्तः कृतार्थ एवेत्याह बाध्यमान इति द्वाभ्याम्। विषयैराकृष्यमाणोऽपि। प्रलग्भया—समर्थया॥

मेरा अजितेन्द्रिय भजन शील भक्त, विषय द्वारा बाधित होने पर भी प्रगल्भया भक्ति के प्रभाव से प्रायशः बाधित नहीं होता है। यह अष्टादश श्लोक से आरम्भकर

"धर्मः सत्यदयोपेतोविद्या वा तपसान्विता।
मद्भक्त्यापेत मात्मानं न सम्यक् प्रपुनाति हि॥

अर्थात् हे उद्धव! सत्य एवं दया युक्त धर्म, एवं तपस्या युक्त विद्या, मुझ में भक्ति हीन चित्त को सम्यक् शोधन करने में अक्षम है। ११।११।२२ पर्यन्त श्लोक समूह में साधन भक्ति की महिमा वर्णित हुई है। तन्मध्य में "बाध्यमानोऽपि मद्भक्तः" यह श्लोक, यद्यपि साधन भक्ति महिमा वर्णन प्रसङ्ग में पठित है, तथापि समझना होगा कि—साधन करते करते जिस समय श्रीभगवान् में साध्य स्वरूपा भाव भक्ति का उदय होगा, तब ही उक्त कथन सार्थक होगा, अर्थात् उस समय साधक विषयों के द्वारा बाधित अर्थात् अभिभूत नहीं होगा। किन्तु साधन अवस्था में विषयावेश से भक्ति बाधित हो जाती है। इस अभिप्राय से ही भा० १०।८७।३५ में श्रुतियों ने कहा है—

"दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुखे,
न पुनरुपासते पुरुषसारहरावसथान्॥"

हे प्रभो! जो नित्य सुख, नित्यप्रिय, परमात्म स्वरूप आप में एक बार भी मन धारण करते हैं—वे पुनर्वार धैर्य्य, गाम्भीर्य्य, दया दाक्षिण्य प्रभृति हृदय सारापहरणकारी विषय की सेवा नहीं करते हैं, इस प्रकार उक्ति हेतु—एवं विष्णु पुराण में लिखित

"विषयाविष्टचित्तानां विष्ण्वावेशः सुदूरतः।
वारुणी--दिग्गतं वस्तु व्रजन्नैन्द्रीं किमाप्नुयात्॥" ३८५

जिस प्रकार पश्चिम दिक् में विद्यमान वस्तु लाभ हेतु पूर्वदिक् में धावित होने से वह वस्तु लाभ असम्भव है, स प्रकार जिस का चित्त, विषय में आविष्ट है, उस के पक्ष में श्रीविष्णु में चित्ताविष्ट होना

इति विष्णुपुराणाच्च तन्महिम-परत्वेन गम्यते । अत्र व तावद्वक्ष्यते, (भा० ११।१४।२३)—

"कथं विना रोमहर्षं द्रवता चेतसा विना ।
विनानन्दाश्रुकलया शुध्येद्भक्त्या विनाशयः ॥" ३८६ ॥

इत्यनेन, (भा० ११।१४।२४) मद्भक्तियुक्तो भुवनं पुनाति" इति कैमुत्यवाक्येन च साध्य-भक्तेः संस्कारहारित्वम्, ततो विषया एव बाध्यमाना भवन्तीति ।

अथ (भा० ११।१४।१९) यथाग्निः सुसमिद्धार्चिः" इति पद्यं नामाभासादेः सर्व्वपापक्षयकारित्व-प्रसिद्धेस्तत्परम् । अथ (भा० ११।१४।२०) "न साधयति मां योगः" इत्येतत् सार्द्धपद्यं योगादीनां साधनरूपाणां प्रतियोगित्वेन निर्द्दिष्टत्वात् श्रद्धा-सहायत्वेन विधानाच्च तत्परम् । साध्यायां श्रद्धोल्लेखः पुनरुक्त इति । यद्यपि फलभक्तिद्वारैव तद्वशीकारित्वं तस्यास्तथाप्यत्र

---

असम्भव है । इत्यादि प्रमाण के अनुसार साध्य स्वरूप भाव भक्ति पर ही उक्त 'बाध्यमानोऽपि' श्लोक है । इस प्रकरण के ११।१४।२३ में कहेंगे—

"कथं विना रोमहर्षं द्रवता चेतसा विना ।
विनानन्दाश्रुकलया शुध्येद्भक्त्या विनाशयः ॥" ३८६॥

हे उद्धव ! भक्ति के विना कैसे चित्त शुद्ध हो सकता है ? श्रवण कीर्त्तनादि से चित्त विगलित न होने पर भक्ति अस्तित्व का बोध कैसे होगा ? शरीर में रोमहर्ष एवं नेत्र में आनन्दाश्रु के विना चित्त द्रवता का परिचय प्राप्त कैसे होगा ।।?

इस से ज्ञात होता है कि—भाव भक्ति का उदय में ही सम्यक् चित्त शुद्ध होता है । विशेष कर "मद् भक्तियुक्तो भुवनं पुणाति" प्रमाण के द्वारा निर्णीत हुआ है कि—प्रेम भक्ति लाभ करने बाद ही जगद् गत जीव हृदय शोधन करने की क्षमता आती है । इस प्रकार कैमुत्य वाक्य के द्वारा भी साध्य भाव भक्ति में साधक हृदयस्थ भोगवासना संस्कार विनष्ट करने की क्षमता प्रकाशित हुई है । अर्थात् जो भाव भक्ति, जगद् गत जीव हृदयस्थ भोग वासना संस्कार विनष्ट कर सकती है । वह सुतरां साधक के हृद्गत भोग वासना संस्कार विनष्ट करेगी । अतएव साध्य, भाव भक्ति लाभ के पश्चात् ही साधक हृदय विषयों से अबाधित होता है । अर्थात् विषयावेश— साधक हृदय को अभिभूत नहीं कर सकता है ।

अनन्तर भा० ११।१४।१९ में वर्णित—

"यथाग्नि सुसमिद्धार्च्चिः करोत्येधांसि भस्मसात् ।
तथा मद्विषया भक्तिरुद्धवैनांसि कृत्स्नशः ।।"

हे उद्धव ! सम्यक् प्रज्वलित वह्नि, जिस प्रकार काष्ठ राशि को भस्मसात् करता है, उस प्रकार, मैं जिस का विषय हूँ, इस प्रकार भक्ति भी निखिल पापराशि को सम्पूर्ण रूप से विनष्ट करती है । इस श्लोक की साधन भक्ति पर ही जानना होगा । कारण, नामाभासादि की ऐसी सामर्थ्य है कि उस से समस्त पाप विनष्ट होते हैं । अनन्तर "भा० ११।१४।२० में लिखित "न साधयति मां योगः" श्लोक भी,—साधन रूप योगादि के प्रतियोगी रूप में भक्ति का उल्लेख होने से, एवं श्रद्धा युक्त अनुष्ठान विहित होने पर साधन भक्ति पर ही है । कारण, यदि उक्त श्लोक को साधन भक्ति पर न स्वीकार किया जाय तो, अर्थात् साध्य भाव भक्ति पर माना जाय तो "श्रद्धयात्मा" यहाँ सहार्थ बोधक श्रद्धा पद का उल्लेख है, उस से पुनरुक्त

साधनरूपाया मुख्यत्वेन प्राप्तत्वात् तत्रैवोदाहृतम्। किंवा (भा० ५।६।१८) "अस्त्वेवमङ्ग भजतां भगवान् मुकुन्दो, मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगम्" इति न्यायेन, नावशः सन् प्रेमाणं ददातीति तस्या एव साक्षात्तद्गुणकत्वं ज्ञेयम्। अथ (भा० ११।१४।२२) "धर्म्मः सत्यदयोपेतः" इति पद्यञ्च धर्म्मादि-साधन-प्रतियोगित्वेन निर्द्देशात् साधनभक्तेरेवान्यत्रापि तत्फलतयोदाहृतत्वाच्च तत्परम्। यत्तु "कथं विना" इत्यादिकम्, तच्च साधन-भक्ति-फलस्य शोधकत्वातिशय-प्रतिपादनेन तत्परमिति। तस्मात् साध्वेव (भा० ११।१४।१८) "बाध्यमानोऽपि" इत्यादि-पद्यानि तत्तत्प्रसङ्गे दर्शितानि ॥ श्रीभगवान् ॥

१४८। तत्रास्तु तावत्तस्याः साक्षाद्भक्तेः परधर्म्मत्वादिकं भगवदर्पणसिद्ध-तदनुगतिकस्य लौकिककर्म्मणोऽपि परधर्म्मत्वमुदाहरिष्यते (भा० ११।२९।२१) "यो यो मयि परे धर्म्मः"

---

दोष होगा। कारण, श्रद्धा के सहित भक्त्यनुष्ठान करने पर ही भगवान् में भाव भक्ति लाभ होता है। ऐसा होने पर पुनर्वार "श्रद्धा" पद का उल्लेख निष्प्रयोजन होगा।

यद्यपि साधन भक्ति की फलरूपा भाव भक्ति के द्वारा ही श्रीभगवान् वशीभूत होते हैं, तथापि साधन रूपा भक्ति का विवरण ही इस प्रकरण में कहा गया है। अतः भगवद् वशी कारित्व धर्म का उल्लेख साधन भक्ति में ही हुआ है। अथवा भा० ५।६।१८ में उक्त है—

"अस्त्वेवमङ्ग भजतांभगवान्मुकुन्दो, मुक्ति ददाति कर्हिचित् स्म न भक्तियोगम्"

भगवान् मुकुन्द ! भजन कारी भक्त वृन्द को मुक्तिदान करते हैं—किन्तु कभी प्रेम भक्ति प्रदान नहीं करते हैं। इस नीति के अनुसार भक्त के अधीन न होकर प्रेम प्रदान नहीं करते हैं। तज्जन्य साक्षात् सम्बन्ध में साधन भक्ति का ही श्रीभगवद् वशीकरणत्व गुण है। इस प्रकार जानना होगा।

अभिप्राय यह है कि—भक्त को प्रेमदान करने के पहले श्रीभगवान् यदि भक्ति द्वारा वशीभूत नहीं होते हैं तो कैसे अदेय वस्तु प्रदान करेंगे? भा० ११।१४।२२ में उक्त "धर्मः सत्यदयोपेतः" श्लोक में भक्ति को धर्मादि साधन प्रतियोगी रूप में उल्लेख करने के कारण यह श्लोक भी साधन भक्ति महिमा वर्णन पर ही है। कारण, साधन भक्ति से ही चित्त शुद्धि होती है,— इस प्रकार उल्लेख अनेक स्थलों में दृष्ट होता है। भा० ११।१४।२३ में उक्त "कथ विना रोमहर्षं" श्लोक भी साधन भक्ति महिमा वर्णन पर है, कारण, साधन भक्ति की फल स्वरूपा भाव भक्ति द्वारा हृदय शोधित होता है, कहने से तात्पर्य्यतः साधन भक्ति की महिमा का प्रकाश होता है। कारण, साधन भक्ति का अनुष्ठान करते करते मोक्ष सुख के प्रति तुच्छता बुद्धि होती है, अनन्तर चित्त विगलित होता है, अतएव भा० ११।१४।१८ में वर्णित "बाध्यमानोऽपि मद्भक्तः" इत्यादि श्लोक समूह का वर्णन जो साधन भक्ति प्रकरण में हुआ है, इस का समन्वय उत्तम हुआ है।

प्रकरण प्रवक्ता श्रीभगवान् हैं ॥१४७॥

१४८—साक्षात् भक्ति की कथा तो दूर है—अर्थात् साक्षाद् भक्ति जो, परम धर्म है, एवं मन का अगोचर फल प्रदान में समर्था है, उस की महिमा की कथा तो दूर है, जब लौकिक कर्म समूह का अर्पण भगवान् को करने से भक्ति होती है, एवं भक्ति का आनुगत्य है, वे सब कर्म भी जो परम धर्म है, उसका उदाहरण भा० ११।२९।२१ के द्वारा प्रस्तुत करते हैं—

"यो यो मयि परे धर्मः कल्पयते निष्फलाय चेत्।
तदायासो निरर्थः स्याद् भयादेरिव सत्तमः ॥"

इत्यादौ । तथा पापघ्नत्वादिकं तस्याः श्रवणादिनापि भवतीत्यप्युक्तम् (भा० ११।२।१२) "श्रुतोऽनुपठितो ध्यातः" इत्यादौ ।

पाद्मे माघ-माहात्म्ये देवदूत-वाक्यञ्च,—

"आहास्मान् यमुना-भ्राता सादरं हि पुनः पुनः भवद्भिर्वैष्णवस्त्याज्यो विष्णुञ्चेद्भजते नरः ॥३८७॥
वैष्णवो यद्गृहे भुङ्क्ते येषां वैष्णवसङ्गतिः । तेऽपि वः परिहार्य्याः स्युस्तत्सङ्ग-हतकिल्विषाः ॥"३८८॥

बृहन्नारदीये यज्ञमाल्युपाख्यानान्ते,—

"हरिभक्तिपराणान्तु सङ्गिनां सङ्गमाश्रितः । मुच्यते सर्व्वपापेभ्यो महापातकवानपि ।"३८९॥

---

टीका—किञ्च यो य इति अयमर्थः । किं वक्तव्यं, मद् धर्मस्य न ध्वंस इति । यतो लौकिकोऽपि यो यो निरर्थो व्यर्थ आयासः सोऽपि मयि परे निष्फलाय चेत् कल्पयते निष्कामतया अर्पितश्चेत् तर्हि धर्म एव स्यात् । निरर्थायासे दृष्टान्तः । यथा भय शोकादे र्हेतोः पलायनक्रन्दनादिक्लेशस्तद्वत् ॥

श्रीकृष्ण—श्रीउद्धव को कहे थे,— हे उद्धव ! मद्विषयक धर्म्म का ध्वंस नहीं होता है । कारण, जो सब लौकिक कर्म्म निरर्थक हैं, अर्थात् विफल श्रम हैं, वे सब कर्म भी यदि निष्काम भाव से मुझ को अर्पित होते हैं तो, वे सब भी धर्म्म रूप में परिगणित होते हैं । लौकिक कर्म जो विफल परिश्रम के हैं, अर्थात् परिश्रम बहुल होकर भी फल शून्य हैं, उस में दृष्टान्त उपस्थित करते हैं । जिस प्रकार अत्यन्त भय से पलायन करना, एवं शोकादि हेतु क्रन्दन करना, प्रभृति दुःख जिस प्रकार विफल होते हैं, अर्थात् पलायन के द्वारा भय की निवृत्ति नहीं होती है, एवं क्रन्दन से शोकादि की निवृत्ति भी नहीं होती है । उस प्रकार लौकिक कर्म में परिश्रम बाहुल्य तो है ही किन्तु फल भी नहीं है । विशुद्ध भक्ति के श्रवण कीर्त्तन द्वारा पाप निवृत्ति होती है । उसका उदाहरण भ० ११।२।१२ में है—

"श्रुतोऽनुपठितो ध्यात आदृतो वानुमोदितः ।
सद्य पुनाति सद्धर्म्मो देव विश्वद्रुहोऽपि हि ॥"

देवर्षि नारद—वसुदेव को कहे थे—हे वसुदेव ! अनुमोदन करने से विश्वद्रुह पातकों से भी पातकी गण पवित्र होते हैं । पद्म पुराण के माघमास स्नान माहात्म्य में यमदूत वृन्द के वाक्य भी इस प्रकार है—

"आहास्मान् यमुना-भ्राता सादरं हि पुनः पुनः ।
भवद्भिर्वैष्णवस्त्याज्यो विष्णुञ्चेद्भजते नरः ॥३८७॥
वैष्णवो यद्गृहे भुङ्क्ते येषां वैष्णवसङ्गतिः ।
तेऽपि वः परिहार्य्याः स्युस्तत्सङ्ग-हतकिल्विषाः ॥"३८८॥ इति ।

यमुना भ्राता यम, आदर के सहित हम सब को वारंवार कहे हैं, जो मनुष्य श्रीविष्णु का भजन करते हैं तुम सब उन सब वैष्णवों को छोड़ देना । अर्थात् उन सब में मेरा कोई अधिकार नहीं है । यहाँ तक कि—जिस के घर में वैष्णव भोजन करते हैं, एवं जिनको वैष्णव सङ्ग है, उनको भी परित्याग करना । कारण, वैष्णव सङ्ग प्रभाव से उनके समस्त पातक विदूरित हो गये हैं ॥३८७–३८८॥

बृहन्नारदीय के यज्ञ माली उपाख्यान में उक्त है—

"हरिभक्ति पराणान्तु सङ्गिनां सङ्ग माश्रितः ।
मुच्यते सर्व पापेभ्यो महापातकवानपि ॥"३८९॥

जो मानव, हरिभक्ति परायण भक्त वृन्द के सङ्ग लाभ से कृतार्थ हुए हैं, उनके सङ्ग लाभ करने से

ततः सुतरामेवेदमादिदेश, (भा० ६।३।२९)—

(१४८) "जिह्वा न वक्ति भगवद्गुणनामधेयं, चेतश्च न स्मरति तच्चरणारविन्दम् ।

कृष्णाय नो नमति यच्छिर एकदापि, तानानयध्वमसतोऽकृत-विष्णुकृत्यान् ।।"३९०।।

आस्तां तावत् (भा० ६।३।२८) "तानानयध्वम्" इत्यादिकेनैतत्पूर्व्वद्वितीयपद्येनोक्तानां मुकुन्दपादारविन्द—मकरन्दरसविमुखानामानयनवार्त्ता, तथा (भा० ६।३।२७) "ते देवसिद्ध-" इत्यादिकेनैतत्पूर्व्वतृतीयपद्येनोक्तानां देव-सिद्ध-परिगीत-पवित्रगाथानां साधूनां समदृशां

---

महापातकी भी समस्त पापों से मुक्त हो जाते हैं ।।३८९।।

अतएव धर्मराज श्रीयम, स्वयं किङ्कर गण के प्रति कहे थे । (भा० ६।३।२९)

(१४८) "जिह्वा न वक्ति भगवद्गुणनामधेयं, चेतश्च न स्मरति तच्चरणारविन्दम् ।

कृष्णाय नो नमति यच्छिर एकदापि, तानानयध्वमसतोऽकृत–विष्णुकृत्यान् ।।"३९०।।

टीका—किञ्च जिह्वेत्यादि । यत् येषां जिह्वेत्याद्यान्वयः । न कृतं विष्णुकृत्यं भगवद् व्रतं यैः । एकदापीति सर्वत्राप्यन्वयः ।

जिस की जिह्वा एकवार भी श्रीभगवान् के नाम गुणादि का उच्चारण नहीं करती है, जिस का चित्त भगवच्चरणारविन्द का स्मरण नहीं करता है, वह सब अकृत विष्णु कृत्य हैं, जीवन में एकवार भी श्रीविष्णु सम्बन्धीय कार्य्य नहीं किये हैं, उन सब असाधु गण को मेरे संयमनीपुरी में ले आओ ।

धर्म राज यमने, विष्णु सम्बन्धि कार्य्य न करने के कारण जिस को ले आने के निमित्त आदेश किया था । वह तो समीचीन ही है । किन्तु इस के पूर्व श्लोक में आपने कहा है— (भा० ६।३।२८)

"तानानयध्वमसतो विमुखान् मुकुन्द पादारविन्दमकरन्दरसादजस्राम् ।

निष्किञ्चनैः परमहंस कुलैरसङ्गै र्जुष्टाद् गृहे निरयवर्त्मनि बद्धतृष्णान् ।।

टीका—के तर्हि, दण्डार्थमानेया इत्यत्राह तानिति द्वाभ्याम् । असतो दुष्टान्, तानेवाह,— मुकुन्दपादारविन्दयो र्यो मकरन्द रूपो रसः, तस्मात् विमुखान्, कथम्भूतात् ? निष्किञ्चनैरजस्रं जुष्टात्, तेषां ज्ञापकमाह निरयवर्त्मनि—स्वधर्म शून्ये गृहेबद्धा तृष्णा यै स्तान् ।

हे दूतगण ! उन सब असत्गण को मेरेपास ले आओ, जो निष्किञ्चन, अनासक्त परम हंस गण कर्त्तृक अनवरत निषेवित मुकुन्द चरणारविन्द रस से विमुख हैं एवं नरक के द्वार स्वरूप गृहस्थ सुख वासना में आसक्त चित्त है, इस प्रकार असत् गण को ही मेरे यहाँ ले आओ ।

इस श्लोक में असाधु गण की आनयन वार्त्ता उद् घोषित है, किन्तु इस के पूर्व श्लोक में (भा० ६।३। २७) उन्होंने कहा है—

"ते देवसिद्ध परिगीत पवित्र गाथा ये साधवः समदृशो भगवत् प्रपन्नाः ।

तान् नोपसीदत हरेर्गदयाभिगुप्तान् नैषां वयं नच वयः प्रभवाम् दण्डे ।।

जो, साधु हैं, सर्वभूत में समदृष्टि सम्पन्न हैं, एवं भगवत् प्रपन्न हैं, उनसब महापुरुष वृन्द के गुणसमूह का कीर्त्तन, देव एवं सिद्ध पुरुष गण करते रहते हैं । वे सब सर्वदा ही श्रीहरि की गदा के द्वारा अभिरक्षित हैं, सुतरां उन सब महापुरुष वृन्द के निकट तुम सब कभी न जाना । उनसब को दण्डित करने में हम सब समर्थ नहीं हैं । यहाँतक कि—काल भी उनसब को संयमन करने में अक्षम है । कारण, जो लोक भगवत् शरणागत हैं, वे सब भक्त, काल, कर्म एवं मायातीत हैं, इस प्रकार महापुरुष वृन्द को आनयन करने में यमराज का निषेध तो है ही, किन्तु जिस की जिह्वा, कभी भी गुण, नाम का कीर्त्तन मानव जन्म को प्राप्त

भगवत्परानां निकटगमन-निषेधवार्त्तापि, यद्यस्य जिह्वापि श्रीभगवतो गुणञ्च नामधेयञ्च वा एकदा जन्ममध्ये यदा कदापि न वक्ति जिह्वाया अभावे चेतश्च तच्चरणारविन्दमेकदापि न स्मरति, चेतसो विक्षिप्तत्वे शिरश्च कृष्णाय कृष्णं लक्षीकृत्य नो नमति,

"शाठ्येनापि नमस्कारं कुर्व्वतः शार्ङ्गधन्विने । शतजन्मार्जितं पापं तत्क्षणादेव नश्यति ॥"३९१॥

इति स्कान्दोक्त-महिमानं नमस्कारं न करोति, तानानयध्वम् । तत्र हेतुः,— असतः, असत्त्वे हेतुः,— अकृत-विष्णुकृत्यात्, यथा च स्कान्दे रेवाखण्डे श्रीब्रह्मोक्तौ,—

"स कर्त्ता सर्व्वधर्म्माणां भक्तो यस्तव केशव । स कर्त्ता सर्व्वपापानां यो न भक्तस्तवाच्युत ॥३९२॥

पापं भवति धर्म्मोऽपि तवाभक्तैः कृतो हरे । निःशेषधर्म्मकर्त्ता वाप्यभक्तो नरके हरे ।

सदा तिष्ठति भक्तस्ते ब्रह्महापि विमुच्यते ॥"२९३॥

पाद्मे च,—

"मन्निमित्तं कृतं पापमपि धर्म्माय कल्पते । मामनादृत्य धर्म्मोऽपि पापं स्यान्मत् प्रभावतः ॥३९४॥

---

कर कभी नहीं करती है, जिह्वा के अभाव में चित्त भी भगवत् चरणारविन्द का स्मरण नहीं करता है, विक्षिप्त चित्त के कारण यदि स्मरण नहीं होता तो भी यदि श्रीकृष्ण को लक्ष्य करके एकवार मात्र भी नमस्कार नहीं करता है तो उसका फल वर्णन करते हैं—दूतगण—उस व्यक्ति को मदीय भवन में ले आना। स्कन्द पुराणोक्त नमस्कार महिमा को कहते हैं—

"शाठ्येनापि नमस्कारं कुर्व्वतः शार्ङ्गधन्विने ।
शतजन्मार्जितं पापं तत्क्षणादेव नश्यति ॥"३९१॥

अर्थात् शठता पूर्वक भी यदि कोई व्यक्ति शार्ङ्गधन्वा श्रीविष्णु को प्रणाम करता है तो, उस के शत जन्मार्जित पाप तत्क्षणात् विनष्ट हो जाता है, । एतादृश महिमान्वित नमस्कार भी जो व्यक्ति नहीं करता है,— उस पापी को ले आना। कारण, वह असत् है। जो लोक श्रीविष्णु सम्बन्धी कुछ भी कार्य्य नहीं करते हैं, वे सब अन्यान्य सद् गुण युक्त होने से भी असत् हैं। इस अभिप्राय से ही स्कन्द पुराण के रेवाखण्ड में श्रीब्रह्मा ने कहा भी है—

" स कर्त्ता सर्व्वधर्म्माणां भक्तो यस्तव केशव ।
स कर्त्ता सर्व्वपापानां यो न भक्तस्तवाच्युत ॥३९२॥
पापं भवति धर्म्मोऽपि तवाभक्तैः कृतो हरे । निःशेषधर्म्मकर्त्ता वाप्यभक्तो नरके हरे ।
सदा तिष्ठति भक्तस्ते ब्रह्महापि विमुच्यते ॥"३९३॥

हे केशव ! जो, तुम्हाराभक्त है, वह समस्त धर्म का कर्त्ता है, हे अच्युत ! जो तुम्हारा भक्त नहीं है, वह समस्त पाप कर्त्ता है। हे हरे ! तुम्हारे अभक्त के द्वारा अनुष्ठित धर्म भी पाप में परिणत होता है। हे हरे ! निःशेष धर्मानुष्ठान करके भी यदि वह तुम्हारे भक्ति का आचरण नहीं करता है तो, वह अभक्त जन सर्वदा नरक वास करता है, और भक्तिमान् जन, ब्रह्महत्या करके भी समस्त पापों से मुक्त हो जाता है ॥३९२॥ पद्म पुराण में भी लिखित है—

"मन्निमित्तं कृतं पापमपि धर्म्माय कल्पते ।
मामनादृत्य धर्म्मोऽपि पापं स्यान्मत्प्रभावतः ॥"३९४॥

युक्तञ्चैतत्, (भा० ७।११।११) —"श्रवणं कीर्त्तनञ्चास्य" इत्यादिना, (भा० ११।५।२-३) मुखबाहूरुपादेभ्यः" इत्यादिना, (भा० ११।१८।४३) "सर्व्वेषां मदुपासनम्" इत्यादिना, (पाद्मे) "सर्व्वे विधिनिषेधाः स्युः" इत्यादिना च परम-नित्यत्वादि-प्रतिपादनात्। एषां कीर्त्तनादीनां

मन्निमित्त कृत पाप भी धर्म में परिणत होता है। मेरा अनादर करके कृत धर्म भी मेरा प्रभाव से पाप रूप में परिणत होता है। यह सब वाक्य युक्ति युक्त हैं। कारण,—भा० ७।१२।११-१२ में उक्त है—

"श्रवणं कीर्त्तनञ्च स्य स्मरणं महतां गतेः।
सेवेज्यावनतिर्दास्यं सख्यमात्म समर्पणम्।

नृणामयं परोधर्म सर्वेषां समुदाहृतः।
त्रिशल्लक्षणवान् राजन् सर्वात्मा येन तुष्यति॥"

टीका—अस्य श्रीकृष्णस्य श्रवणादयो नव। इज्या—अर्च्चनम्॥११। एवं त्रिंशल्लक्षणवान्॥"१२॥

श्रीनारद, युधिष्ठिर को कहे थे—महापुरुष मात्र का एकमात्र आश्रय श्रीहरि का श्रवण, कीर्त्तन स्मरण, उनकी सेवा, पूजा, उनको प्रणाम, उनका दास्य, सख्य, उनको आत्मनिवेदन, यह नवविध धर्म आचरण करना मानव मात्र को अवश्य चाहिये। यह मुख्य कर्त्तव्य है, अर्थात्, समस्त मनुष्य के पक्ष में ही श्रीहरि कथा श्रवण कीर्त्तनादि करना अवश्य कर्त्तव्य है। भा० ११।५।२-३ में उक्त है—

"मुखबाहूरुपादेभ्यः पुरुषस्याश्रमैः सह।
चत्वारो जज्ञिरेवर्णा गुणैर्विप्रादयः पृथक्।
य एषां पुरुषं साक्षादात्म प्रभवमीश्वरम्।
न भजन्त्यवजानन्ति स्थानाद् भ्रष्टाः पतन्त्यधः॥"

टीका—स्वजनकस्य गुरोर्भगवतोऽनादराद् गुरुद्रोहेण दुर्गतिं यान्तीति वक्तुं भगवतः सकाशाद् वर्णाश्रमाणामुत्पत्तिमाह मुखेति। गुणैः सत्त्वेन विप्राः। सत्त्वरजोभ्यां क्षत्रियः। रजस्तमोभ्यां वैश्यः, तमसा शूद्र इति। एषां मध्ये ये अज्ञात्वा न भजन्ति, ये च ज्ञात्वापि अवजानन्ति। आत्मनः प्रभवो जन्म यस्मात् तम्। तदभजने कृतघ्नतामप्याह,—ईश्वरमिति स्थानात् वर्णाश्रमाद् भ्रष्टाः॥

श्रीचमस योगीन्द्र—निमि महाराज को कहे थे—द्वितीय पुरुष गर्भोदशायी श्रीप्रद्युम्न के मुख बाहु, उरु एवं चरण से सत्त्व, रजः, एवं तमोगण के सहित क्रमशः ब्राह्मण, क्षत्रिय, वैश्य एवं शूद्र—यह चारवर्ण की उत्पत्ति हुई है, एवं उक्त पुरुष के जघन हृदय, वक्षःस्थल एवं मस्तक से क्रमशः सत्त्वादि गुण के सहित गृहाश्रम, ब्रह्मचर्य्य वानप्रस्थ—एवं सन्न्यास नामक आश्रम चतुष्टय की उत्पत्ति हुई है। श्रीभगवान् श्रीहरि के सहित अभिन्न पुरुष ही यह चार वर्ण एवं आश्रम का जनक हैं। चारवर्णस्थ एवं चार आश्रमस्थ यदि कोई निज जनक श्रीभगवान् का भजन नहीं करता है, तो अवज्ञा ही करता है। ऐसा होने पर पितृ द्रोही पातकी निज उच्चस्थान से भ्रष्ट होकर अधः पतित होता है। भा० ११-१८-४३ में उक्त है—

"ब्रह्मचर्य्यं तपः शौचं सन्तोषो भूत सौहृदम्।
गृहस्थस्याप्यृतौ गन्तुः सर्वेषां मदुपासनम्॥"

टीका–अन्य धर्म्मान् काश्चिद् गृहस्थाप्यतिदिशति। ब्रह्मचर्य्यमिति। तपः स्वधर्म्मः। शौचं--रागादि राहित्यञ्च। तस्य ब्रह्मचर्य्य प्रकारमाह ऋतौ गन्तुरिति।

गृहस्थ का जो अपर धर्म आचरणीय है, उस को कहते हैं-ब्रह्मचर्य्य, तपः शौच, सन्तोष, प्राणिमात्र

त्रयाणामपि सुकराणामभावे परेषां सुतरामेवाभावो भवेदिति सामान्येनैव विष्णुकृत्यरहितत्व-मुक्तम् । जिह्वादीनां करणभूतानामपि कर्त्तृत्वेन निर्देशः पुरुषानिच्छयापि यथाकथञ्चित् कीर्त्तनादिकमादत्ते । 'चरणारविन्दम्' इति विशेषाङ्गनिर्देशः श्रीयमस्य भक्तिख्यापक एव, न तु तन्मात्रस्मरणनियामकः । अत्र अभक्तानामानयनेन भक्तानामनानयनमेव विधीयते,— आनयनस्योत्सर्गसिद्धत्वात्, "वैवस्वतं संयमनं प्रजानाम्" इति श्रुतेः । (भा० ६।१।१६)—

---

के प्रति सौहार्द्य, एवं ऋतु काल में भार्य्यागमन प्रभृति आचरणीय धर्म हैं, किन्तु समस्त वर्ण एवं समस्त आश्रमों में एकमात्र आचरणीय अनिवार्य्य धर्म है—मदीय उपासना । इस से प्रतिपन्न हुआ है कि सर्ववर्णो एवं आश्रमीयों का अवश्य कर्त्तव्य श्रीभगवदुपासना है ।

पद्म पुराण में तो समस्त विधिनिषेधों के सार रूप में भगवदुपासना ही विहित है—

"स्मर्त्तव्यः सततं विष्णु र्विस्मर्त्तव्यो न जातुचित् ।
सर्वेविधि निषेधाः स्युरेतयो रेव किङ्कराः ॥"

सर्वदा विष्णु का स्मरण करना चाहिये, कभी भी श्रीविष्णु का विस्मरण नहीं होना चाहिये । निखिल विधि—श्रीविष्णु स्मरण के ही किङ्कर हैं, एवं निखिल निषेध भी श्रीविष्णु विस्मरण के ही किङ्कर हैं । अर्थात् राज सम्मान से जिस प्रकार राज किङ्कर वृन्द का सम्मान होता है, उस प्रकार श्रीविष्णु स्मरण से समस्त विधि का सम्मान, होता है, राज सम्मान न करने से जैसे सब किङ्करों का असम्मान होता है । तद्रूप ही श्रीविष्णु स्मरण न करने से समस्त विधियों का लङ्घन होता है । इत्यादि प्रमाणों से भगवद् भक्ति का नित्यत्व एवं अवश्य कर्त्तव्यत्व प्रति पादित हुआ है । अतएव सुख साध्य कीर्त्तन, स्मरण, एवं प्रणाम, यह तीन के मध्य में एक का अनुष्ठान न होने से अवश्य ही अन्याङ्ग भक्ति का अनुष्ठान नहीं होगा । इस अभिप्राय से ही मूल श्लोक में कहा गया है—जिन्होंने विष्णुकृत्य नहीं किया है, उन को मदीय निर्य्यातन भवन में ले आना । अर्थात् यमराजने कहा था "अकृत विष्णु कृत्यम्" अर्थात् श्रीविष्णु स्मरण, कीर्त्तन, नमन, यह तीन के मध्य में जिस का एक भी नहीं है—उस को जानना होगा, कि उस में विष्णु सम्बन्धी कोई कृत्य नहीं हैं । अतएव उनसब असत् व्यक्ति गणका मेरे पास ले आओ । यहाँ ज्ञातव्य यह है कि-मूल श्लोक में करण स्थानीय जिह्वा, चित्त एवं मस्तक को कर्त्तृ स्थानीय रूप में उल्लेख किया गया है । अर्थात् जो जिह्वा के द्वारा श्रीहरि के नाम, गुण कीर्त्तन नहीं करता है, इस प्रकार न कह कर, कहा गया है—जिसकी जिह्वा श्रीहरि के गुण नाम कीर्त्तन नहीं करती है, इस से जिह्वा कर्त्ता रूप में उल्लिखित हुई है । इस से व्यक्त हुआ है कि—श्रीभगवन्नाम उच्चारण कारी व्यक्ति की अनिच्छा से भी जैसे तैसे यदि कीर्त्तन स्मरणादि भक्त्यङ्ग का अनुष्ठान होता है तो, उस के समीप में तुम सब न जाना । मूल श्लोक में उल्लिखित है—"चेतश्च न स्मरति तच्चरणारविन्दम्" अर्थात् जिस का चित्त श्रीहरि चरणारविन्द का स्मरण नहीं करता है, । इस में जिस भक्त्यङ्ग का उल्लेख हुआ है, अर्थात् यमराज ने भक्ति मात्र को सूचित करने के निमित्त ही 'चरणारविन्द' पद का प्रयोग किया है । श्रीभगवान् के किसी भी अङ्ग का स्मरण, अथवा किसी भी भक्त्यङ्ग का अनुष्ठान करने से ही मानव कृतार्थ होता है । यहाँ अभक्त वृन्द को आनयन करने का आदेश से सुस्पष्ट प्रतीत होता है कि भक्त गण को आनयन न करना ही विधि है । आनयन विधि सामान्य विधि है, कारण, धर्मराज यम ही प्रजावृन्द के संयमन कारी हैं । श्रुति में उक्त हैं-- "वैवस्वतं संयमनं प्रजानाम्" भा० ६।१।१६ में उक्त है—

"सकृन्मनः कृष्णपदारविन्दयो,-र्निवेशितं तद्गुणरागि यैरिह ।
न ते यमं पाशभृतश्च तद्भटान्, स्वप्नेऽपि पश्यन्ति हि चीर्णनिष्कृताः ॥" ३९५॥

इत्यत्र 'तद्गुणरागि' इति विशेषणं तु तेषां तद्दृष्टिपथगमनसामर्थ्यस्यापि यद्घातकम्, तादृश तत्स्मरणस्य प्रभाव-विशेषमेव बोधयतीति । ज्ञेयम् । यथैव नारसिंहे,—

"अहममरगणार्च्चितेन धात्रा, यम इति लोक--हिताहिते नियुक्तः ।
हरिगुरुविमुखान् प्रशास्मि मर्त्यान्, हरिचरणप्रणतान् नमस्करोमि ॥" ३९६॥

तथैवामृतसारोद्धारे स्कान्दवचनम्—

"न ब्रह्मा न शिवाग्नीन्द्रा नाहं नान्ये दिवौकसः । शक्तास्तु निग्रहं कर्त्तुं वैष्णवानां महात्मनाम् ।" ३९७।
श्रीयमः स्वदूतान् ॥

१४९ । तथा सकृद्भजनेनैव सर्व्वमप्यायुः सफलमित्युदाहृतमेव श्रीशौनक-वाक्येन

---

"सकृन्मनः कृष्णपदारविन्दयो-,र्निवेशितं तद्गुणरागि यैरिह ।
न ते यमं पाशभृतश्च तद्भटान्, स्वप्नेऽपि पश्यन्ति हि चीर्णनिष्कृताः ॥" ३९५॥

टीका—भक्तिः स्वल्पापि पुनात्येवेत्याह, सकृदिति । तस्य गुणेषु रागमात्रमस्ति न तु ज्ञानं यस्य, तन्मनः, तावतैव चीर्णकृतं निष्कृतं प्रायश्चित्तं यैः ।

श्रीशुकदेव, श्रीपरीक्षित् को कहे थे—स्वल्प परिमाण में अनुष्ठिता भक्ति भी पातकी व्यक्ति को शुद्ध करती है जो एकवार मात्र श्रीहरि के गुणोंमें रुचिसम्पन्नमन को श्रीकृष्णचरण युगलमें निवेश कर सकते हैं, वे स्वप्न में भी यम दर्शन नहीं करते हैं, अथवा, उनके पाशधारी किङ्कर गण को दर्शन नहीं करते हैं। कारण, स्वल्पानुष्ठित भक्ति योग के प्रभाव से ही निखिल पापों का प्रायश्चित्त विहित हुआ है। उक्त श्लोक में "तद् गुणरागि" विशेषण मन का है, उस प्रकार विशेषण प्रदान का उद्देश्य, भक्त वृन्द के दृष्टि पथ में उपस्थित होने का सामर्थ्य विधातक भगवत् स्मरण है, इस को सूचित करना है। उक्त अभिप्राय से ही श्रीनृसिंह पुराण में लिखित है—

"अहममरगणार्च्चितेन धात्रा, यम इति लोक-हिताहिते नियुक्तः ।
हरिगुरुविमुखान् प्रशास्मि मर्त्यान्, हरिचरणप्रणतान् नमस्करोमि ॥" ३९६॥

मैं देवगण पूजित ब्रह्मा कर्त्तृक "यम" यह नाम से अभिहित होकर लोक मात्र के हित एवं अहित साधन में नियुक्त हूँ। जो सब मनुष्य, श्रीहरि गुरु चरण विमुख हैं, उन सब को शासन करता हूँ, एवं जो लोक श्रीहरि चरणों में प्रणत हैं, उन को नमस्कार करता हूँ ॥३९६॥

उस प्रकार अमृतसारोद्धार में स्कन्द पुराण का वचन भी है—

"न ब्रह्मा न शिवाग्नीन्द्रा नाहं नान्ये दिवौकसः ।
शक्तास्तु निग्रहं कर्त्तुं वैष्णवानां महात्मनाम् ॥" ३९७॥

ब्रह्मा, शिव, अग्नि, इन्द्र, एवं मैं (यम) अन्यान्य देवगण, महात्मा वैष्णव वृन्द को निगृहीत करने में समर्थ नहीं है ।३९७॥

श्रीयम—निज दूतवृन्द को कहे थे ॥१४८॥

१४९। उस प्रकार एकवार भजन मात्र से ही निखिल आयु—सफल होती हैं,—उस का उल्लेख

(भा० २।३।१७) "आयुर्हरति वै पुंसामुद्यन्नस्तञ्च यन्नसौ" इत्यादि-ग्रन्थेन। एवं भक्त्या-भासेनाप्यजामिलादौ पापघ्नत्वं दृश्यते। तथा सर्व्वकर्म्मादि-विध्वंसपूर्व्वक-परमगतिप्राप्तावपि स्वल्पायासेनैव भक्तेः कारणत्वं श्रूयते लघुभागवते—

"वर्त्तमानञ्च यत् पापं यद्भूतं यद्भविष्यति। तत् सर्व्वं निर्दहत्याशु गोविन्दानलकीर्त्तनात् ॥"३९८॥

तथैव च तत्र यथाकथञ्चित् तद्भक्तिसम्बन्धस्य कारणत्वं दृश्यते ब्रह्मवैवर्त्ते—

"स समाराधितो देवो मुक्तिकृत् स्याद्यथा तथा। अनिच्छयापि हुतभुक् संस्पृष्टो दहति द्विजाः ॥"३९९॥

स्कान्दे उमा-महेश्वर-संवादे,—

"दीक्षा-मात्रेण कृष्णस्य नरा मोक्षं लभन्ति वै। किं पुनर्ये सदा भक्त्या पूजयन्त्यच्युतं नराः ॥"४००॥

बृहन्नारदीये—

"अकामादपि ये विष्णोः सकृत् पूजां प्रकुर्व्वते। न तेषां भवबन्धस्तु कदाचिदपि जायते ॥"४०१॥

---

(भा० २।३।१७) श्रीशौनक वाक्य में है--

"आयुर्हरति वै पुंसामुद्यन्नस्तञ्च यन्नसौ।
तस्यर्त्ते यत् क्षणो नीत उत्तमः श्लोक वार्त्तया ॥

टीका—किञ्च वृथैव क्षीणमायुरिति। असौ सूर्य्यः उद्यन् उद्गच्छन्, अस्तमदर्शनञ्च यन् गच्छन्, यत् येन, क्षणो नीतः, तस्य आयुर्ऋते वर्जयित्वा, वृथैव हरति ॥

र्य्य, उदयास्त के द्वारा पुरुष की आयु को हरण करते हैं, किन्तु जो मानव, श्रीहरि कथा प्रसङ्ग में क्षण काल अतिवाहित करते हैं, उनकी आयुः को हरण नहीं करते हैं।

अजामिल प्रभृति में तो भक्ति के आभास मात्र से भी निखिल पाप विनष्ट होने का दृष्टान्त दृष्ट होता है। स्वल्पायास द्वारा अनुष्ठित भक्ति,समस्त अर्जित पाप कर्म को विनष्ट करके परमगति प्रदान करती है,उस का वर्णन भी लघुभागवत में है।

"वर्त्तमानञ्च यत् पापं यद्भूतं यद्भविष्यति।
तत् सर्व्वं निर्दहत्याशु गोबिन्दानलकीर्त्तनात् ॥"३९८॥

अनलस्थानीय श्रीगोविन्दनाम कीर्त्तन के प्रभाव से वर्त्तमान्, भूत, एवं भविस्यत् कालीन जितने भी पाप हैं, वे समस्त पाप विनष्ट हो जाते हैं। ब्रह्मवैवर्त्त पुराण में उस प्रकार वर्णित है, कि यथा कथञ्चित् भक्ति के सम्बन्ध मात्र से निखिल पाप विनष्ट होते हैं।

"स समाराधितो देवो मुक्तिकृत् स्याद् यथा तथा।
अनिच्छयापि हुतभुक् संस्पृष्टो दहति द्विजाः ॥"३९९॥

हे द्विजगण ! अग्नि, जिस प्रकार अनिच्छा से भी संस्पृष्ट होकर दग्ध करता है, उस प्रकार भगवान् श्रीहरि जिस किसी प्रकार से आराधित होकर मुक्ति प्रदान करते हैं। स्कन्द पुराण के उमामहेश्वर संवाद में उक्त है—

"दीक्षा मात्रेण कृष्णस्य नरा मोक्षं लभन्ति वै।
किं पुन र्ये सदा भक्त्या पूजयन्त्यच्युतं नराः ॥"४००॥

मानवगण, श्रीकृष्ण मन्त्र में दीक्षित होने से मुक्त होते हैं, यह निश्चय है। और जो लोक सर्वदा

**पाद्मे देवद्युति-स्तुतौ,—**

"सकृदुच्चारयेद्यस्तु नारायणमतन्द्रितः। शुद्धान्तःकरणो भूत्वा निर्व्वाणमधिगच्छति ॥४०२॥

**तत्रान्यत्र,—**

"सम्पर्काद्यदि वा मोहाद्यस्तु पूजयते हरिम्। सर्व्वपापविनिर्मुक्तः प्रयाति परमं पदम् ॥"४०३॥

**इतिहास-समुच्चये श्रीनारद-पुण्डरीक-संवादे च,—**

"ये नृशंसा दुराचाराः पापाचाररताः सदा। ते यान्ति परमं धाम नारायणपदाश्रयाः ॥४०४॥
लिप्यन्ते न च पापेन वैष्णवा वीतकल्मषाः। पुनन्ति सकलान् लोकान् सहस्रांशुरिवोदितः ॥४०५॥
जन्मान्तरसहस्रेषु यस्य स्यान्मतिरीदृशी। दासोऽहं वासुदेवस्य सर्व्वान् लोकान् समुद्धरेत् ॥४०६॥
स याति विष्णुसालोक्यं पुरुषो नात्र संशयः। किं पुनस्तद्गतप्राणाः पुरुषाः संयतेन्द्रियाः ॥"४०७॥

---

भक्ति पूर्वक श्रीकृष्ण की पूजा करते हैं, वे लोक, मुक्त होंगे, इस में कहना ही क्या है ? बृहन्नारदीय में भी लिखित है—

"अकामादपि ये विष्णोः सकृत पूजां प्रकुर्व्वते।
न तेषां भवबन्धस्तु कदाचिदपि जायते ॥"४०१॥

जो लोक, अनिच्छा से श्रीविष्णु की पूजा एकवार मात्र करते हैं, उनको कभी भी भवबन्धन प्राप्त करना नहीं पड़ता है ॥१०४॥

पद्म पुराण की देवद्युति स्तुति में उक्त है—

"सकृदुच्चारयेद्यस्तु नारायणमतन्द्रितः।
शुद्धान्त करणो भूत्वा निर्व्वाणमधिगच्छति ॥"

जो मानव, आलस्य त्यागकर एक बार भी श्रीनारायण नामोच्चारण करता है, वह शुद्ध चित्त होकर मोक्षलाभ का अधिकारी होता है ॥४०२॥

पद्म पुराण के अन्यस्थल में लिखित है—

"सम्पर्काद्यदि वा मोहाद्यस्तु पूजयते हरिम्।
सर्व्वपापविनिर्मुक्तः प्रयाति परमं पदम् ॥"४०३॥

जो मानव, किसी सम्पर्क से अथवा मोह से श्रीहरि की पूजा करता है, वह समस्त पापों से मुक्त होकर परम पद को प्राप्त करता है।

इतिहास समुच्चय के श्रीनारद पुण्डरीक संवाद में लिखित है—

"ये नृशंसा दुराचाराः पापाचार-रताः सदा।
ते यान्ति परमं धाम नारायणपदाश्रयाः ॥४०४॥
लिप्यन्ते न च पापेन वैष्णवा वीतकल्मषाः।
पुनन्ति सकलान् लोकान् सहस्रांशुरिवोदितः ॥४०५॥
जन्मान्तरसहस्रेषु यस्य स्यान्मतिरीदृशी।
दासोऽहं वासुदेवस्य सर्व्वान् लोकान् समुद्धरेत् ॥४०६॥
स याति विष्णुसालोक्यं पुरुषो नात्र संशयः।
किं पुनस्तद्गतप्राणाः पुरुषाः संयतेन्द्रियाः ॥"४०७॥

अतएव—

"सकृदेव प्रपन्नो यस्तवास्मीति च याचते। अभयं सर्व्वथा तस्मै ददाम्येतद्व्रतं मम॥"४०८॥

इति रामायणे श्रीरामचन्द्रवाक्यञ्च—

"सकृदेव प्रपन्नो यस्तवास्मीति च याचते। अभयं सर्व्वथा तस्मै ददाम्येतद्व्रतं हरेः॥४०९॥

इति च गरुड़पुराणम्, तथा चाहु, (भा० १।१।१४)—

(१४९) "आपन्नः संसृतिं घोरां यन्नाम विवशो गृणन्।
ततः सद्यो विमुच्येत यद्बिभेति स्वयं भयम्॥"४१०॥ इति।

स्पष्टम्॥ श्रीशौनकः॥

---

जो लोक, कुटिल चित्त, दुराचार, एवं सर्वदा पापाचार रत हैं—वे भी यदि श्रीनारायण के चरणों में शरणागत होते हैं, तो, जहाँ जाने से पुनर्वार प्रत्यावर्त्तन नहीं होता है, वे सब उस लोक को जाते हैं। ॥४०४॥ वैष्णव वृन्द, कभी पाप में लिप्त नहीं होते हैं। कारण, श्रीहरि चरण आश्रय के प्रभाव से उन सब के पाप प्रवृत्ति का वीज भी विनष्ट हो जाता है, एवं उदित सहस्रांशु के समान समस्त लोकों को पवित्र करने में सक्षम होते हैं ॥४०५॥

सहस्र सहस्र सौभाग्य के फल से "मैं वासुदेव का दास हूँ" इस प्रकार जिसकी मति हुई है, वह लोकों को उद्धार करता है। एवं स्वयं विष्णु लोक में निवास करने का अधिकारी होता है। और जो लोक श्रीहरि में समर्पित आत्मा होते हैं, एवं संयतेन्द्रिय हैं, वे सब निखिल पापों से मुक्त होकर श्रीहरि चरण समीप में तो गमन करते ही हैं ॥४०६–५०७॥

अतएव रामायण में श्रीरामचन्द्र की उक्ति में प्रकाश है—

"सकृदेव प्रपन्नो यस्तवास्मीति च याचते।
अभयं सर्व्वथा तस्मै ददाम्येतद्व्रतं मम॥"४०८॥

जो, शरणागत होकर एकवार भी कहे, हे हरे! मैं आपका हूँ, मैं उसको सर्वथा सर्वदा अभय प्रदान करता हूँ।

श्रीगरुड़ पुराण में भी लिखित है—

"सकृदेव प्रपन्नो यस्तवास्मीति च याचते।
अभयं सर्वथा तस्मै ददाम्येतद्व्रतं हरेः॥"४०९॥

जो, शरणागत होकर एकवार ही कहता है कि—हे हरे! "मैं आप का हूँ" श्रीहरि उसको सब प्रकार से सर्वदा अभय प्रदान करते हैं। यही श्रीहरि का व्रत है। श्रीमद् भागवत के १।१।१४ में उक्त है—

(१४९) "आपन्नः संसृतिं घोरां यन्नाम विवशो गृणन्।
ततः सद्यो विमुच्येत यद्बिभेति स्वयं भयम्॥" ४१०॥

टीका—तत् प्रभावमनुवर्णयन्तस्तद् यशः श्रवणौत्सुक्यमाविष्कुर्वन्ति आपन्न इति त्रिभिः, संसृतिं सुघोरामापन्नः प्राप्तः विवशोऽपि गृणन् ततः संसृतेः। अत्र हेतुः तद् यतो नाम्नः, भयमपि स्वयं बिभेति।

श्रीशौनक श्रीसूत को कहे थे—'जो मानव, घोरतर संसार के मध्य में निपतित है, एवं अत्यन्त पराधीन अवस्था को प्राप्त किया है, वह भी यदि श्रीकृष्ण के नामोच्चारण करता है तो, नाम प्रभाव से तत्

१५०। तथा, (भा० ६।१६।४४)-

(१५०) " न हि भगवन्नघटितमिदं, त्वद्दर्शनान्नृणामखिलपापक्षयः ।
यन्नाम-सकृच्छ्रवणात्, पुक्कशोऽपि विमुच्यते साक्षात् ॥"४११॥

स्पष्टम् ॥ चित्रकेतुः श्रीसङ्कर्षणम् ॥

१५१। अतएवोक्तं श्रीविष्णुधर्म्मोत्तरे,-

"जीवितं विष्णुभक्तस्य वरं पञ्चदिनानि वै । न तु कल्पसहस्राणि भक्तिहीनस्य केशवे ॥"४१२॥

अतो यदत्र तृतीये (भा० ३।३१।१२-२१) गर्भस्थस्य जीवस्य भगवतः स्तुतिः श्रूयते, तस्यैव च संसारोऽपि वर्ण्यते, तत्रोच्यते-जात्येकत्वेनैकवद्वर्णनमिति, वस्तुतस्तु कश्चिदेव जीवो

---

क्षणात् संसार से विमुक्त हो जाता है। कारण, श्रीनाम उच्चारण से निखिल भय के मूलभूत महाकाल भी भीत होते हैं।

प्रकरण प्रवक्ता श्रीशौनक हैं ॥१४९॥

१५०। उस प्रकार ही भा० ६।१६।४४ में लिखित है—

(१५०) " न हि भगवन्नघटितमिदं, त्वद्दर्शनान्नृणामखिलपापक्षयः ।
यन्नाम--सकृच्छ्रवणात्, पुक्कशोऽपि विमुच्यते साक्षात् ॥"४११॥

टीका—एवम्भूतस्य भागवत धर्म्म प्रवर्त्तकस्य तवदर्शनात् सर्वपापक्षयो भवतीति किं चित्रमित्याह-नहीति ॥

चित्र केतु महाराज श्रीसङ्कर्षण देव को कहे थे, हे भगवन्! आप का दर्शन करने से मानव मात्र को निखिल पाप क्षय होते हैं, यह कुछ भी आश्चर्य्य कर नहीं है। कारण, आपके नाम का एकमात्र श्रवण से नीच जाति पुक्कश भी माया बन्धन से साक्षात् विमुक्त हो जाता है।

चित्रकेतु श्रीसङ्कर्षण को कहे थे ॥१५०॥

१५१। अतएव श्रीविष्णु धर्मोत्तर में कथित है—

"जीवितं विष्णुभक्तस्य वरं पञ्चदिनानि वै ।
न तु कल्पसहस्राणि भक्तिहीनस्य केशवे ॥"४१२॥

स्वल्पमात्र काल भी भगवद् भजन करने से समस्त जीवन सफल होता है। जो मानव, श्रीविष्णु का भजन करता है, उस के ५ दिनकी आयु भी धन्य है। किन्तु श्रीकेशव में भक्ति हीन जन के सहस्र कल्प जीवन धारण भी अधन्य है। इस प्रसङ्ग में भागवत के तृतीय स्कन्धोक्त ३।३१।१२-२१ पर्य्यन्त गर्भस्थ जीव के द्वारा जो भगवत् स्तुति है—एवं उसका संसार भी वर्णित है उसका समीचीन समाधान होना आवश्यक है। अर्थात् गर्भस्थित जीव की भगवत् स्तुति श्रुत है--पुनर्वार भगवत् स्तव कारी जीव का संसार दुःख भी वर्णित है। ऐसा होने पर स्वल्पकाल भगवद् भजन करने से ही जीव संसार से मुक्त होता है—इस का प्रचुर प्रमाण प्रदर्शित हुआ है। अथच जननी गर्भ में रहकर जीव, दुःख निवृत्ति हेतु भगवान् का स्तव करता है, पुनर्वार वह जीव भूमिष्ठ होकर श्रीभगवान् को भूल जाता है, एवं संसार वासना से आबद्ध हो जाता है। भागवत के तृतीय स्कन्धोक्त प्रकरण, एवं अन्यान्य पुराण संहिता वचनों का उक्त सिद्धान्त के सहित असामञ्जस्य ही होता है, इस का सुष्ठु समाधान क्या है? अर्थात् पहले कहा गया है—जो व्यक्ति, एक वार मात्र भगवान् को कहता है कि—मैं आपका हूँ। श्रीहरि उसको मायाबन्धन से मुक्त करते हैं,

भाग्यवान् भगवन्तं स्तौति, स च निस्तरत्यपि, न तु सर्व्वस्यापि भगवज्ज्ञानं भवति। तथा च नैरुक्ताः पठन्ति (१३-१६) "नवमे सर्व्वाङ्ग-सम्पूर्णो भवति" इति पठित्वा, "मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः" इत्यादि-तद्भावना-पाठानन्तरम्,—

"अवाङ्मुखः पीड्यमानो जन्तुभिश्च समन्वितः।
सांख्यं योगं समभ्यसेत् पुरुषं वा पञ्चविंशकम् ॥४१३
ततश्च दशमे मासि प्रजायते" इत्यादि।

सर्व्वास्वप्यवस्थासु भक्तेः समर्थत्वन्तु वर्णितम्। भेदेऽप्येकवद्वर्णनमन्यत्रापि दृश्यते, (भा० ३।११।३५) तृतीये यथा पाद्मकल्पसृष्टिकथनेऽपि श्रीसनकादीनां सृष्टिः कथ्यत इति।

---

इस कथन का वास्तविक समाधान क्या ? समाधान हेतु कहते हैं—उच्यते—भगवदुन्मुख एवं भगवद् वहिर्मुख भेद से जीव द्विविध होते हैं, यह द्विविध जीव में धर्मगत पार्थक्य होने पर भी जाति गत पार्थक्य नहीं है, इस अभिप्राय से ही उभय विध जीव को जाति साम्य से एकत्व दृष्टि से एक रूप कहा गया है। वास्तविक तथ्य यह है कि—किसी साधु सङ्ग वा साधु कृपा प्राप्त सौभाग्यवान् जीव ही गर्भ यातना से प्रपीड़ित होकर श्रीभगवान् का स्तव करता है। एवं श्रीभगवच्चरणों में प्रपन्न होता है। वह जीव ही माया बन्धन से मुक्त होता है, किन्तु समस्त जीवों की भगवत् स्मृति गर्भ में नहीं होती है, न तो वह श्रीभगवान् का स्तव ही करता है। निरुक्तवादिवृन्द कहते हैं—नवममास में गर्भस्थ शिशु के सर्वाङ्ग सम्पूर्ण होते हैं, इस प्रकार पाठ करके "मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः" अर्थात् मैं मरकर पुनर्वार जन्मग्रहण किया एवं जन्म ग्रहण कर पुनर्वार मर रहा हूँ। इत्यादि गर्भस्थ जीव की भावना का पाठ करके कहते हैं।

"अवाङ्मुखः पीड्यमाणो जन्तुभिश्च समन्वितः।
सांख्यं योगं समभ्यसेत् पुरुषं वा पञ्चविंशकम् ॥
ततश्च दशमे मासि प्रजायते" ॥४१३॥

अर्थात् जीव, गर्भ में अधोमुख में रहकर क्षुद्र क्षुद्र कीट द्वारा वेष्टित एवं पीड़ित होकर सांख्य योग अभ्यास करता है, अनन्तर दशम मास में जन्म ग्रहण करता है, इत्यादि उक्ति में 'पुरुषं वा' यहाँ 'वा' शब्द का उल्लेख होने के कारण कतिपय जीवों का श्रीभगवद् विषयक ज्ञानोदय होता है—यह ज्ञात होता है। अर्थात् समस्त जीवों की गर्भ में श्रीहरि स्मृति नहीं होता है, भक्ति की सामर्थ्य—तो सर्वावस्था में अव्याहत है।

भगवदुन्मुख एवं भगवद्विमुख रूप से द्विविध जीव का विभाग एवं तज्जन्य क्लेश अङ्गीकार—इत्यादि जीव गत भेद वर्णन विषय में प्रमाण क्या है, जिस से जाति गत ऐक्य रूपेण वर्णन होने पर भी अवस्थान भेद होता है ? उत्तर में कहते हैं—भा० ३।११।३५ में उक्त नियम उक्त है—

"सनकञ्च सनन्दञ्च सनातनमथात्मभूः।
सनत् कुमारञ्चमुनीन् निष्क्रियानूर्द्ध्वरतसः ॥"

टीका—यद्यपि प्रतिकल्पं सनकादि सृष्टिर्नास्ति, तथापि ब्रह्म सर्गत्वादिहोच्यते। वस्तुतस्तु मुख्य सर्गादय एव प्रति कल्पं भवन्ति, सनकादयस्तु ब्राह्म कल्प सृष्टा एवानुवर्त्तन्ते।

पारस्परिक भेद विद्यमान होने पर भी उभय को एक रूप से वर्णन किया जाता है। उसका दृष्टान्त

टीकायाञ्च ब्रह्मकृत--सृष्टिमात्रकथनसाम्येनैकीकृत्योक्तिरियमिति योजितम्, श्रीवाराहा-वतारवच्च, तत्र प्रथम-मन्वन्तरस्यादौ पृथिवीमज्जने ब्रह्मनासिकातोऽवतीर्णः श्रीवराहस्तामुद्धरन् हिरण्याक्षेण संग्रामं कृतवानिति वर्ण्यते। हिरण्याक्षश्च षष्ठमन्वन्तरस्यावसानजातप्राचेतस-दक्ष-कन्याया दितेर्जातः। तस्मात्तथा-वर्णनं तदवतारमात्रत्व-पृथिवीमज्जनमात्रत्वैवयविवक्षयैव घटते, तद्वदत्रापीति। कश्चिदेवान्यो जन्यो जीवः स्तौत्यन्यः संसरतीत्येव मन्तव्यम्। अत्र पूर्व्ववत् परमगतिप्राप्तौ भक्तेः परम्परा-कारणत्वञ्च दृश्यते, बृहन्नारदीये ध्वजारोपणमाहात्म्ये,—

'यतीनां विष्णुभक्तानां परिचर्य्या-परायणैः।
ईक्षिता अपि गच्छन्ति पापिनोऽपि परां गतिम्॥"४१४॥ इति।

---

उक्त श्लोकस्थ स्वामि पाद कृत टीका में है। अर्थात् भागवत के तृतीय स्कन्ध में पाद्म कल्प सृष्टि प्रसङ्ग में श्रीसनकादि की सृष्टि वर्णित है, वहाँ उन्होंने कहा है—

ब्रह्मकृत सृष्टिमात्र कथनसाम्येनैकी कृत्योक्तिरियमिति।"

अर्थात् ब्रह्मा कर्त्तृक कृत सृष्टिमात्र वर्णनसाम्य हेतु उभय को एक करके कहा गया है। ब्राह्म कल्प में भी सनकादि ऋषि गण की कथा वर्णित है, एवं पाद्म कल्प सृष्टि प्रसङ्ग में भी उन सब की सृष्टि कथा का उल्लेख है। अथच स्वामि पादने कहा है —

"यद्यपि प्रतिकल्पं सनकादि सृष्टिर्नास्ति तथापि ब्राह्मसर्गत्वादिहोच्यते॥"

यद्यपि प्रति कल्प में सनकादि की सृष्टि नहीं है, तथापि ब्राह्म कल्प के अनुसरण से सनकादि की सृष्टि की कथा कही गई है। यहाँ पर श्रीवराह अवतार के समान ही सनकादिक को जानना होगा। श्रीवराह अवतार के प्रसङ्ग में लिखित है कि—प्रथम स्वायम्भुव मन्वन्तर के आदि भाग में पृथिवी रसातल गता होने से ब्रह्मा की नासिका से श्रीवराह देव अवतीर्ण होकर पृथिवी को उद्धार किये थे, एवं हिरण्याक्ष के सहित युद्ध किये थे। यह विवरण भागवत के तृतीय स्कन्ध में है। अथच हिरण्याक्ष षष्ठ चाक्षुष मन्वन्तर के अवसान के समय प्रचेतानन्दन दक्ष कन्या दिति से जन्म ग्रहण किया था। अतएव प्रथम मन्वन्तर में पृथिवी का उद्धार, और षष्ठ मन्वन्तर में हिरण्याक्ष बध हुआ, यह लीलाद्वय का काल गत पार्थक्य होने पर भी एक कालोचित लीला के समान वर्णन हुआ है, उद्देश्य यह है कि—पृथिवी उद्धार एवं हिरण्याक्ष बध नामक लीलाद्वय का सम्पादक—श्रीवराह देव ही हैं। इस प्रकार एकत्व दृष्टि से ही लीला द्वय का काल गत पार्थक्य होने पर भी एक कालीय रूप में ही वर्णन किया है। उस प्रकार यहाँ पर भी प्राप्त साधु सङ्ग सौभाग्यवान् किसी जीव गर्भ में श्रीभगवान् का स्तव करता है, अन्य वहिर्मुख जीव संसार दशा को प्राप्त करता है। यद्यपि जीव द्वय की उन्मुखता एवं वहिर्मुखता हेतु भाव गत पार्थक्य है, किन्तु चित् स्वरूप गत पार्थक्य उभय में नहीं है। अतएव उन्मुख एवं वहिर्मुख जीव का वर्णन ऐकरूप से किया गया है। इस प्रकार वर्णन करके वहिर्मुख जीव के हृदय में भगवद् भजन करने की प्रवृत्ति जाग्रत करना ही मुख्य उद्देश्य है। अतएव परम गति लाभ हेतु साक्षात् रूप से भक्ति ही कारण है, एवं परम्परा रूप से भी परम गति प्राप्ति हेतु भक्ति ही कारण है, इस का वर्णन शास्त्र में है। बृहन्नारदीय पुराणके ध्वजारोपण माहात्म्य में वर्णित है—

"यतीनां विष्णुभक्तानां परिचर्य्या--परायणैः।
ईक्षिता अपि गच्छन्ति पापिनोऽपि परां गतिम्॥"४१४॥

एवं विष्णुधर्म्मे—

"कुलानां शतमागामि समतीतं तथा शतम् । कारयन् भगवद्धाम नयत्यच्युतलोकताम् ॥४१५॥

ये भविष्यन्ति येऽतीता आकल्पात् पुरुषाः कुले ।

तांस्तारयति संस्थाप्य देवस्य प्रतिमां हरेः ।"४१६॥ इति ।

दूतान् प्रति यमाज्ञा चेयम्—

"येनार्च्चा भगवद्भक्त्या वासुदेवस्य कारिता । नवायुतं तत्कुलजं भवतां शासनातिगम् ॥"४१७॥

यथाह (भा० ७।१०।१८) —

(१५१) "त्रिसप्तभिः पिता पूतः पितृभिः सह तेऽनघ ।

यत् साधोऽस्य गृहे जातो भवान् वै कुलपावनः ॥"४१८॥

त्रिसप्तभिः प्राचीन-कल्पगत-तदीय-पूर्व्व-पूर्व्व-जन्मसम्बन्धिभिः पितृभिः सह । अस्मिन् जन्मनि हिरण्यकशिपु-कश्यप-मरीचि-ब्रह्माण एव तत्पितर इति ॥ श्रीनृसिंह, प्रह्लादम् ॥

---

त्यागी विष्णु भक्त वृन्द के मध्य में परिचर्य्या परायण वैष्णव वृन्द जिस के प्रति दृष्टि करते हैं, वे सब महापापी होने पर भी परागति को प्राप्त करते हैं । इस प्रकार वर्णन विष्णु धर्म में भी दृष्ट होता है—

"कुलानां शतमागामि समतीतं तथा शतम् । कारयन् भगवद्धाम नयत्यच्युतलोकताम् ।।४१५॥

ये भविष्यन्ति येऽतीता आकल्पात् पुरुषाः कुले ।

तांस्तारयति संस्थाप्य देवस्य प्रतिमां हरेः ॥"४१६॥

जो श्रीभगवान् के मन्दिर निर्म्माण करा देते हैं वे, आगामी एवं अतीत शत शत कुल को श्रीहरि लोक प्राप्त कराते हैं । कल्प अर्थात् ब्रह्मा के एक दिवस पर्य्यन्त काल में जो सब व्यक्ति, जन्म ग्रहण करेंगे । एवं जो लोक गत हो गये हैं, श्रीहरि की प्रतिमा संस्थापन करके उन सब को उद्धार करते हैं । इस प्रसङ्ग में दूतगण के प्रति धर्मराज यम का आदेश दृष्ट होता है ।

"येनार्च्चा भगवद्भक्त्या वासुदेवस्य कारिता ।

नवायुतं तत्कुलजं भवतां शासनातिगम् ॥"४१७॥

जो, प्रगाढ़ भक्ति के सहित वासुदेव श्रीकृष्ण की प्रतिमा स्थापन करता है, उस के वंश जात नव अयुत पुरुष—तुम सब के शासन के अतीत हैं, अर्थात् उन सबके प्रति तुम सब का कोई अधिकार नहीं है ।

भा० ७।१०।१८ में श्रीनृसिंह देव श्रीप्रह्लाद को कहे थे—

(१५१) "त्रिसप्तभिः पिता पूतः पितृभिः सह तेऽनघ ।

यत् साधोऽस्य गृहे जातो भवान् वै कुलपावनः ॥"४१८॥

हे निष्पापिन् ! साधो ! तुम्हारे पिता एक विंशति कुलके सहित पवित्र हुये हैं । कारण, कुल पावन तुम—इस हिरण्यकशिपु के घर में जन्म ग्रहण किये हो, यहाँ पर ज्ञातव्य यह है कि—प्रह्लाद के वर्त्तमान जन्म के पूर्व में एक विंशति पुरुष की सम्भावना नहीं है । कारण, प्रह्लाद के पिता हिरण्यकशिपु, पितामह कश्यप, प्रपितामह, मरीचि, वृद्ध प्रपितामह ब्रह्मा है । अतएव श्रीनृसिंह देव के वाक्य असंलग्न हो सकता है । अतएव जानना होगा कि—श्रीनृसिंह देव के नित्य लीला परिकर प्रह्लाद के सहित किसी साधन सिद्ध प्रह्लाद का सायुज्य है । उस साधन सिद्ध प्रह्लाद का ही पूर्व कल्प गत पूर्व पूर्व जन्म सम्बन्धान्वित पितृगण

१५२। तथा शक्त्याभासस्यापि सर्व्वपापक्षयपूर्व्वक-श्रीविष्णुपदप्रापकत्वं यथा बृहन्नारदीये कोकिला-मानिनोर्मदिरोन्मत्तयोर्धृतकुचीरखण्डदण्डयोर्जीर्णभगवन्मन्दिरे नृत्यतोर्ध्वजारोपण-फलप्राप्त्या तादृशत्वं जातम्। तथा व्याधहतस्य पक्षिणः कुक्कुरमुखगतस्य तत्पलायनवृत्त्या भगवन्मन्दिर-परिक्रमण-फलप्राप्त्या तादृशत्वप्राप्तिरिति, क्वचित्तत्र महाभक्तिप्राप्तिश्च, यथा बृहन्नारसिंहपुराणे श्रीप्रह्लादस्य तस्य प्राग्जन्मनि वेश्यया सह विवादेन श्रीनृसिंहचतुर्द्दश्यां दैवादुपवासः सम्पन्नो जागरणञ्चेति तथा चाह (भा० ३।९।१५)—

(१५२) "यस्यावतारगुणकर्म्मविड़म्बनानि, नामानि येऽसुविगमे विवशा गृणन्ति।
तेऽनेकजन्मशमलं सहसैव हित्वा, संयान्त्यपावृतमृतं तमजं प्रपद्ये॥"४१९॥

असुविगमेऽपीति तदानीन्तनमात्रत्वमशुद्धवर्णत्वञ्च व्यञ्जितम्। विवशा इति तदिच्छां

---

की पवित्रता की वार्त्ता को श्रीनृसिंह देव कहे थे।

श्रीनृसिंह—श्रीप्रह्लाद को कहे थे ॥१५१॥

१५२। इस के पहले परम पद प्राप्ति हेतु जिस प्रकार परम्परा क्रम से श्रीभगवद्भक्ति को ही कारण कहा गया है। उस प्रकार भक्ति के आभास से भी सर्व पाप क्षय पूर्वक श्रीविष्णु पद प्राप्ति होती है। बृहन्नारदीय पुराण में लिखित है—मदिरापानोन्मत्त होकर व्यक्ति द्वय, निज को कोकिल मानकर एक दण्ड में वस्त्रखण्ड बंध कर एवं उस को हाथ में लेकर एक भग्न श्रीविष्णु मन्दिर मे नृत्य किये थे, उस से श्रीविष्णु मन्दिर में ध्वजारोपण का फल उन दोनों को मिल गया। अपर वृत्तान्त है—एक पक्षी, व्याध के शराघात से भूतल में निपतित होने पर एक कुक्कुर उस पर बिद्ध पक्षी को मुख से लेकर पलायन परायण होने पर श्रीविष्णु मन्दिर की परिक्रमा उस से अनायास हो गई थी। किन्तु शराहत पक्षी का श्रीविष्णु मन्दिर परिकमण उस से सम्पन्न होने से परिक्रमण जनित फल लाभ उस पक्षी को हो गया, उस से वह पक्षी श्रीविष्णु लोक गमन किया था। स्थान विशेष में भक्ति के आभास मात्र से भी महाभक्ति का फल लाभोल्लेख दृष्ट होता है। बृहन्नरसिंह पुराण में लिखित है— महाभागवत प्रह्लाद, पूर्व जन्म में वेश्यासक्त था, एक दिन वेश्या के सहित प्रह्लाद की लड़ाई हो गई, उस दिन श्रीनृसिंह चतुर्द्दशी थी, अज्ञात सार से कलह के कारण प्रह्लादका उस दिन उपवास एवं रात्रि जागरण भी हो गया, उसके फल स्वरूप पर जन्म में प्रह्लाद होकर उनका जन्म लाभ हुआ। भक्ति के आभास से ही जो सर्व पाप क्षय होकर श्रीभगवत् प्राप्ति होती है, उस विषय में ३।९।१५ में लिखित है—

(१५२) "यस्यावतारगुणकर्मविड़म्बनानि, नामानि येऽसुविगमे विवशा गृणन्ति।
तेऽनेकजन्मशमलं सहसैव हित्वा, संयान्त्यपावृतमृतं तमजं प्रपद्ये ॥४१९॥

टीका—नामग्रहण मात्रतः, कैवल्यप्रदत्वेनैश्वर्य्यं व्यञ्जयन् नमस्करोति यस्येति। अवतारादीनां विड़म्बनमनुकरणमस्ति येषु। तत्रावतार विड़म्बनानिदेवकीनन्दनेत्यादीनि गुण विड़म्बनानि सर्वज्ञो भक्तवत्सल इत्यादीनि। कर्म विड़म्बनानि-गोवर्द्धनोद्धरणः कंसारातिरित्यादीनि। असु विगमेऽपि विवशा अपि, गृणन्ति केवलमुच्चारयन्ति। शमलं पापम्। अपावृतं निरस्तावरणम्। ऋतं ब्रह्म, प्राप्नुवन्ति।

श्री ब्रह्मा, गर्भोदशायी भगवान् को कहे थे। हे प्रभो! जिसने जन्मभर आप का नाम स्मरण नहीं किया है, अथच केवल प्राणान्त के समय यदि अनिच्छा से भी आप के अनन्तनामो के मध्य में कोई एक

बिनापि केनचित् कारणान्तरेणापीत्यर्थः, "वश कान्तौ" इत्यमरः। तादृशशक्तित्वे हेतुमाह, अवतारेति । अवतारादिसदृशानि तत्तत्तुल्यशक्तीनीत्यर्थः । तत्रावतारविड़म्बनानि नृसिंहेत्यादीनि, गुणविड़म्बनानि भक्तवत्सलेत्यादीनि, कर्मविड़म्बनानि गोवर्द्धनधरेत्यादीनि च ॥ ब्रह्मा श्रीगर्भोदकशायिनम् ॥

१५३। अस्तु तावत् शुद्धभक्त्याभासवार्त्ता, अपराधत्वेन दृश्यमानोऽप्यसौ महाप्रभावो दृश्यते, यथा विष्णुधर्म्मे भगवन्मन्त्रेण कृतनिजरक्षं विप्रं प्रति राक्षस-वाक्यम्--

"त्वामत्तुमागतः क्षिप्तो रक्षया कृतया त्वया। तत्संस्पर्शाच्च मे ब्रह्मन् साध्वेतन्मनसि स्थितम् ॥४२०॥
का सा रक्षा न तां वेद्मि वेद्मि नास्याः परायणम् ।
किन्त्वस्याः सङ्गमासाद्य निर्वेदं प्रापितः परम् ॥" ४२१॥ इति ।

---

नाम का उच्चारण करता है, तो, वह नामोच्चारण कारी व्यक्ति तत् क्षणात् अनेक जन्म सञ्चित पाप राशि से निर्मुक्त होकर सर्वोपाधिशून्य सच्चिदानन्द स्वरूप श्रीभगवान् को प्राप्त करता है। नामोच्चारण मात्र से ही सकल पाप विनष्ट होकर भगवत् प्राप्ति होती है, उसका कारण है, श्रीभगवदवतारों में जो क्षमता है, उन उन अवतारों के नामों में भी वह क्षमता है। कारण, नाम एवं नामी में किसी प्रकार प्रभेद नहीं है। श्रीभगवदवतार वृन्द जिस प्रकार अविद्या विनष्ट करके निज स्वरूप प्राप्ति कराते हैं। श्रीनाम में भी उसी प्रकार सामर्थ्य हैं। वरञ्च श्रीनामी से श्रीनाम में अत्यधिक क्षमता का प्रकाश है। मूल श्लोक में "अवशः" पद का उल्लेख है, उसका अर्थ है—अनिच्छा से। यह अर्थ समीचीन है। कारण, अमर कोषकार के मत में 'वश्' धातु का अर्थ कान्ति हैं, अर्थात् इच्छा है। उस में भी नाम त्रिविध हैं, (१) जन्मानुरूप नाम--देवकीनन्दन प्रभृति, (२) गुणानुरूप नाम--भक्तवत्सल प्रभृति, (३) कर्मानुरूप नाम—गोवर्द्धनधर प्रभृति ॥ ब्रह्मा श्रीगर्भोदकशायी को कहे थे ॥१५२॥

१५३। विशुद्ध भक्ति के आभास मात्र से सकल पाप विनष्ट होकर भगवच्चरण कमल के सान्निध्य लाभ होता है—यह तो हो ही सकता है। किन्तु अपराध रूप में प्रसिद्ध जो विशुद्ध भक्ति का आभास है, उस का भी महाप्रभाव दृष्ट होता है—विष्णु धर्म में भगवन्मन्त्र के द्वारा निज रक्षा कारी एक ब्राह्मण के प्रति राक्षस की उक्ति में उसका निदर्शन है—

"त्वामत्तुमागतः क्षिप्तो रक्षया कृतया त्वया।
तत्संस्पर्शाच्च मे ब्रह्मन् साध्वेतन्मनसि स्थितम् ॥४२०॥
का सा रक्षा न तां वेद्मि वेद्मि नास्याः परायणम् ।
किन्त्वस्याः सङ्गमासाद्य निर्वेदं प्रापितः परम् ॥"४२१॥

हे ब्रह्मन् ! मैं तुम्हें भक्षण करने आया था। किन्तु तुमने जो रक्षा विधान किया, उस से मैं पागल बन गया हूँ। उस रक्षा का स्पर्श से मेरे हृदय में पवित्र भावोदय हुआ है। वह रक्षा है क्या ? उस का मूलाश्रय भी क्या है ? मैं उस विषय में कुछ नहीं जानता हूँ। तब मैं यही जान रहा हूँ कि उस रक्षा के सङ्ग प्राप्त कर मेरे हृदय में परम निर्वेद उपस्थित हुआ है। यहाँ समझना होगा कि–ब्राह्मण भक्षण में प्रवृत्त होने के कारण, अपराधी राक्षस के हृदय में भी श्रीभगवन्मन्त्र से रक्षिताङ्ग ब्राह्मण के स्पर्श से राक्षस के हृदय में परम निर्वेद उपस्थित हुआ था।

यथा वा विष्णुधर्माद्युदाहृतायाः श्रीभगवद्गृहदीपतैलं पिबन्त्याः कस्याश्चिन्मूषिकाया दैवतो मुखोद्धृतवर्त्तौ दीपे समुज्ज्वलिते सति मुखदाहेन मरणात् राज्ञीत्वं प्राप्य दीपदानादि लक्षण-भक्तिनिष्ठाप्राप्तिरन्ते परमपदप्राप्तिश्च। यथा च ब्रह्माण्डपुराणे जन्माष्टमी-माहात्म्ये कृतजन्माष्टमोकाया दास्या दुःसङ्गेनापि कस्यचित्तत्फलप्राप्तिः। तथा च बृहन्नारदीये तादृश-दुष्टकार्यार्थमपि भगवन्मन्दिरं मार्ज्जयित्वा कश्चिदुत्तमां गतिमवाप, न त्वीदृशत्वं ब्रह्म-ज्ञानस्यापि, यथोक्तं ब्रह्मवैवर्त्ते,—

"विषयस्नेहसंयुक्तो ब्रह्माहमिति यो वदेत्। गर्भवाससहस्रेषु पच्यते पापकृन्नरः॥"४२२॥

अथ श्रीभगवद्वशीकारितायामपि सकृदल्पप्रयासात्मिकाया अपि भक्तेः कारणता दृश्यते; यथा ब्रह्मपुराणे श्रीशिववाक्यम्,—

---

अथवा विष्णु धर्मादि ग्रन्थोक्त प्रकरण का अनुसन्धान यहाँ करना चाहिये। उक्त ग्रन्थों में लिखित है—श्रीभगवद् गृह में एक मूषिक रहता था। वह प्रतिदिन श्रीमन्दिर के प्रदीपस्थ तैल पान भी करता था, एक दिन दैव योग से उस प्रदीप की वत्ती उस के मुख में लपेट गई, एवं वत्ती के अनुभाग प्रज्वलित होने से वह अत्यन्त अधीर होकर प्राण त्याग किया। इस से उस को श्रीमन्दिर में दीप दान का फल मिल गया एवं पर जन्म में वह राज महिषी बना। उस महिषी जन्म में बहु दीप प्रदानादि लक्षणा भक्ति निष्ठा भी उस की हुई। अनन्तर देहान्त होने पर वह श्रीभगवद्धाममें प्रस्थान किया था। यहाँ पर भी वह मूषिक तैल पान करता था, अतः वह अपराधी रहा, तथापि प्रदीप की वत्ती दाँतों में लपेट जाने के कारण श्रीमूर्त्ति के सम्मुख में प्रदीप मुख में लेकर प्राण त्याग करने के कारण श्रीभगवन्मन्दिर में दीप प्रदान रूप भक्ति के आभास से भी श्रीभगवद्धाम प्राप्ति का दृष्टान्त प्रदर्शित हुआ। उस प्रकार ब्रह्माण्ड पुराण के जन्माष्टमी व्रत माहात्म्य में लिखा है— जन्माष्टमी व्रत कारिणी दासी के दुःसङ्ग से भी किसी एक व्यक्ति की भगवत् प्राप्ति हुई थी। यहाँ—उक्त दासी का दुःसङ्ग अपराध होने पर भी वह दासी जन्माष्टमी व्रताचरण कारिणी रही, अतः उक्त संज्ञा से अभिहिता रही, अतएव उस के सङ्ग प्रभाव से भगवद्धाम प्राप्ति का दृष्टान्त उपस्थापित हुआ। उस प्रकार बृहन्नारदीय में भी दृष्ट होता है—पूर्व वर्णित दुष्ट कार्य्य हेतु एक व्यक्ति श्रीभगवन्मन्दिर मार्ज्जन करके भगवद्धाम में गमन किया था। इस में भी जानना होगा, दुष्ट कार्य्य अपराध है, और उस उद्देश्य से श्रीभगवन्मन्दिर मार्जनभी भक्त्याभास है, उस से भी भगवद्धाम लाभ हुआ था, इस अंश में दृष्टान्त है।

किन्तु ब्रह्म ज्ञान की इस प्रकार सामर्थ्य कुत्रापि दृष्ट नहीं होती है, कारण, ब्रह्म वैवर्त्त पुराण में उक्त है

"विषयस्नेहसंयुक्तो ब्रह्माहमिति यो वदेत्।
गर्भवाससहस्रेषु पच्यते पापकृन्नरः॥"४२२॥

विषयस्नेह युक्त हृदय में यदि कोई व्यक्ति, मुख से 'मैं ब्रह्म हूँ' इस प्रकार कहता है। अर्थात् अन्तर में विषय के प्रति स्नेह परिपूर्ण है, अथच बाहर कहता है कि--'मैं ब्रह्म हूँ' ऐसा होने पर उस पाप से सहस्र जन्म पर्य्यन्त गर्भवास दुःख उस को भोगना पड़ेगा।

अनन्तर स्वल्प प्रयाससाध्य भक्ति में श्रीभगवान् को वशीभूत करने की सामर्थ्य दृष्ट होती है। इस विषय में ब्रह्म पुराण के श्रीशिववाक्य प्रमाण है।

"दृष्टः पश्येदहरहः संश्रितः प्रतिसंश्रयेत् । अर्च्चितश्चार्च्चयेन्नित्यं स देवो द्विजपुङ्गवाः ॥"४२३॥

यथा च विष्णुधर्मे—

"तुलसीदलमात्रेण जलस्य चुलुकेन च । विक्रीणीते स्वमात्मानं भक्तेभ्यो भक्तवत्सलः ॥"४२४॥

तदीदृशं माहात्म्यवृन्दं न प्रशंसामात्रमजामिलादौ प्रसिद्धत्वात् । दर्शितश्च न्यायाः श्रीभगवन्नामकौमुद्यादौ । तथैव नाम्न्यर्थवाद-कल्पनायां दोषोऽपि श्रूयते, "तथार्थवादो हरिनाम्नि" इति हि पाद्मे नामापराधगणने,

"अर्थवादं हरेर्नाम्नि सम्भावयति यो नरः । स पापिष्ठो मनुष्याणां निरये पतति स्फुटम् ॥"४२५॥

इति कात्यायन-संहितायाम्,

"मन्नाम कीर्त्तनफलं विविधं निशम्य, न श्रद्दधाति मनुते यदुतार्थवादम् ॥
यो मानुषस्तमिह दुःखचये क्षिपामि, संसारघोरविविधार्त्तिनिपीड़िताङ्गम् ॥"४२६॥

---

"दृष्टः पश्येदहरहः संश्रितः प्रतिसंश्रयेत् ।
अर्च्चितश्चार्च्चयेन्नित्यं स देवो द्विजपुङ्गवाः ॥"४२३॥

महादेव बोले—हे द्विज श्रेष्ठगण ! मैंने देखा है, उन श्रीभगवान् को जो देखता है, श्रीभगवान् भी उस को प्रतिदिन देखते हैं । जो व्यक्ति, श्रीभगवान् को आश्रय करता है, श्रीभगवान् भी उस को सम्यक् रूप से आश्रय करते हैं, जो व्यक्ति, श्रीभगवान् की पूजा करता है, श्रीभगवान् भी उस की पूजा करते है । इस से प्रति पादित हुआ कि—स्वल्पायास साध्य भक्ति ही श्रीभगवान् को वशीभूत करती है । विष्णु धर्म में लिखित है—

'तुलसीदलमात्रेण जलस्य चुलुकेन च ।
विक्रीणीते स्वमात्मानं भक्तेभ्यो भक्तवत्सलः ॥"४२४॥

तुलसी दल संयुक्त जल गण्डूष मात्र से ही भक्तवत्सल भगवान् वशीभूत होते हैं । अर्थात् प्रतिदान हेतु उपयुक्त वस्तु को न देखकर स्वयं आत्म विक्रय करते हैं । इस से प्रतिपन्न हुआ कि—अल्पायास साध्य भक्ति के द्वारा श्रीभगवान् वशीभूत होते हैं । यह सब वर्णन विषय—प्रसंशा मात्र नहीं है, कारण, अजामिल प्रभृति में इस का यथार्थ प्रभाव दृष्ट होता है, श्रीभगवन्नाम कौमुदी प्रभृति ग्रन्थ में सविस्तार न्याय समूह उट्टङ्कित हैं । भगवन्नाम में अर्थवाद कल्पना करना बहुविध दोष होते हैं । अर्थात् श्रीनाम माहात्म्य श्रवण करके जो व्यक्ति उस को प्रशंसा वाक्य मानता है, वह विविध दोष युक्त होता है ।

पद्म पुराण के नामापराध गणन प्रसङ्ग में वर्णित है "तथार्थवादो हरिनाम्निकल्पनम्" श्रीहरिनाम महिमा वर्णन को प्रशंसा वाकच मानना एक अपराध है ।

"अर्थवादं हरेर्नाम्नि सम्भावयति यो नरः ।
स पापिष्ठो मनुष्याणां निरये पतति स्फुटम् ॥"४२५॥

जो मनुष्य श्री हरिनाम माहात्म्य को प्रशंसा वाकच मानता है, अर्थात् यह तो प्रशंसा वाकच है, बढ़ा चढ़ाकर कहना है, इस प्रकार मन में सोचता है, वह व्यक्ति निखिल मनुष्यों के मध्य में अत्यन्त पापिष्ठ है, और वह निश्चय ही घोर नरक में निपतित होगा । इस प्रकार कात्यायन संहिता में लिखित है, ब्रह्म संहिता में बौधायन के प्रति श्रीपरमेश्वर की उक्ति है—

इति ब्रह्मसंहितायां बौधायनं प्रति श्रीपरमेश्वरोक्तौ। ततोऽन्तर्भूत-नामानुसन्धानेष्वन्येषु तद्भजनेषु च सुतरामेवार्थवादे दोषोऽवगम्यते। तदेवं यथार्थ एव तन्माहात्म्ये सत्यपि यत्र सम्प्रति तत्तद्भजन-फलोदयो न दृश्यते, कुत्रचिच्छास्त्रे च पुरातनानामप्यन्यथा श्रूयते, तत्र नामार्थवादकल्पना वैष्णवानादरादयो दुरन्ता अपराधा एव प्रतिबन्धकारणं वक्तव्यम्। अतएवोक्तं श्रीशौनकेन (भा० २।३।२४)—

"तदश्मसारं हृदयं बतेदं, यद्गृह्यमाणैर्हरिनामधेयैः।
न विक्रियेताथ यदा विकारो, नेत्रे जलं गात्ररुहेषु हर्षः॥"४२७॥

यथा प्रायेण आधुनिकानाम्, यथा वा (भा० १०।६४।२५)—

"ब्रह्मण्यस्य वदान्यस्य तव दासस्य केशव।

---

"मन्नाम कीर्त्तनफलं विविधं निशम्य, न श्रद्दधाति मनुते यदुतार्थवादम्।
यो मानुषस्तमिह दुःखचये क्षिपामि, संसारघोरविविधार्त्तिनिपीड़िताङ्गम्॥"४२६॥

जो मनुष्य, मेरा श्रीनाम सङ्कीर्त्तन के विविध फलों को सुनकर विश्वास नहीं करता है, प्रत्युत प्रशंसा वाक्य मानता है, मैं उस को सांसारिक विविध घोर दुःखराशि से निपीड़िताङ्ग करके राशि राशि दुःख जलधि में निक्षेप करता रहता हूँ। अतएव जिस के मध्य में श्रीभगवन्नामादिका अनुसन्धान है, इस प्रकार भजनाङ्ग के विषय में भी यदि कोई प्रशंसा वाक्य मानता है तो दोष जो होगा, उस विषय में कोई सन्देह नहीं है। कारण, भजनीय श्रीभगवान् को एवं भजन—श्रीहरि भक्ति को अनुसन्धान न करके भी यदि भक्तचङ्ग अनुष्ठित होता है, तो भी भगवद् भजन का फल स्वरूप भगवत् प्राप्ति अवश्य होती है, इस का वर्णन शास्त्र में है, अतएव अनुसन्धान पूर्वक श्रीनाम सङ्कीतनादि भक्तचङ्ग का अनुष्ठान करने पर फल लाभ से मानव धन्य होगा, इस विषय में कहना ही क्या है? अतएव भजनानुसन्धानमय भक्तचङ्ग की महिमा को सुनकर जो लोक प्रशंसा वाक्य मानते हैं, उन सब का अधः पतन अवश्यम्भावी है। किन्तु यथार्थ ही श्रीनाम सङ्कीर्त्तनादि भक्तचङ्ग का माहात्म्य है, तथापि स्थल विशेष में भक्तचङ्ग का अनुष्ठान करने पर भी फलोदय दृष्ट नहीं होता है। अर्थात् श्रीभगवच्चरणों में प्रीति नहीं होती है। उस समय जानना होगा कि—प्राक्तन अपराध के कारण ही फलोदय नहीं होता है। शास्त्र में उस प्रकार वर्णन भी है। उस में भी यदि नामार्थवाद की कल्पना होती है, तथवा वैष्णवानादर रूप दुरन्त अपराध होता है, तो भजन फलोदय में वह प्रधान प्रतिबन्धक होता है। यह जानना होगा। अतएव भा० २।३।३४ में श्री शौनक ने कहा भी है—

"तदश्मसारं हृदयं बतेदं, यद्गृह्यमाणैर्हरिनामधेयैः।
न विक्रियेताथ यदा विकारो, नेत्रे जलं गात्ररुहेषु हर्षः॥"४२७॥

टीका—अश्मवत् सारो बलं काठिन्यं यस्य। विक्रिया लक्षण माह—अथेति। गात्ररुहेषु रोमसु हर्ष उद्गमः॥

उस हृदय को पाषाणवत् अति कठोर जानना होगा, श्रीहरिनामादि श्रवण से भी जो हृदय विगलित नहीं होता है॥

इस प्रकार चित्त की अवस्था वर्त्तमान काल में दृष्ट होती है। भा० १०।६४।२५ में उक्त है।

स्मृतिर्नाद्यापि विध्वस्ता भवत्सन्दर्शनार्थिनः ।।"४२८।।

तदुक्तरीत्याध्यवसित-भक्तेरपि नृगस्य (भा० ६।३।२९) "जिह्वा न वक्ति" इत्यादि-यमवाक्य-विरुद्धं यमलोकगमनं प्राप्तवतो विना चार्थवाद-कल्पनामयं भावं श्रुतशास्त्रस्यापि तस्य सत्यां तादृशमाहात्म्यायां भक्तौ श्रीमदम्बरीषादिवत् सेवाग्रहं परित्यज्य दानकर्माग्रहो न स्यात् । तादृशापराधे भक्तिस्तम्भश्च श्रूयते, यथा पाद्मे नामापराधभञ्जनस्तोत्रे,—

"नामैकं यस्य वाचि स्मरणपथगतं श्रोत्रमूलं गतं वा
शुद्धं वाशुद्धवर्णं व्यवहित-रहितं तारयत्येव सत्यम् ।

---

"ब्रह्मण्यस्य वदान्यस्य तव दासस्य केशव ।
स्मृतिर्नाद्यापि विध्वस्ता भवत्सन्दर्शनार्थिनः ।।"४२८।।

हे केशव ! आप गो ब्राह्मण हितकारी परमोदार दाता हैं । जो आप का दास है, एवं आप का दर्शनार्थी है, उस में आप की स्मृति कभी विनष्टा नहीं होती है । इस का जाज्वल्यमान दृष्टान्त नृग है । उन्होंने कहा भी है—

"स त्वं कथं मम विभोऽक्षिपथः परात्मा
योगेश्वरैः श्रुतिदृशामलहृद्विभाव्यः ।
साक्षादधोक्षज उरुव्यसनान्धबुद्धेः
स्यान्मेऽनुदृश्य इह यस्य भवापवर्गः ।।"

अनन्तरम्— अनु जानीहि मां कृष्ण यान्तं देव गतिं प्रभो ।
यत्र क्वापि सतश्चेतो भूयान्मे त्वत्पदास्पदम् ।।

भा० ६।३।२९ में उक्त है— जिह्वा न वक्ति भगवद्गुणनामधेयं
चेतश्च न स्मरति तच्चरणारविन्दम् ।
कृष्णाय नो नमति यच्छिर एकदापि
तानानयध्वमसतोऽकृतविष्णुकृत्यान् ।।"

टीका— किञ्च जिह्वेत्यादि । यत् येषां जिह्वेत्याद्यन्वयः, न कृतं विष्णुकृत्यं भगवद् व्रतं यैः एकदापीति सर्वत्रान्वयः ।।

अर्थात् एकवार भी जिस की जिह्वा श्रीभगवद् गुण कर्म लाभ का कीर्त्तन नहीं करती है, जिस का चित्त, एकवार भी श्रीकृष्णचरणारविन्द का स्मरण नहीं करता है, जिस का मस्तक, एकवार भी श्रीकृष्ण को प्रणाम नहीं करता है, उस को यमपुरी में ले आने के निमित्त दूतों के प्रति यम राज का आदेश है । किन्तु उक्त समस्त आचरण करने पर भी एवं श्रीनामादि में अर्थवाद कल्पना न करने पर भी व्यक्ति विशेष का यदि यम लोक गमन होता है, तो भी भक्ति की महिमा यथावत् अक्षुण्ण रहती है, कारण, वह भक्त, श्रीअम्बरीषादि के समान सेवाव्रती हो होता है, किन्तु कदाचिदपि काम्यकर्माग्रहशील नहीं होता है । भक्ति के समीप में अपराध होने पर भक्ति स्तम्भित हो जाती है। पद्म पुराण के अपराध भञ्जन स्तोत्र में लिखित है—

"नामैकं यस्य वाचि स्मरणपथगतं श्रोत्रमूलं गतं वा
शुद्धं वाशुद्धवर्णं व्यवहित-रहितं तारयत्येव सत्यम् ।

तच्चेद्देह--द्रविण--जनता--लोभ--पाषण्डमध्ये
निक्षिप्तं स्यान्न फलजनकं शीघ्रमेवात्र विप्र ॥"४२९॥

**देहादि-लोभार्थं ये पाषण्डा गुर्ववज्ञादि-दशापराधयुक्तास्तन्मध्ये इत्यर्थः । स्कान्दे प्रह्लाद संहितायां द्वारकामाहात्म्ये, —**

"पूजितो भगवान् विष्णुर्जन्मान्तरशतैरपि । प्रसीदति न विश्वात्मा वैष्णवे चावमानिते ॥"४३०॥

**स्कान्द एवान्यत्र मार्कण्डेय--भगीरथसंवादे,—**

"दृष्ट्वा भागवतं दूरात् सम्मुखे नोपयाति हि । न गृह्णाति हरिस्तस्य पूजां द्वादशवार्षिकीम् ॥४३१॥
दृष्ट्वा भागवतं विप्रं नमस्कारेण नार्च्चयेत् । देहिनस्तस्य पापस्य न च वै क्षमते हरिः ॥"४३२॥

**एवं बहून्येवापराधान्तराण्यपि दृश्यन्ते । एवमेव श्रीविष्णुपुराणे शतधनुर्नाम्नो राज्ञो**

---

तच्चेद्देह–द्रविण–जनता–लोभ–पाषण्डमध्ये
निक्षिप्तं स्यान्न फलजनकं शीघ्रमेवात्र विप्र ॥"४२९॥

एक ही श्रीहरिनाम जिस की जिह्वा में स्फुरित होता है, अथवा जिस के स्मरण पदवी को प्राप्त करता है, किंवा श्रवण गोचरीभूत होता है। वह शुद्ध वर्ण से ही अथवा अशुद्ध वर्णोच्चारण से ही उच्चारित होता है। अथवा व्यवहित होकर ही, अथवा व्यवहित रहित होकर ही, उच्चारित होने से उच्चारण कारी को श्रीनाम निश्चय ही पवित्र करता है। किन्तु यदि वह नाम देह पोषण निमित्त, धन लोभ हेतु जनता लोभ हेतु प्रयुक्त होता है, अथवा गुरु अवज्ञा प्रभृति दशनामापराध युक्त व्यक्ति कर्त्तृक उच्चारित होता है, तो, शीघ्र श्रीकृष्ण प्रीति प्रदान नहीं करता है। किन्तु वहिर्मुखता सम्पादन करता है, यदि दैवाद् महत् कृपा अथवा भगवत् कृपा होती है तो बुद्धि निर्म्मल होकर नाम ग्रहण होता है उस से नाम ग्रहण का फल श्रीकृष्ण चरणों में प्रीति होती है। स्कन्द पुराण के प्रह्लाद संहितास्थ द्वारका माहात्म्य में लिखित है—

"पूजितो भगवान् विष्णुर्जन्मान्तरशतैरपि ।
प्रसीदति न विश्वात्मा वैष्णवे चावमानिते ॥"४३०॥

विश्वात्मा भगवान् विष्णु, शत शत जन्म में यदि आराधित होते हैं, तो उस मानव के प्रति विश्वात्मा भगवान् विष्णु प्रसन्न होते हैं, किन्तु वैष्णव को अपमानित करने से उस मानव के प्रति प्रसन्न नहीं होते हैं। स्कन्द पुराण के अन्यस्थान में जो मार्कण्डेय भगीरथ संवाद है, उस में उक्त है—

"दृष्ट्वा भागवतं दूरात् सम्मुखे नोपयाति हि ।
न गृह्णाति हरिस्तस्य पूजां द्वादशवार्षिकीम् ॥४३१॥
दृष्ट्वा भागवतं विप्रं नमस्कारेण नार्च्चयेत् ।
देहिनस्तस्य पापस्य न च वै क्षमते हरिः ॥"४३२॥

भगवत् भक्त को दूर से आते हुये देखकर सम्मुख के ओर जो नहीं जाता है, हरि, उसके द्वारा अनुष्ठित द्वादश वार्षिकी पूजा को अङ्गीकार नहीं करते हैं। भागवत विप्र को देखकर नमस्कार के द्वारा जो उनकी अर्च्चना नहीं करता है, श्रीहरि, उस मनुष्य के पापों को क्षमा नहीं करते हैं। इस प्रकार अनेक अपराधों का वर्णन शास्त्रों में है। इस प्रकार ही श्रीविष्णु पुराण में वर्णित है। शतधनु नामक एक भगवदाराधन तत् पर राजा थे। किन्तु उन्होंने एकदिन वेद एवं वैष्णव निन्दक व्यक्ति के सहित स्वल्प काल सम्भाषण किया था, उस से राजा कुक्कुर हो गये थे। अतएव भा० १।२।१६ में उक्त है—

भगवदाराधनतत्परस्यापि वेद-वैष्णवनिन्दकाल्पसम्भाषयैव कुक्कुरादियोनिप्राप्तिरुक्ता । अतः (भा० ११२।१६) "शुश्रूषोः श्रद्दधानस्य" इत्यादौ, (ब्र० सू० ४।१।१) "आवृत्तिरसकृदुपदेशात्" इत्यादौ च पुरुषाणां प्रायः सापराधत्वाभिप्रायेणैवावृत्तिविधानम् । सापराधानामावृत्त्यपेक्षा चोक्ता पाद्मे नामापराधभञ्जनस्तोत्रे नामोपलक्ष्य—

"नामापराधयुक्तानां नामान्येव हरन्त्यघम् । अविश्रान्तिप्रयुक्तानि तान्येवार्थकराणि च ॥"४३३॥

---

"शुश्रूषोः श्रद्धधानस्य वासुदेव कथारुचिः ।
स्यान्महत् सेवया विप्राः पुण्यतीर्थ निषेवणात् ॥

टीका— ननु सत्यमेव कर्म्म निर्म्मलनी हरिकथारतिः, तथापि तस्यां रुचिर्नोत्पद्यते किं कूर्म्मस्तत्राह शुश्रूषोरिति । । पुण्यतीर्थ निषेवणात् निष्पापस्य महत् सेवा स्यात्, तया च तद्धर्म्मश्रद्धा, ततः श्रवणेच्छा, ततो रुचिः स्यादित्यर्थः ।

निष्पाप मानव, तीर्थ भ्रमण करने पर महत् सङ्ग उसका होता है, निष्पाप व्यक्ति के द्वारा ही महत् सेवा होती है, उस से महत् के आचरित धर्म में महत्त्व बोध होता है, अनन्तर उन महत् के मुख से उनके आचरित धर्म के विषय में श्रवणेच्छा होती है। अनन्तर धर्म में रुचि होती है। अतएव निष्पाप होना आवश्यक है, अन्यथा प्रतिकूल आचरण से मानव उत्तम वस्तु लाभ से वञ्चित हो जाता है। ब्रह्मसूत्र ४।१।१ में उक्त है— "आवृत्तिरसकृदुपदेशात्"

मानवगण प्रायशः अपराधी होते हैं, जो अपराधी नहीं हैं, उन के पक्ष में एकवार अनुष्ठान से फलोदय होता है, किन्तु अपराधी के पक्षमें श्रवणादि अङ्गों की आवृत्ति की आवश्यकता है, कारण, असकृत् अनुष्ठान हेतु श्रुति का विधान है। स च एषोऽणिमा, ऐतदात्म्यमिदं सर्वं, तत् सत्यं स आत्मा, तत्त्वमसीत्यादि श्रुति समूह का कथन नौ वार हुआ है। एकवार अनुष्ठित होने पर फल होता है, इस प्रकार शास्त्र वचन के साथ इस का विरोध नहीं है, कारण, उक्त वचन अदृष्ट फल विषयक है, और प्रस्तुत प्रकरण आत्मलाभ रूप प्रत्यक्ष फल विषयक होने के कारण, धान्य को तूष रहित करने के निमित्त जिस प्रकार पुनः पुनः अवघात करना आवश्यक होता है, वैसे ही आत्म साक्षात् कार पर्य्यन्त पुनः पुनः श्रवणादि की आवृत्ति होनी चाहिये भा० १।१।३ में वर्णित है—

"निगम कल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम् ।
पिवत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः ॥"

यह श्रीभागवत है, और इसका पान पुनः पुनः निरन्तर ही करें। इस में एक कण भी अपेय नहीं है, मोक्ष होने पर भी भगवत पान का विराम नहीं है, स्वर्गादि सुख की भाँति मुक्त गण इस को परित्याग नहीं करते हैं, किन्तु सर्वदा सेवन करते हैं। आत्माराम गण भी निरन्तर श्रीहरि की उपासना करते रहते हैं। अपराधी व्यक्तियों के पक्ष में पुनः पुनः भक्त्यङ्ग की आवृत्ति करना आवश्यक है। पद्म पुराण के नामापराध भञ्जन स्त्रोत्र में नाम को उद्देश्य करके उक्त है—

"नामापराध युक्तानां नामान्येव हरन्त्यघम् ।
अविश्रान्तिप्रयुक्तानि तान्येवार्थकराणि च ॥"४३३॥

नामापराध युक्त व्यक्ति के पक्ष में नामापराध क्षालन हेतु अपर उपायावलम्बन की आवश्यकता नहीं है, अविश्रान्त श्रीहरिनाम ग्रहण से अपराध विनष्ट होता है, एवं नाम का फलोदय भी होता है। एतज्जन्य ही त्रैलोक्य सम्मोहन तन्त्रादि में अष्टादशाक्षर मन्त्र की आवृत्ति विहित है—

**एतदपेक्षयैव त्रैलोक्य-सम्मोहनतन्त्रादावष्टादशाक्षरादेरावृत्तिविधानम्, यथा—**

"इदानीं शृणु देवि त्वं केवलस्य मनोर्विधिम् । दशकृत्वो जपेन्मन्त्रमापत्कल्पेन मुच्यते ॥४३४॥
सहस्रजप्तेन तथा मुच्यते महतैनसा । अयुतस्य जपेनैव महापातकनाशनम् ॥"४३५॥

**तथा ब्रह्मवैवर्त्ते नामोपलक्ष्य—**

"हनन् ब्राह्मणमत्यन्तं कामतो वा सुरां पिबन् ।
कृष्ण कृष्णेत्यहोरात्रं सङ्कीर्त्य शुचितामियात् ॥"४३६॥

**अत्रापराधालम्बनत्वेनैव वर्त्तमानानां पापवासनानां सहैवापराधेन नाश इति तात्पर्य्यम् ।**

**एतादृश-प्रतिबन्धापेक्षयैवोक्तं विष्णुधर्मे—**

"रागादिदूषितं चित्तं नास्पदं मधुसूदने । बध्नाति न रतिं हंसः कदाचित् कर्द्दमाम्बुनि ॥४३७॥
न योग्या केशवं स्तोतुं वाग्दुष्टा चानृतादिना । तमसो नाशनायालं नेन्दोलेखा घनावृता ॥"४३८॥

---

"इदानीं शृणु देवि त्वं केवलस्य मनोर्विधिम् ।
दशकृत्वो जपेन्मन्त्रमापत्कल्पेन मुच्यते ॥४३४॥
सहस्रजप्तेन तथा मुच्यते महतैनसा ।
अयुतस्य जपेनैव महापातकनाशनम् ॥"४३५॥

हे देवि ! मैं अष्टादशाक्षर मन्त्रविधि को कहता हूँ । सुनो । दशवार मन्त्र जप करने से वह आपत से मुक्त होता है । सहस्र मन्त्र जप करने से महापाप से मुक्त होता है अयुत जप करने से महापातक विनष्ट होता है । ब्रह्म वैवर्त्त में नामोपलक्ष्य में वर्णित है—

"हनन् ब्राह्मणमत्यन्तं कामतो वा सुरां पिबन् ।
कृष्ण कृष्णेत्यहोरात्रं सङ्कीर्त्य शुचितामियात् ॥"४३६॥

ब्राह्मण हत्या करके अथवा स्वेच्छा से मदिरापान करके जो पाप होता है—उस की शुद्धि अहोरात्र कृष्ण कृष्ण कीर्त्तन करने से होती है ।

अपराध को अवलम्बन करके ही वर्त्तमान पाप वासना होती है, नाम सङ्कीर्त्तन के द्वारा अपराध के सहित पाप वासना भी विनष्ट हो जाती है, यही उक्त प्रकरण का तात्पर्य्य है ॥

अतएव इस प्रकार प्रतिबन्धक की अपेक्षा करके ही विष्णु धर्म में वर्णित है—

"रागादिदूषितं चित्तं नास्पदं मधुसूदने ।
बध्नाति न रतिं हंसः कदाचित् कर्द्दमाम्बुनि ॥४३७॥
न योग्या केशवं स्तोतुं वाग्दुष्टा चानृतादिना ।
तमसो नाशनायालं नेन्दोर्लेखा घनावृता ॥"४३८॥

विषयासक्ति प्रभृति दोषों से दुष्टचित्त, भगवान् श्रीमधुसूदन में स्थिर नहीं होता है । हंस कभी भी कर्दमयुक्त जल में प्रीत नहीं होता है. मिथ्या के द्वारा जो वाक्य दूषित है, वह कभी भी केशव का स्तव करने में सक्षम नहीं होता है । जिस प्रकार चन्द्र कला यदि मेघ द्वारा आच्छन्न होती है तो अन्धकार विनष्ट नहीं कर सकती है ।

सिद्ध महापुरुष वृन्द के भगवद् भजनानुशीलन, परमानन्द लाभ हेतु होता है, अर्थात् वे सब जितने ही भक्त्यङ्ग का अनुशीलन करते रहते हैं, उतने ही अपूर्व आनन्दास्वादन लाभ करते रहते हैं । असिद्ध

सिद्धानामावृत्तिस्तु प्रतिपदमेव सुखविशेषोदयार्था, असिद्धानामावृत्तिनियमः फलपर्य्याप्ति-पर्य्यन्तः, तदन्तरायेऽपराधावस्थिति वितर्कात्। यतः कौटिल्यम्, अश्रद्धा, भगवन्निष्ठाच्यावक-वस्त्वन्तराभिनिवेशः, भक्तिशैथिल्यम्, स्वभक्त्याद्यादिकृतमानित्वमित्येवमादीनि महत्सङ्गादि-लक्षण-भक्त्यापि निवर्त्तयितुं दुष्कराणि चेत्तर्हि तस्यापराधस्यैव कार्य्याणि तान्येव च प्राचीनस्य तस्य लिङ्गानि। अतएव कुटिलात्मनामुत्तमर्मापि नानोपचारादिकं नाङ्गीकरोति भगवान् यथा दूत्यगतो दुर्य्योधनस्य। आधुनिकानाञ्च श्रुतशास्त्राणामप्यपराधदोषेण श्रीभगवति श्रीगुरौ तद्भक्तादिषु चान्तरानादरादावपि सति बहिस्तदर्च्चनाद्यारम्भः कौटिल्यम्। अतएवाकुटिलमूढ़ानां भजनाभासादिनापि कृतार्थत्वमुक्तम्, कुटिलानान्तु भक्त्यनुवृत्तिरपि न

---

भक्त वृन्द के निमित्त पुनः पुनः भक्त्यङ्ग अनुशीलन का जो नियम कथित है, वह भक्ति का मुख्य फल रूप श्रीभगवत् स्फूर्त्ति साधक हृदय में होने के निमित्त है। कारण, साधक का जब अनुभव होगा कि— श्रीनामादि भक्त्यङ्ग का अनुष्ठान यथावत् सम्पन्न करने पर भी अभीष्ट देव की स्फूर्त्ति जब साधक हृदय में नहीं होती है, तब जानना होगा कि—श्रीभगवत् स्फूर्त्ति का बाधक अपराध हृदय में विद्यमान है। कारण, उस से (१) कौटिल्य, (२) अश्रद्धा, (३) भगवद् विषयक निष्ठा शैथिल्य कारक भिन्न वस्तु में अभिनिवेश, (४) भजन में शैथिल्य, (६) एवं भजनादि जन्य अभिमान प्रभृति होते हैं। महत् सङ्गादि स्वरूप भक्त्यङ्ग अनुष्ठान के द्वारा भी जब उक्त दोष समूह अपसारित नहीं होते हैं, तब जानना होगा कि– श्रीनामापराध के कार्य्य स्वरूप उक्त दोष समूह को जानना होगा। यदि वर्त्तमान जन्म में उस प्रकार कोई अपराध नहीं हुआ है, अथच उक्त दोष समूह हैं, तब समझना होगा कि पूर्व जन्मार्जित अपराध के कारण ही उक्त कौटिल्यादि दोष समूह की विद्यमानता हृदय में है। अर्थात् साधक जिस समय अनुभव करेगा कि— विविध भजनानुष्ठान यथावत् करने पर भी हृदय की कुटिलता, (१) भक्ति, भक्त, भगवान् में अविश्वास, (२) भजन निष्ठापहारक विषयान्तर में अभिनिवेश (३) भजन विषय में शैथिल्य (४) स्वयं भजन करते रहते हैं—इस प्रकार अभिमान (५) यह पाँच दोषों का अपसारण हृदय से नहीं हो रहा है, तब जानना होगा कि– वर्त्तमान जन्म में अथवा प्राक्तन जन्मान्तर में अनुष्ठित प्रचुर अपराध सञ्चित हैं, ऐसा न होने से ही महत् सङ्ग एवं महत् मुख से श्रीहरि कथा श्रवणादि करने से भी हृदय से उक्त पञ्चदोष विदूरित क्यों नहीं होते हैं? अतएव कुटिल चित्त युक्त व्यक्ति के द्वारा प्रदत्त विविध उपचार भी श्रीहरि अङ्गीकार नहीं करते हैं। उस का दृष्टान्त—महाभारतीय उद्योग पर्व में है, कुरुपाण्डव युद्धारम्भ होने के पहले स्वयं भगवान् श्रीकृष्ण, दूत होकर सन्धिकार्य्य के निमित्त हस्तिनापुर में उपस्थित होने के समय कुटिलमति दुर्य्योधन स्वयं भगवान् श्रीकृष्ण को वशीभूत करने के निमित्त राजपथ के उभय पार्श्ववर्त्ती गृह समूह को सुसज्जित करके प्रतिगृह में श्रीकृष्ण नाम सङ्कीर्त्तन प्रभृति भक्त्यङ्ग का अनुष्ठान कराये थे। किन्तु कुटिलता प्रयुक्त यह सब अनुष्ठान होने के कारण, उस को देखना सुनना न पड़े, तज्जन्य श्रीकृष्ण नयन मुद्रित करके एवं कर्ण में अङ्गुलि प्रदान पूर्वक राज सभा में उपस्थित हुये थे। अतएव कपटता पूर्बक भगवत् भजनानुष्ठान करने से श्रीभगवान् प्रसन्न नहीं होते हैं, एवं निज हृदय भी अस्वच्छ रहता है। वर्त्तमान शरीर में अवस्थान कर अपराधानुष्ठान कारी जन वृन्द भक्ति शास्त्र श्रवणादि करने पर एवं बाहर भगवान् एवं श्रीगुरुदेव, तथा भगवद् भक्त के प्रति अर्च्चनादि अनुष्ठान करने से भी चित्त में अनादर प्रभृति दोष विद्यमान होने के कारण, उक्त अनुष्ठान समूह को कौटिल्य जानना होगा। एतज्जन्य अकुटिल मूर्खगण भजनादि के आभास मात्र से भी कृतार्थ होते हैं। इस का वर्णन पहले हुआ है। कुटिल चित्त वृत्ति सम्पन्न

इत्युक्तदोषोऽप्यत्र नास्ति, आज्ञाकरणात्, प्रत्युत जातयोरपि निर्वेद-श्रद्धयोस्तत्करण एवाज्ञाभङ्गः स्यात्। यथा च व्याख्यातम् (भा० ११।११।३२)–"आज्ञायैवं गुणान् दोषान्" इत्यस्य टीकायाम्—"भक्ति--दार्ढ्येन निवृत्ताधिकारतया सन्त्यज्य" इति। निवृत्ताधिकारत्वञ्चोक्तं श्रीकरभाजनेन (भा० ११।५।४१) —

"देवर्षि-भूताप्तनृणां पितॄणां न, किङ्करो नायमृणी च राजन्।
सर्व्वात्मना यः शरणं शरण्यं, गतो मुकुन्दं परिहृत्य कर्त्तम्॥"४६१॥

इति तेषां न किङ्करः, किन्तु श्रीभगवत एवेत्यनधिकारित्वम्। कर्त्तं कृत्यम्, कर्त्तं

---

श्रुति स्मृति मेरी अवज्ञा है, जो उस द्विविध आज्ञा के मध्य में किसी भी एक को लङ्घन करता है। वह मेरी आज्ञाच्छेदी एवं द्वेषी है, अतएव वह मेरा भक्त होने पर भी वैष्णव नहीं है। यह भगवत् कथित दोष भी पूर्वोक्त अधिकारी के पक्ष में प्रयोज्य नहीं हो सकता है। "तावत् कर्म्माणि कुर्वीत" यह आदेश श्रीभगवान् का ही है। प्रत्युत निर्वेद एवं श्रद्धा का उदय जिस में हुआ है, उस के पक्ष में नित्य नैमित्तिक कर्मानुष्ठान करने से ही आज्ञाभङ्ग रूप दोष होता है। भा० ११।११।३२ में उक्त है—

"आज्ञायैव गुणान् दोषान् मयादिष्टानपि स्वकान्।
धर्मान् सन्त्यज्य यः सर्वान् मां भजेत स च सत्तमः॥

टीका—किञ्च मया वेदरूपेण आदिष्टानपि स्वधर्मान् सन्त्यज्य यो मां भजेत सोऽप्येवं पूर्वोक्तवत् सत्तमः। किमज्ञानान्नास्तिक्याद्वा? न। धर्माचरणे सत्त्व शुद्ध्यादीन् गुणान् विपक्षे नरक पातादीन् दोषांश्चाज्ञाय ज्ञात्वापि मद् ध्यान विक्षेपतया मद्भक्त्यैव सर्वं भविष्यतीति दृढ़ निश्चयेनैव धर्म्मान् सन्त्यज्य। यद्वा भक्ति दार्ढ्येन निवृत्ताधिकारतया सन्त्यज्य। अथवा विद्धैकादश्युपवास कृष्णैकादश्यनुपवासानिवेद्य श्राद्धादयो ये भक्तिविरुद्धा धर्मास्तान् सन्त्यज्येत्यर्थः।'

श्रीधर स्वामिपाद ने उक्त श्लोक की टीका में कहा है—

"भक्ति दार्ढ्येन निवृत्ताधिकारतया सन्त्यज्य" अर्थात् नित्यनैमित्तिक कर्म का अनुष्ठान निष्काम भाव से करने से चित्त शुद्धि रूप गुण, एवं न करने से प्रत्यवाय होगा, यह जानकर भी जो व्यक्ति, भक्ति में दृढ़ता हेतु कर्मानुष्ठान में अधिकार नहीं है, यह जानकर नित्य नैमित्तिक कर्म्म समूह को सम्यक् परित्याग करके मेरा भजन करता है, वह सत्तम अर्थात् साधु श्रेष्ठ है।

निवृत्ताधिकारता का कथन भा० ११।५।४१ में श्रीकर भाजन ने किया है।

"देवर्षि-भूताप्तनृणां पितॄणां, न किङ्करो नायमृणी च राजन्।
सर्व्वात्मना यः शरणं शरण्यं, गतो मुकुन्दं परिहृत्य कर्त्तम्॥"४६१॥

टीका—भक्तस्य विधि निषेध निवृत्तेः कृत कृत्यतामाह देवर्षीति आप्ताः पोष्याः, कुटुम्बिनः, इतरे देवादयः, पञ्चयज्ञ देवताः। एषां यथा अभक्तः ऋषी अतएव तेषां किङ्करस्तदर्थं नित्यं पञ्चयज्ञादि कर्त्ता। तथा च स्मृतिः,। हीन जाति परिक्षीणमृणार्थं कर्म्म कारयेदिति। अयन्तु न तथा। कोऽसौ यः सर्वतोभावेन श्रीमुकुन्दं शरणं गतः। कर्त्तं कृत्यं परित्यज्य। यद्वा कर्त्तं भेदं परिहृत्य। कृतीच्छेदन इत्यस्मात्। वासुदेवः सर्वमिति बुद्ध्येत्यर्थः।

हे राजन्! जो व्यक्ति, निखिल कर्त्तव्य परित्याग करके सर्वान्तःकरण से शरणागत पालक श्रीमुकुन्द

भेदमित्यर्थे ततो देवतादीनां स्वातन्त्र्यमिति यावत् । एवमेवोक्तं गारुड़े—

"अयं देवो मुनिर्वन्द्य एष ब्रह्मा बृहस्पतिः । इत्याख्या जायते तावद्यावन्नार्चयते हरिम् ।।"४६२।। इति ।

न च विकर्म्म-प्रायश्चित्तरूपं कर्म्मान्तरं कर्त्तव्यम्, तस्य तच्छरणस्य विकर्म्मप्रवृत्त्यभावात् । कथञ्चिदापतितेऽपि विकर्म्मणि तदनुस्मरणेनैव प्रायश्चित्तस्याप्यानुषङ्गिकसिद्धि रित्यप्युक्त-मनन्तरपद्ये नैव (भा० ११।५।४२) –

"स्वपादमूलं भजतः प्रियस्य, त्यक्तान्यभावस्य हरिः परेशः ।
विकर्म्म यच्चोत्पतितं कथञ्चिद्–,धुनोति सर्वं हृदि सन्निविष्टः ।।"४६३।। इति ।

त्यक्तोऽन्यत्र देवतान्तरे भावो भगवतीव भक्तिर्येनेति च व्याख्येयम् । अत्र कर्म्मपरित्याग-हेतुत्वेनाभिधानात् श्रद्धाशरणापत्त्योरैकार्थ्यं लभ्यते, तच्च युक्तम् । श्रद्धा हि शास्त्रार्थविश्वासः शास्त्रञ्च तदशरणस्य भयं तच्छरणस्याभयं वदति ततो जातायाः श्रद्धायास्तच्छरणापत्तिरेव

---

की शरण ग्रहण करता है, वह व्यक्ति, देव, ऋषि, भूत, आत्मीय, स्वजन एवं पितृ वृन्द का किङ्कर नहीं है, एवं किसी के पास ऋणी भी नहीं है । यहाँ श्लोकस्थ 'कर्त्त' पद का अर्थ कृत्य है । कर्त्त शब्द का अर्थ भेद है । अर्थात् श्रीभगवान् से देवता प्रभृति में जो स्वातन्त्र्य बुद्धि, उस को छोड़ कर । अर्थात् स्वतन्त्र रूप से देवतागण के प्रति आराध्य बुद्धि परित्याग करके, जो व्यक्ति, श्रीभगवान् में एकान्त भाव से शरणागत हुआ है, उसको कुछ भी करणीय नहीं है । इस अवस्था का ही निवृत्ताधिकारता समझना होगा । वह व्यक्ति, देव, ऋषि वृन्द का किङ्कर नहीं है कि श्रीभगवान् का ही किङ्कर है । अतएव जो जिस का किङ्कर है, वह उस की सेवा करेगा । दूसरी की सेवा क्यों करेगा ? गरुड़ पुराण में इस प्रकार उल्लेख है ।

'अयं देवो मुनिर्वन्द्य एष ब्रह्मा बृहस्पतिः ।
इत्याख्या जायते तावद्यावन्नार्चयते हरिम् ।।"४६२।।

यह देवता है, यह मुनि है, यह ब्रह्मा है, यह बृहस्पति है, अतएव यह सब मेरे वन्दनीय हैं, इस प्रकार संज्ञा । तब तक होती है, जब तक श्रीहरि की अर्चना नहीं करते हैं । और भी विशेष ज्ञातव्य यह है कि—यदि किसी कारण से विकर्म्म उपस्थित हो तो, उसका प्रायश्चित्त रूप कर्म्मान्तर का अनुष्ठान करना कर्त्तव्य नहीं है । कारण, श्रीहरि चरणों में शरणागत जन की प्रवृत्ति विकर्म्म में हो ही नहीं सकती यदि दैवात् विकर्म्म उपस्थित भी होता है, तो श्रीभगवान् के नियत स्मरण प्रभाव से आनुषङ्गिक रूप में प्रायश्चित्त भी सिद्ध हो जाता है । भा० ११।५।४२ में उक्त है—

"स्वपादमूलं भजतः प्रियस्य, त्यक्तान्यभावस्य हरिः परेशः ।
विकर्म्म यच्चोत्पतितं कथञ्चिद्–,धुनोति सर्वं हृदि सन्निविष्टः ।।"४६३।।

टीका—विहित कर्म निवृत्तिमुक्त्वा निषेधनिमित्त प्रायश्चित्त निवृत्तिमाह स्वपादमूलमिति । त्यक्तोऽन्यस्मिन् देहादौ देवतान्तरे वा भावो येन । अतएव तस्य विकर्म्मणि प्रवृत्तिर्न सम्भवति । यच्च कथञ्चित् प्रमादादिना उत्पतितं भवेत् तदपि हरिर्धुनोति । ननु यमस्तन्न मन्येत, तत्राह । परेशः । ननु श्रुतिस्मृती ममैवाज्ञे इति भगवद्वचनात् स्वाज्ञा भङ्गं कथं सहेत तत्राह प्रियस्य । नानु नायं पापक्षयार्थं भजते, तत्राह । हृदि सन्निविष्टः । नहि वस्तु शक्ति रर्थितामपेक्षते--इत्यर्थः ।

श्रीकरभाजन कहे थे– जो व्यक्ति, अन्य देवता के प्रति भाव शून्य होकर भक्ति युक्त हृदय से श्रीहरि

लिङ्गमिति । न च देवादि-तर्पणमात्र-तात्पर्य्येणापि पृथक् पृथगाराधनं कर्त्तव्यम्, (भा० ४।३१।१४ "यथा तरोर्मूलनिषेचनेन" इत्यादौ तत्पौनरुक्त्यप्राप्तेः । न च त्यक्तकर्म्मणो मध्ये विघ्नस्थगितायामपि भक्तौ तत्त्यागानुतापो युज्यते, (भा० १।५।१७) "त्यक्त्वा स्वधर्म्मं चरणाम्बुजं हरे-,र्भजन्नपक्कोऽथ पतेत्ततो यदि" इत्याद्युक्तेः । श्रीगीतासु च (१८।६६)—

---

के चरणार्च्चन करता है, श्रीहरि उसके प्रति अतीव सन्तुष्ट होते हैं, यदि असावधनता के कारण स्वभाव वशतः कदाचित् विकर्म्म उपस्थित हो जाता है, तो उस के मानस में उदित श्रीहरि ही उस के विधर्म को विदूरित कर देते हैं । आदेश लङ्घन कारी के प्रति अधिकार यमराज का ही है ? इस के उत्तर में कहते हैं, 'परेशः' अर्थात् श्रीहरि ही परमेश्वर हैं । परमेश्वर का आदेश सब को शिरोधार्य्य है । कर्म्म त्याग विषय के हेतु रूप में उल्लिखित होने के कारण, श्रद्धा एवं शरणापत्ति की एकार्थता प्रतीत होती है । कारण, "मत् कथा श्रवणादौ वा श्रद्धा यावन्नजायते" श्लोक में कहा गया है, जब तक श्रीहरि कथा श्रवण कीर्त्तनादि में श्रद्धा का उदय नहीं होता है, तब तक नित्यनैमित्तिक कर्म्म करना चाहिये । अर्थात् श्रद्धोदय होने से नित्य नैमित्तिक कर्म्म त्याग करना चाहिये । यहाँपर भी श्रद्धा को कर्म त्याग के हेतु रूप में उल्लेख किया गया है । "सर्वात्मना यः शरणं शरण्यम्" (भा० ११।११।३२) श्लोक में कथित है, एकान्त भाव से श्रीहरि चरण में शरणागत व्यक्ति के पक्ष में काम्य कर्म त्याग करना चाहिये । अतएव शरणागति एवं श्रद्धा की एक कार्य्यकारिता हेतु श्रद्धा एवं शरणागति का तात्पर्य्य एक ही जानना होगा । श्रद्धा एवं शरणा गति शब्द का एकार्थ होना ही युक्ति युक्त है । कारण, शास्त्रार्थ में दृढ़ विश्वास का नाम श्रद्धा है । शास्त्र भी श्रीभगवान् में शरणागत जन के प्रति अभय एवं अशरणागत व्यक्ति के प्रति भय का उपदेश प्रदान करते हैं । अतएव शास्त्रार्थ में दृढ़ विश्वास उत्पन्न हुआ है अथवा नहीं, उसका चिह्न शरणापत्ति ही है, अर्थात् शरणापत्ति के द्वारा ही श्रद्धा का सुष्ठु परिचय होता है ।

देव वर्ग को सुतृप्त करने के निमित्त पृथक् पृथक् रूप से उन सब की आराधना करनी नहीं चाहिये । अर्थात् कामना शून्य होकर केवल तृप्ति साधन हेतु भी पृथक् पृथक् भाव से देवतान्तर की आराधना करना कर्त्तव्य नहीं है । भा० ४।३१।१४ में उक्त है—

"यथा तरोर्मूल निषेचनेन तृप्यन्ति तत् स्कन्धभुजोपशाखा ।
प्राणोपहाराच्च यथेन्द्रियाणां तथैव सर्वार्हणमच्युतेज्या ।।

टीका—ननु नाना कर्मभिस्तत्तद् देवता प्रीति निमित्तान्यपि फलानि हरेः प्रीत्याभवन्ति, तत्तद् देवताराधनेन तु न किञ्चिदिति स दृष्टान्तमाह यथेति । मूलात् प्रथम विभागाः, स्कन्धाः तद्विभागाः भुजाः, तेषामपि उपशाखाः, उपलक्षणमेतत्, पत्र पुष्पादयोऽपि तृप्यन्ति । नतु मूलसेकं विना ताः स्व स्व निषेचनेन । प्राणस्योपहारो भोजनं, तस्मादेव इन्द्रियाणां तृप्तिः, न तु तत्तदिन्द्रियेषु पृथक् पृथगन्नलेपनेन । तथा अच्युताराधनमेव सर्वदेवताराधनं, न पृथगित्यर्थः ।

जिस प्रकार वृक्ष के मूल देश में जल सिञ्चन करने से ही उसके स्कन्ध,भुज, उपशाखा प्रभृति की तृप्ति होती है, अथवा पाक स्थली में भोजन प्रदान करने से जिस प्रकार इन्द्रिय वृन्दकी तृप्ति होती है, उस प्रकार श्रीविष्णु की आराधना करने से समस्त देव वृन्द सुतृप्त होते हैं । इस में पुनरुक्ति दोष नहीं है ।

समस्त काम्य कर्मत्याग करने के पश्चात् प्रचुर विघ्न से भक्ति स्थगिता होने पर काम्य कर्म त्याग हेतु अनुताप करना चाहिये । इस प्रकार कथन समीचीन नहीं है । कारण, भा० १।५।१७ में उक्त है—

"त्यक्त्वा स्वधर्मं चरणाम्बुजं हरे र्भजन्नपक्वोऽथ पतेत्ततोयदि ।

"सर्वधर्म्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥"४९४॥

इत्यस्य (भा० ११।५।४१) "देवर्षि-भुताप्तनृणाम्" इत्यादिद्वयेनैकार्थ्यं दृश्यते । अतो भक्त्यारम्भ एव तु स्वरूपत एव कर्म्मत्यागः कर्त्तव्यः । परित्यज्येत्यत्र परि-शब्दस्य हि तथैवार्थः । (गी० १८।६५) "मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु" इत्यादिना चानन्यामेव भक्तिमुपदिदेश । गौतमीये च–

'न जपो नार्च्चनं नैव ध्यानं नापि विधिक्रमः । केवलं सततं कृष्णचरणाम्भोज--भाविनाम् ॥"४९५॥

तथा विष्णुपुराणेऽपि भरतमुद्दिश्य (वि० पु० २।१३।६-१०) —

यज्ञेशाच्युत गोविन्द माधवानन्त केशव । कृष्ण विष्णो हृषीकेशेत्याह राजा स केवलम् ॥४९६॥
नान्यज्जगाद मैत्रेय किञ्चित् स्वप्नान्तरेष्वपि ॥"४९७॥ इति ।

---

यत्र क्ववाभद्रमभूदमुष्य किं को वार्थ आप्तोऽभजतां स्वधर्मतः ॥"

स्व धर्म परित्याग पूर्वक श्रीहरि चरण कमल का भजन करते करते भजन अपक्वावस्था में भजन से स्खलित होने पर क्या भक्त का अमङ्गल होना सम्भव है ? इस प्रकार उल्लेख के कारण, कर्म त्याग जन्य अनुताप करना युक्ति युक्त नहीं है । श्रीभगवद् गीता में उक्त है—(१८।६६)

"सर्वधर्म्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥"४९४।

एवं भा० ११।५।४१ "देवर्षि भूताप्तनृणाम्" श्लोकद्वय में एकार्थता दृष्ट होती है । अर्थात् श्रीभगवच्चरणों में शरणागत जन के प्रति सर्व कर्म त्याग का उपदेश, उभय श्लोक में एक प्रकार ही दृष्ट होता है । अतएव भक्ति के प्रारम्भ में ही स्वरूपतः ही काम्य कर्म परित्याग करना कर्त्तव्य है। 'सर्व धर्म्मान् परित्यज्य' इत्यादि श्लोकस्थ 'परि' शब्द का अर्थ—स्वरूपतः कर्म त्याग ही है । (गी० १८।६५) में उक्त है—

"मन्मनाभव मद् भक्तो मद्याजी मां नमस्कुरु ॥"

तुम मेरे विषयक सङ्कल्प युक्त भक्त बनो, मेरी पूजा करो, मुझ को नमस्कार करो, इस में भी श्रीभगवान् अनन्य भक्ति का ही उपदेश प्रदान किये हैं ।

गौतमीय में भी दृष्ट होता है—

"न जपो नार्च्चनं नैव ध्यानं नापि विधिक्रमः ।
केवलं सततं कृष्णचरणाम्भोज–भाविनाम् ॥"४९५॥

जो सतत श्रीकृष्ण चरण कमल की चिन्ता करते हैं, उनके पक्ष में जप, अर्च्चन, ध्यान, एवं विधि क्रम की कोई अपेक्षा नहीं है । उस प्रकार विष्णु पुराण में भी भरत को लक्ष्य करके कहा गया है—

"यज्ञेशाच्युत गोविन्द माधवानन्त केशव ।
कृष्ण विष्णो हृषीकेशेत्याह राजा स केवलम् ॥४९६॥
नान्यज्जगाद मैत्रेय किञ्चित् स्वप्नान्तरेष्वपि ॥"४९७॥

हे मैत्रेय ! भरत महाराज, यज्ञेश, अच्युत, गोविन्द, माधव, अनन्त, केशव, कृष्ण, विष्णु, हृषीकेश, केवल यह सब नामों का उच्चारण करते थे, स्वप्न में भी अपर कुछ भी नहीं कहते थे । इस से प्रमाणित

अत्र वचनान्तरस्याप्यनवकाशात् । सुतरामेव तत्तद्वचनमयकर्म्मान्तरपरित्यागोऽङ्गीकृतः । कथञ्चित् क्रियमाणमपि तन्नाम्नैव कृतमित्यवगतेश्च सर्वत्र तदीक्षणाच्छुद्धभक्तित्वमेवाङ्गीकृतम् । यथोक्तं पाद्मे—

"सर्वधर्मोज्झिता विष्णोर्नाम–मात्रैकजल्पकाः । सुखेन यां गतिं यान्ति न तां सर्वेऽपि धार्मिकाः ।"४९८। इति।

तस्मान्मतान्तरेणाप्युपचितः श्रद्धावतोऽनन्यभक्त्यधिकारः कर्माद्यनधिकारश्चेति । किन्तु श्रद्धासद्भाव एव कथं ज्ञायत इति विचार्य्यम् । तत्र च लिङ्गत्वेन पूर्व्वपूर्व्वं शरणापत्तिरुपदिष्टैव । यस्याञ्च शरणापत्तौ वक्ष्यमाणानि "आनुकूल्यस्य सङ्कल्पः" इत्यादीनि लिङ्गानि । तथा व्यवहार-कार्पण्याद्यभावोऽपि श्रद्धालिङ्गं ज्ञेयम् । शास्त्रं हि तथैवश्रद्धामुत्पादयति, (गी० ९।२२)—

"अनन्याश्चिन्तयन्तो मां ये जनाः पर्य्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ।।४९९।। इत्यादि ।

---

हुआ कि, अन्य किसी प्रकार वचनान्तर का अवकाश ही नहीं था । सुतरां उक्त वचन द्वयके द्वारा कर्मान्तर का परित्याग स्वीकृत हुआ है । जब कभी जो कुछ कर्म करते वह कर्म— श्रीभगवन्नामोच्चारण के सहित ही करते । यह सुस्पष्ट रूप से विदित हुआ । सर्वत्र श्रीनाम एवं नामी के प्रति अभेद दृष्टि होने के कारण इस दृष्टान्त के द्वारा विशुद्ध भक्ति धर्म ही स्वीकृत हुआ है । पद्म पुराण में कथित है—

"सर्वधर्मोज्झिता विष्णोर्नाम-मात्रैकजल्पकाः ।
सुखेन यां गतिं यान्ति न तां सर्वेऽपि धार्मिकाः ।।"४९८।।

इस में भी काम्य कर्मादि शून्य भक्ति का संवाद परिवेशित हुआ है— सर्व धर्म त्याग कर जो केवल मात्र श्रीहरिनाम ही उच्चारण करते हैं, वे सब सुख पूर्वक जो गति को प्राप्त करते हैं, समस्त धार्मिक वृन्द उस गति को प्राप्त करने में सक्षम नहीं हैं । अतएव श्रद्धावान् व्यक्ति का ही अनन्या भक्ति में अधिकार है । वचनान्तर के द्वारा परि पुष्ट एवं काम्य कर्मादि में अनधिकार का प्रदर्शन भी हुआ है । सम्प्रति शास्त्र में श्रद्धा है अथवा नहीं । इस को कैसे जानेंगे— सम्प्रति इस विषय में विचार करना आवश्यक है । पहले श्रद्धा का अस्तित्व के सम्बन्ध में यह निर्णय किया गया है कि श्रीभगवच्चरणों में शरणागति होने से ही जानना होगा कि—शास्त्रीय श्रद्धा विद्यमान है । अर्थात् श्रीभगवत् शरणागति ही श्रद्धा का लक्षण है । जिस शरणापत्ति में यह सब लक्षण सुस्पष्ट प्रकाशित होते हैं ।

"आनुकूल्यस्य सङ्कल्प-प्रातिकूल्यविवर्जनम् ।
रक्षिष्यतीति विश्वासो गोप्तृत्वे वरणं तथा ।
आत्म निःक्षेप कार्पण्ये षड़् विधा शरणागतिः ।।"

इस लक्षण के द्वारा श्रद्धा का अस्तित्व विषयक ज्ञान होता है । श्रद्धा का अस्तित्व विषय में और भी विशेष लक्षण यह है--कि—समस्त व्यवहारों में जिस का कार्पण्य परिलक्षित नहीं होता है, वह व्यक्ति श्रद्धावान् है । कारण, शास्त्र, उस प्रकार श्रद्धा उत्पादन करते हैं । गीता के ९।२२ में उक्त है

"अनन्याश्चिन्तयन्तो मां ये जनाः पर्य्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ।।"४९९।।

किञ्च, श्रद्धावतः पुरुषस्य भगवत्सम्बन्धि- द्रव्य-जाति-गुण-क्रियाणां शास्त्रे श्रूयमाणेष्वैहिक-व्यवहारिक-प्रभावेष्वपि न कथञ्चिदनाश्वासो भवति । ततस्तासु प्राकृत-द्रव्यादिस धारणदृष्ट्या दोषविशेषानुसन्धानतो न कदाचिदप्रवृत्तिः स्यात् । ते च तादृश प्रभावाः, (बृहन्नारदीये)—

"अकालमृत्युशमन सर्वव्याधिविनाशनम् । सर्वदुःखो शमन हरिपादोदकं शुभम् ।।"५००।। इत्यादयः ।

केचित्तु तत्र तत्र श्रद्धावन्तोऽपि स्वापराधदोषेण सम्प्राप्त तत्फलं नोदेतीति स्थगितायन्ते यत्तु (गारुड़े) "यः स्मरेत् पुण्डरीकाक्षं स वाह्याभ्यन्तरः शुचिः" इत्यादौ श्रद्दधाना अपि स्नानादिकमाचरन्ति, तत् खलु श्रीमन्नारद-व्यासादि-सत्परम्पराचारगौरवादेव, अन्यथा

---

हे अर्जुन ! जो, अन्य चिन्ता विमुख होकर सम्यक् रूप से मेरी उपासना करते हैं, यह सब नित्याभियुक्त व्यक्तियों के योग क्षेम का वहन मैं ही करता हूँ ।।

इस से व्यवहारिक विषय में कार्पण्य का अभाव सूचित हुआ है । और भी देखना होगा कि—जिस की श्रद्धा भगवान् में हुई है, उस में, शास्त्र से ऐहिक पारलौकिक विषयों का श्रवण होने पर भी भगवत् सम्बन्धि द्रव्य, जाति, गुण एवं क्रिया के प्रति कभी भी किसी प्रकार अविश्वास आचरण उपस्थित नहीं होगा । अर्थात् ऐहिक व्यवहारिक मणि, मन्त्र, औषधि का प्रभाव शास्त्र से श्रवण करके भी श्रीभगवत् सम्बन्धि वस्तु श्रीचरण मृत के प्रति अविश्वास उपस्थित नहीं होगा । अतएव प्राकृत द्रव्यादि साधारण दृष्टि से भगवत् सम्बन्धीय पदार्थ में दोष का अनुसन्धान न होने से कभी भी भगवत् सम्बन्धीय वस्तु के प्रति अविश्वास उत्पन्न नहीं होगा । अर्थात् जिस प्रकार प्राकृत अन्नव्यञ्जनादि श्रीभगवान् में अर्पित होने से महाप्रसाद होता है, उस में प्राकृत अंश विनष्ट होता है । अतः चिन्मयत्व प्राप्त विषय में सन्देह का अवकाश न होने से महाप्रसाद ग्रहण विषय में किसी प्रकार अप्रवृत्ति नहीं होगी । उक्त महाप्रसाद एवं श्रीविग्रह प्रभृति का अलोक सामान्य प्रभाव का विवरण शास्त्र में उपलब्ध है ।

बृहन्नारदीय में वर्णित है—

"अकालमृत्युशमनं सर्वव्याधिविनाशनम् ।
सर्वदुःखोपशमनं हरिपादोदकं शुभम् ।।"५००।।

अर्थात् श्रीहरिपादोदक—अकालमृत्यु नाशक, सर्वव्याधि विनाशक, एवं सर्व दुःखोपशमक है । इस प्रकार भूरि भूरि प्रमाण विद्यमान हैं । कतिपय व्यक्ति कहते हैं—अप्राकृत श्रीचरणामृत, श्रीमहाप्रसाद, श्रीविग्रह प्रभृति में श्रद्धा युक्त होकर भी निज कृत अपराध हेतु भक्त्यङ्ग का फलं दय स्थगित होता है । किन्तु "यः स्मरेत् पुण्डरीकाक्षं स वाह्याभ्यन्तरः शुचिः" अर्थात् जो पुण्डरीकाक्ष का स्मरण करता है, उस के वाह्याभ्यन्तर पवित्र होते हैं, शास्त्रीय इस वाक्यमें विश्वस्त होकर भी वह व्यक्ति शुद्धि हेतु स्नानादि आचरण करता है, उस का कारण है, लोकों की कदर्य्य वृत्ति को निरोध करने के निमित्त सदाचार परम्परा की रक्षा करना, अर्थात् श्रीव्यास, श्रीनारद प्रभृति साधु वृन्दके आचरण का पालन करना कल्याण कर है । महाजन प्रवर्त्तित आचरण को लङ्घन करने से अपराध अवश्य होता है । श्रीनारद प्रभृति महाजन वृन्द लोक समाज की कदर्य्य वृत्ति निरोध हेतु उस प्रकार मर्य्यादा स्थापन किये हैं । इस प्रकार जानना होगा । श्रद्धोदय होने से सिद्धि वा असिद्धि उभय अवस्था में ही स्वर्ण लिप्सु की इच्छा के समान महाजन गण की अनुवृत्ति की चेष्टा निरन्तर रहेगी । जिस प्रकार सुवर्ण लाभ हेतु बारम्बार सुवर्ण को अग्नि दग्ध करना पड़ता है, दग्ध होने से उसका वर्ण उज्ज्वल होता है, एवं स्वर्ण प्राप्ति हेतु अत्यधिक प्रयत्न भी होता

तदतिक्रमेऽप्यपराधः स्यात् । ते च तथा मर्य्यादां लोकस्य कदर्य्यवृत्त्यादि-निरोधायैव स्थापितवन्त इति ज्ञेयम् । किञ्च, जातायां श्रद्धायां सिद्धावसिद्धौ च स्वर्ण सिद्धिलिप्सोरिव सदा तदनुवृत्तिचेष्टैव स्यात् । सिद्धिश्चात्रान्तः करणकामादि-दोषक्षयकारि-परमानन्द-परम-काष्ठागामि-श्रीहरिस्फुरणरूपैव ज्ञेया । तस्यां स्वार्थसाधनानुप्रवृत्तौ च दम्भ-प्रतिष्ठालिप्सादि-मयचेष्टालेशोऽपि न भवन्ति, न सुतरां ज्ञानपूर्व्वकं महदवज्ञादयोऽपराधाश्चापतन्ति, विरोधादेव। अतएव चित्रकेतोः श्रीमहादेवापराधस्तस्य स्वचेष्टान्तरेणाच्छन्नस्वभावस्य भागवतत्वा ज्ञानादेव मन्तव्यः । यदि वा श्रद्धावतोऽपि प्रारब्धादि वशेन विषय-सम्बन्धाभ्यासो भवति, तथापि तद्बाधया विषय-सम्बन्ध-समयेऽपि दैन्यात्मिका भक्तिरेवोच्छलिता स्यात् यथोक्तम् (भा० ११।२०।२८) "जुषमाणश्च तान् कामान् दुःखोदर्कांश्च गर्हयन्" इत्यत्र, (भा० ११।१४।१८)

---

है । उस प्रकार जिस की सिद्धि हुई है, उसकी सिद्धि का वैशिष्ट्य सम्पादन हेतु एवं जिस की सिद्धि नहीं हुई है, उस को भी सिद्धि लाभ हेतु महाजन गण की अनुकूल वृत्ति का अनुष्ठान निरन्तर करना पड़ता है। यहाँ सिद्धि शब्द का अर्थ है—अन्तः करण की कामादि दोष क्षय कारी परमानन्द की परमकाष्ठा प्राप्त अनवरत श्रीहरि स्फूर्त्ति ।

उक्त अनवरत श्रीहरि स्फूर्त्ति अवस्था में—निज प्रयोजन साधन की अनुकूल प्रवृत्ति में भी कपटता प्रतिष्ठादि मय चेष्टा का लेशमात्र उदय नहीं होता है । अतएव बुद्धि पूर्वक महत् की अवज्ञा प्रभृति अपराध का भी उद्गम नहीं होता है । कारण, श्रीहरिस्फूर्त्ति एवं महत् अवमानन दोनों ही विरुद्ध है, अर्थात् श्रीहरि की स्मृति होने पर श्रीहरि स्वरूप महत् प्रभृति की अवज्ञा प्रभृत्ति हो ही नहीं सकती । किन्तु जो प्रथम जीवन से ही स्वेच्छा चारी हैं । मन मुखी होकर चलना पसन्द करते हैं, महाजन प्रवर्त्तित पथ का अनुसरण नहीं करते हैं, केवल स्वेच्छाचारितमय आचरण ही करते हैं, उन के पक्ष में अपराध उद्गम की बहुल सम्भावना हैं । किन्तु जो लोक साधन की प्रथमावस्था से ही सर्वावस्था में महाजन गण प्रवर्त्तित पथ के अनुवर्त्ती होकर चलते हैं । उनके पक्ष में प्रकृति विरोध के कारण महदमर्य्यादाजनित दोष उपस्थित नहीं हो सकता है । अतएव चित्र केतु का श्रीमहादेव के चरणों में अपराध जो हुआ था, उस का कारण ही है, स्वाधीन चेष्टान्तर के द्वारा महाजनानुगत भक्त स्वभाव आच्छन्न होने के कारण भगवद् भक्त तत्त्व सम्बन्धमें अज्ञान तज्जन्य ही महदवमानन रूप अपराध हुआ था ।

यद्यपि श्रद्धावान् जन का निज प्रारब्ध प्रभृति कर्म्म के कारण, विषय सम्बन्ध का अनुशीलन होता है, तथापि भगवद् भक्ति बाधा निबन्धन जब मन का सम्बन्ध विषय के सहित हो ही जाता है, तब भक्त में दैन्यात्मिका भक्ति उच्छलिता हो उठती है,कारण, प्रारब्ध कर्म वशता हेतु मन के सहित द्वन्द्व युद्ध करके जयलाभ करने में अक्षम होने पर भक्त अतिशय क्षिण्ण होकर निज प्रेष्ठ प्रभु के श्रीचरणों में आर्त्तिपूर्ण निवेदन ही करता रहता है । हे नाथ ! मैं निज सामर्थ्य से मन के सहित संघर्ष कर के उस को आप के चरणों मे उन्मुख करने में अक्षम हूँ, एकमात्र आप की कृपा ही अवलम्बन है, इस प्रकार विज्ञापन भक्त के द्वारा होता है ।

भा० ११।२०।२८ श्रीभगवान् कहे हैं—यह सब विषय भोग भी करते हैं, किन्तु विषय भोग का फल को दुःख मय जानकर मन मन में धिक्कार भी देते हैं—

"जुषमाणश्च तान् कामान् दुःखोदर्कांश्च गर्हयन् "

"बाध्यमानोऽपि मद्भक्तः" इत्यादौ च, (गी० ९।३०) "अपि चेत् सुदुराचारः" इत्याद्युक्तस्यानन्यभाक्त्वेन लक्षिता तु या श्रद्धा सा खलु (गी० १७।१) "ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः" इत्यादिवल्लोकपरम्पराप्राप्ता, न तु शास्त्रार्थावधारणजाता। शास्त्रीयश्रद्धायान्तु जातायां सुदुराचारत्वायोगः स्यात्, (विष्णुपुराणे( "परपत्नी-परद्रव्य" इत्यादिविष्णुतोषणशास्त्रविरोधात्,(विष्णुधर्मे) "मर्यादाञ्च कृतां तेन" इत्यादिना तद्भक्तत्वविरोधाच्च। न तु सा दुराचारता तद्भक्तिमहिमश्रद्धा-कृतैव, अपि-शब्देन दुराचारत्वस्य हेयत्वव्यञ्जनात्, तथा (गी० ९।३१) –"क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति" इत्युत्तराप्रतिपत्तेः, "नाम्नो बलाद्यस्य हि पापबुद्धिः" इत्यादि-नामापराधाच्च। ततः सा श्रद्धा न शास्त्रीय-

---

यहाँ धिक्कार शब्द से मानसिक क्लेश भोग करते हैं। जानना होगा। भा० ११।१४।१८ में कहा गया है—"बाध्यमानोऽपि मद्भक्तः" मेरा भक्त विषय के द्वारा आकृष्यमाण होकर भी उस के द्वारा बाधित नहीं होता है। गीता के ९।३० में उक्त है—"अपि चेत् सुदुराचारः" इस में भक्त को जो अनन्य उपासक कहा गया है। वह श्रद्धा, गीतोक्त "ये शास्त्रविधि मुत्सृज्य यजन्ते श्रद्धयान्विताः" श्रद्धा के समान ही है, अर्थात् यह श्रद्धा लोक परम्परा प्राप्त श्रद्धा है, किन्तु शास्त्रीय श्रद्धा नहीं है, कारण, लोक रीति से उत्पन्न श्रद्धा में सुदुराचार होना सम्भव है, किन्तु शास्त्रीय श्रद्धा में सुदुराचारत्व आ ही नहीं सकता है। कारण, शास्त्रीय श्रद्धा जिस के हृदय उदित है, उसकी प्रवृत्ति कभी भी शास्त्र विरुद्ध दुराचार में होगी ही नहीं। कारण, विष्णु पुराणोक्त"

परपत्नी परद्रव्य परहिंसासु यो मतिं।
न करोति पुमान् भूप तुष्यते तेन केशव ॥

जो व्यक्ति पर पत्नी, परद्रव्य, एवं परहिंसा में मति नहीं देता है, उस के द्वारा ही श्रीविष्णु सन्तुष्ट होते हैं। इस प्रकार विष्णु तोषण शास्त्र के सहित उक्त आचरण का विरोध उपस्थित होगा। विशेष कर—विष्णु धर्मोत्तर में उक्त है—

"मर्य्यादाञ्च कृतां तेन यो भिनत्ति स मानवः।
न विष्णु भक्तो विज्ञेयः साधुधर्म्मार्चनो हरिः ॥"

जो व्यक्ति, भगवत् कृत मर्य्यादा को अर्थात् नियम को लङ्घन करता है, वह व्यक्ति विष्णुभक्त रूप से ख्यात नहीं हो सकता है। कारण, पवित्र धर्माचरण से ही श्रीभगवान् सन्तुष्ट होते हैं। इस प्रमाण से निर्णीत हुआ कि—भक्त के पक्ष में श्रीविष्णु के द्वारा प्रवर्त्तित नियम लङ्घन करना निषिद्ध है। उक्त दुराचारता का उद्भव भगवद् भक्ति के प्रति विश्वास से नहीं हुआ है। कारण, 'अपि चेत्" शब्द के द्वारा दुराचारत्व को हेय कहा गया है, तत् परवर्त्ती श्लोक में कहा गया है—

"क्षिप्रं भवन्ति धर्मात्मा शश्वच्छान्ति निगच्छति।"

इस से प्रतीत होता है कि धर्म जीवन प्राप्त करना एवं दुराचारत्व से निवृत्त होना वाञ्छनीय है, अतएव दुराचारत्व का हेयत्व ही प्रतिपादित हुआ है। भक्ति महिमा बोध से यदि उस प्रकार दुराचारत्व की उत्पत्ति होती तो "नाम्नो बलाद् यस्य हि पापबुद्धिः" भक्ति के आचरण के बल से पाप में प्रवृत्त होने से उसका उद्धार नहीं है, इस प्रकार भीति प्रदर्शक वाक्य का लङ्घन कभी भी नहीं होता, अर्थात् किसी

भक्त्यधिकारिणो विशेषणत्वे प्रवेशनीया, किन्तु भक्तिप्रशंसायामेव। तादृश्यापि श्रद्धया भक्तेः सत्त्वहेतुत्वम्, न तु देवतान्तरयजनवत् (गी० १७.१) "ये शास्त्रविधिमुत्सृज्य" इत्यादावेवोक्तमन्यादृशत्वमिति। अस्याः श्रद्धाया पूर्णतावस्था तु ब्रह्मवैवर्त्ते—

"किं सत्यमनृतञ्चेह विचारः सम्प्रवर्त्तते। विचारेऽपि कृते राजन्नसत्यपरिवर्ज्जनम्।
सिद्धं भवति पूर्णा स्यात्तदा श्रद्धा महाफला।।५०१।। इति।

तदेवंलक्षणेषु श्रद्धोत्पत्तिलक्षणेषु सत्सु विधीयते, (भा० ११।२०।८)—"यदृच्छया मत्-कथादौ जातश्रद्धस्तु यः" इत्यादि, (भा० ११।२०।९) "मत्कथाश्रवणादौ वा" इत्यादि च।

---

भी भक्त्यङ्ग के अवलम्बन से पाप में प्रवृत्त होने से अपराध होता है। अतएव वह लोक परम्परा प्राप्त श्रद्धा, शास्त्रीय भक्ति में जो अधिकारी है, उसका विशेषण नहीं हो सकता है। किन्तु भक्ति प्रशंसा में वह ग्रहणीय है। अर्थात् लोक परम्परा प्राप्त श्रद्धा होने से ही मानव शास्त्रीय भक्ति में अधिकारी होगा, इस प्रकार अर्थ नहीं है। किन्तु उस प्रकार श्रद्धायुक्त व्यक्ति यदि भक्ति का अनुष्ठान करता है, एवं यदि वह अनुष्ठान साधुधर्म प्राप्ति करने का हेतु होता है तो, शास्त्रार्थ में दृढ़ विश्वास से उत्पन्न श्रद्धा विद्यमान होने से वह श्रद्धा ही साधुत्व के प्रति हेतु होगी—इस विषय में अधिक कहने का प्रयोजन ही क्या है। किन्तु देवतान्तर के अर्च्चन के समान जो मानव शास्त्रविधि को लङ्घन करके श्रद्धा युक्त हृदय से अर्च्चना करता है, उस से जिस प्रकार अर्च्चन कारी को सिद्धि अर्थात् चित्त शुद्धि नहीं होती है, एवं उपशमात्मक सुख तथा परागति मुक्ति भी नहीं होती है। उस प्रकार भगवद् भजन में यदि लौकिक श्रद्धा है, एवं उस के द्वारा श्रीभगवान् की उपासना करता है, अन्य देवता की उपासना नहीं करता है, तो उस से भी चित्त शुद्धि हो सकती है, यह है—"अपिचेत् सुदुराचार" श्लोक का तात्पर्य्यार्थ। इस प्रकार श्रद्धा की परिपूर्ण अवस्था का वर्णन ब्रह्म वैवर्त्त पुराण में इस प्रकार है—

"किं सत्यमनृतञ्चेह विचारः सम्प्रवर्त्तते।
विचारेऽपि कृते राजन्नसत्यपरिवर्ज्जनम्।
सिद्धं भवति पूर्णा स्यात्तदा श्रद्धा महाफला।।"५०१।।

पहले भक्ति अङ्ग का माहात्म्य सत्य है, अथवा मिथ्या है, इस प्रकार विचार उपस्थित होता है, जिस प्रकार श्रीचरणामृत के विषय में कहा गया है—

"अकालमृत्यु हरणं सर्वव्याधिविनाशनम्" श्रीचरणामृत, अकालमृत्यु हरण कारी है, एवं समस्त रोग निवारक है, इस प्रकार माहात्म्य श्रवण करके प्रथमतः मन में एक आन्दोलन उपस्थित होता है, यह कथन सत्य है, किंवा मिथ्या है? नीरोगता हेतु औषधि सेवन जब करना पड़ता है, तब सुस्थिर होता है कि—यह प्रशंसा वचन मात्र है। इस प्रकार मानसिक स्थिति होने के पश्चात् मन में एक युक्ति उपस्थित होती है। वह यह है। यदि व्यवहारिक मणि, मन्त्र, एवं औषधि की चिन्तातीत, युक्त्यतीत सामर्थ्य है, तब अप्राकृत भगवत् सम्बन्धि वस्तु श्रीचरणामृत में इस प्रकार चिन्तातीत अलोक सामान्य सामर्थ्य होना क्या असम्भव है? इस प्रकार विचार के द्वारा श्रीचरणामृत के प्रति अविश्वासांश विदूरित हो जाता है, एवं विश्वासांश निश्चित होता है। यह विश्वास सुदृढ़ होकर श्रद्धानाम से अभिहित होता है, यह श्रद्धा महाफल दायिनी होकर पूर्णता प्राप्त करती है। संशय निरसन पूर्वक उक्त रीति से श्रद्धोत्पत्ति होने पर ही "यदृच्छया मत् कथादौ जात श्रद्धस्तु यः पुमान्" इत्यादि एवं मत् कथा श्रवणादौ वा श्रद्धा यावन्न जायते,

अत एवमनधिकार्य्यधिकारि-विषयत्वविवक्षयैव श्रीभगवन्नारदयोर्वाक्ये व्यवतिष्ठेते, (गी० ३।२६)

"न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।
जोषयेत् सर्वकर्म्माणि विद्वान् युक्तः समाचरन् ॥"५०२॥ इति,

(भा० १।५।१५)—

"जुगुप्सितं धर्म्मकृतेऽनुशासतः स्वभावरक्तस्य महान् व्यतिक्रमः ।
यद्वाक्यतो धर्म्म इतीतरः स्थितो, न मन्यते तस्य निवारणं जनः ॥"५०३॥ इति च ।

---

"तावत् कर्माणि कुर्वीत" इत्यादि श्लोकों के द्वारा काम्य कर्म परित्याग विहित हुआ है । अतएव कर्मत्याग के अधिकारी अनधिकारी विषय की विवेचना करके ही श्रीभगवान् एवं श्रीनारद के वाक्य की व्यवस्था करनी चाहिये । श्रीभगवद् गीता के ३।२६ में कथित है—

"न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।
जोषयेत् सर्वकर्माणि विद्वान् युक्तः समाचरन् ॥"५०२॥

जो लोक, काम्य कर्म एवं काम्य कर्म के फल में आसक्त हैं, विद्वान् व्यक्ति को चाहिये कि वे उनसब को विचलित न करें, अर्थात् कर्म्म त्याग की प्रवृत्ति को उत्पादन न करें, किन्तु स्वयं उक्त कर्म्माचरण करके कर्म में प्रवृत्ति उत्पादन करावें, इस प्रकार कर्म करने की जो विधि भगवद् वाक्य में दृष्ट होती है, वह विशुद्धा भक्ति में श्रद्धा हीनता दोष दुष्ट अनधिकारी व्यक्ति के पक्ष में प्रयोज्य है । श्रीभागवत १।५।१५ में उक्त है—

"जुगुप्सितं धर्म्मकृतेऽनुशासतः स्वभावरक्तस्य महान् व्यतिक्रमः ।
यद्वाक्यतो धर्म्म इतीतरः स्थितो, न मन्यते तस्य निवारणं जनः ॥"५०३॥

क्रमसन्दर्भ—तदेवं श्रीहरि यशो गौणीकृत्य भारतादिषु कृतं जुगुप्सितं काम्य कर्मादि वर्णन प्राचुर्यं लोकानां तदेक निष्ठत्वाय जातमित्याह,— जुगुप्सितमिति । स्वभावरक्तस्यानादि विषय वासनया स्वभावत एव कामनापरस्य पुरुषस्य धर्म कृते भगवद्धर्म पर्य्यन्तस्य निष्कामस्य धर्मस्य कृते भगवद्धर्ममेव तत्र पर्य्यवसायितुमनु निरन्तरमेव निन्द्यं काम्यं कर्म शासत उपदिशतः, न तु वेदे प्रवर्त्तनार्थं तत् प्ररोचनया यत् किञ्चिदनूद्य मुहुरपवदतः कस्यचिदन्यस्यापि महान् व्यतिक्रमो वेद-तात्पर्य्य ज्ञानेनान्यायः स्यात् । भवतः स्यात् इति तु कथं ब्रवानीति भावः । ननु वेदेऽपि तादृक् काम्य कर्म कथनस्य निरन्तरता दृश्यते ? तत्राह,— यद् वाक्यत इति । यस्य तद् विधस्य वाक्यतो दुरूहवेदार्थ निर्णायकाद् वाक्याद् वचन मात्रात्, किमुत ब्रह्म लोक प्रसिद्ध शतकोटि विस्तर पुराणेतिहासतः, स्वेच्छया येन संगृहीतात्तद् वाक्यादितरोजनस्तदेव कर्त्तव्यमिति परामृशन् स्थितो यत्र निश्चलः स्यात्, तस्य तद् विधस्य निवारणमन्यथा वक्तृतया चिन्तनं तव स्वल्पतम वाक्येनान्यस्य प्रचुरतमवाक्येनापि न मन्येत । यद् यस्मात्तव शिष्याणामपि जैमिन्यादीनामन्या प्रति पत्तिर्दृश्यते, तस्मात् प्रवृत्तं निवृत्तञ्चधर्म्मं परित्यज्य "निवृत्ततर्षैरुपगीयमानात्" इत्यादिरीत्या सर्वेषां सर्वापच्छमकं काम्यञ्च यद्भगवद् यशस्तदेव वर्ण्यतामिति भावः, अतो "न बुद्धि भेदं जनयेदज्ञानां कर्मसङ्गिनाम् । जोषयेत् सर्व कर्म्माणि विद्वान् युक्तः समाचरन्" इति श्रीगीता वाक्यं तु ज्ञानाद्यु पदेष्टृ विषयमेव, नतु भगवद् धर्म महिमज्ञत्वतादृशविषयम्" तदुक्तं श्रीमदजितेन, "स्वयं निःश्रेयसं विद्वान् न वक्त्यज्ञाय कर्म हि । न राति रोगिणोऽपथ्यं वाञ्छतोऽपिभिषक्तमः । इति तादृशोपदेशे सर्वेषामेव परम-विश्वासास्पदत्वादिति भावः ।

एवमजितवाक्यञ्च तदधिकारिविषयमेव (भा० ६।९।५०)—

"स्वयं निःश्रेयसं विद्वान् न वक्त्यज्ञाय कर्म्म हि ।
न राति रोगिणोऽपथ्य वाञ्छतोऽपि भिषक्तमः ।"५०४॥ इति ।

अत्र यद्यप्यधिकारितायां श्रद्धैव हेतुः, सा चाज्ञस्य न सम्भवतीति नैतत् तद्विषयं स्यात्, तथापि कथमपि प्राचीन संस्कारवितर्केण तदधिकारित्वनिर्णयान्न दोष इति ज्ञेयम् । अन्यथोपदेष्टुरेव दोषः स्यात्, "अश्रद्दधाने विमुखेऽप्यशृण्वति यश्चोपदेशः" इति वक्ष्यमाणापराधश्रवणात् । अथ प्रकृतमनुसरामः ॥

---

देवर्षि नारद ने श्रीकृष्णद्वैपायन को कहा—हे मुनिवर ! श्रीहरि के यशोवर्णन व्यतीत महाभारत प्रभृति में आपने जो धर्मादि का वर्णन किया है, उस से मानवों को हित नहीं होगा । प्रत्युत विरुद्ध ही होगा । कारण, स्वभावतः निन्दित काम्य कर्मादि में अनुरक्त पुरुष के प्रति धर्मानुष्ठान के निमित्त अनुशासन करना आप के पक्ष में अतीत अन्याय हुआ है । कारण, जिस निन्दित काम्य कर्म में मानव की रुचि स्वाभाविकी है, तज्जन्य उपदेश करना क्या अन्याय नहीं है ? विशेष कर जिस के उपदेश वाक्य से प्राकृत व्यक्ति 'यही मुख्य धर्म है' इस प्रकार निश्चय कर लेता है, उस उपदेश वाक्य में विज्ञ व्यक्ति यदि दोष प्रदर्शन करता है तो, उस निषेध वाक्य को अपर व्यक्ति नहीं मानेगा । कारण, वे सब कहेंगे कि, काम्य कर्म्मानुष्ठान हेतु श्रीकृष्णद्वैपायन व्यास ने उपदेश दिया है । उस पर दूसरे का उपदेश मान्य नहीं हो सकता । इस प्रकार आप के उपदेश से अत्यधिक अन्याय हुआ है । उस का अनुभव स्वयं ही कर सकते हैं । आप सर्व श्रेष्ठ महर्षि न होते तो, आप के उस प्रकार उपदेश से जगत् का अकल्याण नहीं होता । भा० ६।९।५० में श्रीभगवान् अजित के उपदेश वाक्य प्रयोग, भी कर्म्मपरित्याग करने का अधिकारी को लक्ष्य करके हुआ है ।

"स्वयं निः श्रेयसं विद्वान् न वक्त्यज्ञाय कर्महि ।
न राति रोगिणो ऽपथ्यं वाञ्छतोऽपि निषक्तमः ।।५०४।।

टीका—कर्म प्रवृत्ति मार्गं न वक्ति हि । अपथ्यं यथा न राति ददाति, भिषक् तमः, सद्वैद्यः ।

जो विज्ञ व्यक्ति, स्वयं ही अनुभव करते हैं कि काम्य कर्म्मासक्ति ही जीव का अनर्थ का मूल कारण है, एवं कर्म्मासक्ति त्याग ही शान्ति का निदान है । यह जानकर कभी भी अज्ञ जन को काम्य कर्मानुष्ठान करने के निमित्त विज्ञजन उपदेश नहीं करते हैं । जिस प्रकार उत्तम चिकित्सक—कभी भी रोगी के इच्छानुरूप अपथ्य दान नहीं करते हैं । यहाँपर अनन्य भक्ति अनुष्ठान में अधिकारी होने के निमित्त श्रद्धा ही एकमात्र हेतु है । एवं वह श्रद्धा भी भक्ति माहात्म्य अनभिज्ञ व्यक्ति में होना असम्भव है । अतएव अज्ञ व्यक्ति के प्रति इस प्रकार कर्म त्याग करने का उपदेश हो ही नहीं सकता है । तथापि, भक्ति तत्त्वानभिज्ञ व्यक्ति का पूर्व जन्मार्जित भक्ति संस्कार है, इस प्रकार अनुमान करके ही कर्म्मत्याग करने का उपदेश देना दोषावह नहीं है । श्रीमान् अजित, जो उपदेश प्रदान किये हैं—उस में उक्त है—

"स्वयं निश्श्रेयसं विद्वान् न व्यक्त्यज्ञाय कर्म्म हि ॥

अर्थात् अज्ञ व्यक्ति को कर्मत्याग हेतु उपदेश विज्ञ व्यक्ति न करे । जब तक भक्ति में दृढ़ श्रद्धा नहीं होती है, तब तक काम्य कर्मानुष्ठान करना अनुचित है, इस प्रकार उपदेश न करे । अतएव अधिकारी अनधिकारी विवेचना करके ही कर्म आचरणीय अनाचरणीय है, इस प्रकार उपदेश करना कर्त्तव्य है ।

१७४। तदेवं योगत्रयं तदधिकारहेतुंश्चोक्त्वा कर्मणोऽपि यथा भगवत्साम्मुख्यरूपत्वं स्यात्तथाह, (भा० ११।२०।१०-११) —

(१७४) "स्वधर्म्मस्थो यजन् यज्ञैरनाशीःकाम उद्धव।
न याति स्वर्ग-नरकौ यद्यन्यन्न समाचरेत् ।।५०५।।
अस्मिँल्लोके वर्त्तमानः स्वधर्म्मस्थोऽनघः शुचिः।
ज्ञानं विशुद्धमाप्नोति मद्भक्तिञ्च यदृच्छया ।।"५०६।।

टीका च—"अनाशीः कामोऽफलकामः, अन्यन्निषिद्धम्, नरकयानं हि द्विधैव भवति,—विहिनातिक्रमाद्वा निषिद्धाचरणाद्वा। अतः स्वधर्मस्थत्वान्निषिद्धवर्ज्जनाच्च नरकं न याति, अफलकामत्वान्न स्वर्गमपीत्यर्थः। किन्तु अस्मिँल्लोके अस्मिन्नेव देहे अनघो निषिद्धपरित्यागी

---

इस प्रकार रीति को अवलम्बन करने से गीता एवं श्रीमद् भागवत वचन का सामञ्जस्य हो सकता है। अन्यथा, उपदेश कारी का दोष होगा, कारण—अश्रद्धालु जन को उपदेश करने से उपदेश कारी का दोष होता है। "अश्रद्दधाने विमुखेऽप्यशृण्वति यश्चोपदेशः"

अश्रद्धालु, विमुख, अश्रवण कारी व्यक्ति को उपदेश देने से अपराध होता है। शास्त्र में यह लिखित है। अनन्तर प्रकरण प्राप्त विचार्य्य विषय का अनुसरण करते हैं।।१७३।।

१७४। कर्म, ज्ञान, एवं भक्ति योग रूप साधन का विवरण कह कर, उक्त साधनों के अधिकारी कौन कौन होते हैं, उस को कहने के पश्चात् काम्य कर्माचरण भी किस प्रकार भगवत् साम्मुख्य का उपयोगी हो सकता है, उस का विवरण, भा० ११।२०।१०-११ के द्वारा प्रस्तुत करते हैं—

(१७४) "स्वधर्म्मस्थो यजन् यज्ञैरनाशीःकाम उद्धव।
न याति स्वर्ग-नरकौ यद्यन्यन्न समाचरेत् ।।५०५।।
अस्मिँल्लोके वर्त्तमानः स्वधर्म्मस्थोऽनघः शुचिः।
ज्ञानं विशुद्धमाप्नोति मद्भक्तिञ्च यदृच्छया ।।"५०६।।

उद्धव को श्रीभगवान् कहे हैं—हे उद्धव! स्वधर्म में अर्थात् निज निज वर्ण एवं आश्रमोचित धर्म पालन पूर्वक निष्काम भाव से यज्ञ के द्वारा यज्ञेश्वर मेरी आराधना करने से स्वर्ग वा नरक गमन नहीं होगा, यदि निषिद्ध आचरण एवं शास्त्र विहित धर्म का अतिक्रम नहीं करता तो, वर्त्तमान शरीर में रहकर निष्पाप भाव से धर्मानुष्ठान करते करते विशुद्ध ज्ञान लाभ होता है। एवं यदृच्छाक्रम से अर्थात् साधुसङ्ग से मुझ में भक्ति लाभ भी कर सकता है। उस श्लोक में श्रीधर स्वामिपाद कृत टीका की व्याख्या इस प्रकार है— अनाशीः कामः, फलाकाङ्क्षारहितः, अन्यत् निषिद्धाचरणम्।

अर्थात् निषिद्धाचरण न करके निष्काम भाव से यज्ञ के द्वारा यज्ञेश्वर मेरी आराधना करने पर स्वर्ग एवं नरक में गमन नहीं होगा। कारण, मनुष्य दो प्रकार से नरक गमन करते हैं, एक प्रकार निषिद्ध आचरण करके अपर प्रकार शास्त्र विहित कर्मानुष्ठान न करके। अतएव स्वधर्म आचरण में प्रवृत्त, एवं निषिद्ध त्यागी होने के कारण, नरक गमन नहीं होता है। एवं कामना शून्य होने के कारण, स्वर्गगमन भी नहीं होता है। किन्तु वर्त्तमान शरीर में ही निषिद्ध परित्यागी होने के कारण शुचि अर्थात् पवित्र है, भोगादि में आसक्ति शून्य है। इस प्रकार व्यक्ति विशुद्ध ज्ञान प्राप्त करने का अधिकारी है।

अतः शुचिर्निवृत्तरागादिमलः, यदृच्छयेति केवलज्ञानादपि भक्तेर्दुर्लभतां द्योतयति" इत्येषा। अत्राफलकामत्वं केवलेश्वराज्ञाबुद्धया कुर्वाणत्वम्। अत्र ज्ञानिसङ्गे सति तन्मात्रत्वमेव भगवदर्पणं भवेत्। भक्तसङ्गे तु तत्सन्तोषमयत्वम्। अतो यदृच्छयेति पूर्ववद्भक्तसङ्ग-तत्-कृपालक्षणं भाग्यं बोधितम्। यदुक्तम् (भा० २।३।११) "एतावानेव यजतामिह निःश्रेयसोदयः' इत्यादि॥ श्रीभगवान्॥

१७५। तदेवं कर्मार्पणकेवलज्ञानकेवलभक्त्योऽधिकारिभेदेनव्यवस्थापिताः ततः स्वाधिकारानुसारेणैव स्थातव्यमित्याह (भा० ११।२०।२६)—

---

केवल ज्ञान से भी भक्ति की दुर्लभता को कहते हैं, उस प्रकार अधिकारी का यदि साधुसङ्ग लाभ होता है, तो मेरे (श्रीकृष्ण) चरणों में भक्ति हो सकती है। यहाँपर ज्ञातव्य यह है कि—कामना शून्य होकर कर्म्म करने का अर्थ है—केवल ईश्वराज्ञा बुद्धि से कर्म्मानुष्ठान करना, अर्थात् अपर किसी प्रकार उद्देश्य से प्रेरित न होकर केवल मात्र परमेश्वर के आदेश बुद्धि से कर्मानुष्ठान करने का नाम ही निष्काम कर्म है। यदि उस प्रकार अधिकारी को ज्ञानी महत् का सङ्ग होता है तो भगवदाज्ञाबुद्धि से कर्म्माचरण करने पर भी उक्त कर्म ईश्वर को अर्पण करना पड़ता है। और यदि भक्त महत् का सङ्ग हो जाता है तो, भगवत् सन्तोषार्थ कर्मानुष्ठान ही निष्काम कर्म होता है। यहाँ मूल श्लोक में "यदृच्छया" पद का उल्लेख है। उस का अर्थ है—' यदृच्छया मत् कथादौ" १७१ अनुच्छेद में लिखित भा० ११।२० अध्याय के श्लोक की व्याख्या में उक्त भक्तसङ्ग एवं तत् कृपा जनित भाग्य को ही जानना होगा। अर्थात् पूर्वोक्त कर्माधिकारी व्यक्ति का यदि ज्ञानी महत् का सङ्गलाभ होता है तो विशुद्ध ज्ञान लाभ से वह धन्य होगा, और भक्त महत् का सङ्ग लाभ होने से श्रीकृष्ण स्वरूप मुझमें भक्ति प्राप्तकर कृतार्थ हो सकता है। कारण, भक्त महत् के सङ्ग व्यतीत अपर किसी भी उपाय से भक्ति लाभ करने में कोई सक्षम नहीं होता है। इस अभिप्राय से ही भा० २।३।११ में श्रीशुक देवने कहा है—

"एतावानेव यजतामिह निःश्रेयसोदयः।
भगवत्यचलोभावो यद्भागवत सङ्गतः॥"

हे राजन्! जो, इन्द्रादि देवगण की आराधना यज्ञ के द्वारा करते हैं, उन उन देवता की आराधना के द्वारा यदि भगवद् भक्त सङ्ग लाभ होता है तो उक्त भक्त महत् सङ्ग से ही श्रीभगवान् के श्रीचरणों में अचला भक्ति का उदय होता है। यही काम्य कर्मानुष्ठानकारी का परम मङ्गल है।

श्रीभगवान् कहे थे॥१७४॥

१७५। अतएव निज अधिकार के अनुसार ही रहना चाहिये। कारण, भा० ११।२०।२६ में श्रीभगवान् उद्धव को कहे हैं—

(१७५) "स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्त्तितः।
विपर्य्ययस्तु दोषः स्यादुभयोरेष निश्चयः॥"५०७॥

टीका—"ननु तैरेव कर्मभिः केचिद् गुणदोष भाजः, केचिन्नेति कुतो वैषम्यम्। नह्यग्निना केचित् तप्यन्ते केचिन्नेति सम्भवति। तत्राह स्वे स्वे इति। अधिकार भेदेन कल्पितौ गुण दोषौ न वस्तु निष्ठाविति भावः।" क्रमसन्दर्भ। 'तत्र व्यवहारिकयो र्गुणदोषयो र्विधानार्थमधिकारिमात्रस्य पूर्वानुवादेनैव गुण दोषौ लक्ष्यति—स्वे स्वे इति। अधिकारे कामित्व निष्कामित्व वैराग्य श्रद्धाभिर्यथायोग्यतया विक्रियमाणे योग विशेषे। उभयोर्व्यवहारिक पारमार्थिकाधिकारिणोः, किन्तु पूर्वत्र गुणत्वं कल्पितमुत्तरत्र तु सिद्धमेवेति

(१७५) "स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्त्तितः ।
विपर्य्ययस्तु दोषः स्यादुभयोरेष निश्चयः ॥" ५०७॥ इति ।

स्पष्टम् ॥ श्रीभगवान् ॥

१७६ । तत्र साम्मुख्यद्वारभूतस्य कर्मणः साक्षात् साम्मुख्यरूपज्ञान-भक्त्युदयपर्य्यन्तत्वात् स्वयमेव ताभ्यां न्यक्कारः । अत्र साक्षात् साम्मुख्ये च निर्विशेषसाम्मुख्यं ज्ञानम् । सविशेषस्यापि तत्त्वस्य भगवत्त्वं परमात्मत्वञ्चेति मुख्यमाविर्भावद्वयमिति सविशेष-साम्मुख्य-रूपाया भक्तेस्तु मुख्यं भेदद्वयं भगवन्निष्ठत्वं परमात्मनिष्ठत्वञ्चेति । तदेतद्द्वयं श्रीगीतासूक्तम्, तत्र (गी० ८।३) "अक्षरं ब्रह्म परमम्" इत्यक्षर--शब्देन पूर्वोक्तं ब्रह्म, तत्साम्मुख्य रूपं ज्ञानात्मकमुपासनञ्चोत्तरोक्तं यथा (गी० ८।११) "यदक्षरं वेदविदो वदन्ति" इत्यादि, तथा

---

भावः । अत्र ज्ञान कर्म्मणोर्भक्त्यंश विना सिद्ध्यभावेन तन्मिश्रतयैव विहितत्वान्न तेन तत्र तत्र निष्ठाच्युतिः, किन्तु सर्वनिरपेक्षतया सर्वसाधिकायां भक्तावेव तत्तदंशमिश्रत्वे कृते निष्ठा च्युतिः स्यादितिगम्यते । तदेवं शक्त्यंश सहाया कर्म निष्ठा कर्मठे गुण स्तथा तत् सहाया ज्ञान निष्ठा ज्ञानिनि ततोऽपि गुणः । निष्किञ्चन भक्ति निष्ठा तु भक्तेः सर्वोत्कृष्टो गुणः, किमुत तत् साध्या प्रेमलक्षणा भक्तिरिति पूर्ववदेव प्राप्तम् । एवमेतद् विपर्य्ययो न्यूनेऽधिके वाधिकारे प्रवेशो दोषः । न्यूने पूर्व हानेः, अधिके परासिद्धेश्चेत्यर्थः ॥"

निज निज अधिकार में निश्चल भाव से अवस्थान करना ही गुण है । अधिकार विरुद्ध आचरण ही दोष है ।

श्रीभगवान् कहे थे ॥१७५॥

१७६ । जब तक भगवत् साम्मुख्य रूप ज्ञान वा भक्ति का उदय नहीं होता है, तब तक ही साधक को परतत्त्व साम्मुख्य के द्वारभूत काम्य कर्मानुष्ठान करना चाहिये, अर्थात् ज्ञान भक्ति अधिकार में प्रविष्ट होने के पूर्व पर्य्यन्त ही साधक काम्य कर्म करने में अधिकारी है । ज्ञान एवं भक्ति का उदय होने से स्वयं ही काम्य कर्म में तुच्छ बुद्धि हो जाती है, कारण, निष्काम भाव से श्रीभगवान् में अर्पित कर्म, ज्ञान एवं भक्ति में प्रवेश का द्वारस्वरूप है । साक्षात् साम्मुख्य के विषय में परतत्त्व का निर्विशेष साम्मुख्य ज्ञान, एक प्रकार है, और सविशेष परतत्त्व का साम्मुख्य भगवत्त्व एवं परमात्मत्व रूप में होता है, अर्थात् भगवत् लक्षण एवं परमात्म लक्षण भेद से परतत्त्व का मुख्य आविर्भाव दो प्रकार हैं । भक्ति के द्वारा सविशेष परतत्त्व का साम्मुख्य होता है, सविशेष परतत्त्व की मुख्य साम्मुख्य रूप भक्ति भी भगवन्निष्ठत्व एवं परमात्म निष्ठत्व भेद से द्विविध हैं । ब्रह्म, परमात्म एवं भगवद् भेद से परतत्त्व के त्रिविध आविर्भाव का संवाद श्रीभगवद् गीता के ८।३ में सुस्पष्ट रूप में है ।

"अक्षरं परमं ब्रह्म स्वभावोऽध्यात्म उच्यते ।

टीका—"न क्षरतीत्यक्षरं, नित्यं यत् परमं तद् ब्रह्म, एतद्वैतदक्षरं गार्गि ब्राह्मणा अभिवदन्तीति श्रुतेः । स्वभावः समात्मनां देहाध्यासवशाद् भावयति जनयति इति स्वभावो जीवः, यद्वास्वं भावयति परमात्मानं प्रापयति इति । स्वभावः शुद्ध जीवः, अध्यात्ममुच्यते । अध्यात्म शब्द वाच्य इत्यर्थः ॥"

अक्षर तत्त्व अर्थात् नित्य विनाश रहित एवं अवस्थान्तर शून्य तत्त्व ही पर ब्रह्म है । यहाँ अक्षर शब्द से ब्रह्म को कहा गया है । उस ब्रह्म का साम्मुख्य रूप में ज्ञानोपासना की कथा भी कही गई है । (गी० ८।११)—

"यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः ।

परमात्मानमपि (गी०८।४)-"पुरुषश्चाधिदैवतम्" इति, "अधियज्ञोऽहमेवात्र देहे देहभृताम्बर' इति च, विराड्‌व्यष्टिरूपाधिष्ठानद्वयभेदेन भिन्नप्रायमुक्त्वा भक्तिरीतिद्वयी तयोरेकप्राया दर्शिता। तत्र (गी० ८।८ "अभ्यासयोगयुक्तेन" इत्यादिनैका, (गी० ८।९) "कविं पुराण-मनुशासितारम्" इत्यादिनान्या। तथा मच्छब्दोक्तश्रीकृष्णाख्य भगवद्भक्तिप्रकारश्चायम् (गी० ८।१४) —

---

यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्तेवेदं संग्रहेण प्रवक्ष्ये ।।"

टीका — ननु भ्रुवोर्मध्ये प्राणमावेश्य इत्येतावन्मात्रोक्त्या योगेन ज्ञायते। तस्मात् तत्र योगे प्रकारः कः, किं जप्यं किं वा ध्येयं किंवा प्राप्यं — इत्यपि सङ्क्षेपेण ब्रूहीत्य पेक्षायामाह — यदितित्रिभिः। यदेवाक्षरं ओमित्येकाक्षरं ब्रह्म वाचकं वेदज्ञा वदन्ति यदेव ओमित्येवाक्षरवाच्यं ब्रह्म यतयो विशन्ति। तत् पदं पद्यते गम्यते इति पदं प्राप्यं सम्यक्तया गृह्यते अनेनेति संग्रह स्तदुप यस्तेन सह प्रवक्ष्ये श्रृणु ।।

वेदवित् पण्डित गण जिस को ब्रह्म कहते हैं, वीतराग यतिगण जिस में प्रविष्ट होते हैं, जिस को प्राप्त करने के निमित्त ब्रह्मचारी वृन्द ब्रह्मचर्याचरण करते हैं, उस प्राप्य वस्तु का वर्णन उपाय के सहित करता हूँ। इस श्लोक से आरम्भकर ब्रह्म का उल्लेख किया गया है। उस प्रकार परमात्म तत्त्व का संवाद गी० ८।४ "पुरुषश्चाधिदैवतम्" एवं "अधियज्ञोऽहमेवात्र देहे देहभृताम्बर"

के द्वारा विराट् एवं व्यष्टिरूप अधिष्ठान भेद से भिन्न रूप में द्विविध उल्लेख करके, अर्थात् विराट् रूप में पुरुष परमात्मा को अधिदैवत को कहकर एवं व्यष्टि रूप में अधिष्ठान रूप में अधियज्ञ को कहकर द्विविध परमात्म रूप का निर्देश किया गया है। उक्त द्विविध परमात्मस्वरूप की उपासना रूपा भक्ति की रीति दो प्रकार होने पर भी एक रूप में वर्णन किया गया है। उस के मध्य में गी० ८।८ में उक्त है—

"अभ्यासयोग युक्तेन चेतसा नान्यगामिना।
परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ।।"

हे अर्ज्जुन! अभ्यास योग से अनन्यगामी चित्त के द्वारा अलौकिक परमपुरुष की चिन्ता निरन्तर करते करते उन परम पुरुष को प्राप्त करते हैं। परमात्मस्वरूप प्राप्ति हेतु उपासना रूपाभक्ति का यह एक प्रकार है, गीता ८।९ में वर्णित है— "कविं पुराणमनुशासितारम् "

इश श्लोक में व्यष्टि अन्तर्यामी पुरुषाख्य परमात्म स्वरूप की उपासनारूपा भक्ति का द्वितीय प्रकार प्रदर्शित हुआ है। यहाँ ज्ञातव्य यह है कि—एक ही परमात्मस्वरूप की अभिव्यक्ति, अवस्था भेद से त्रिविध होती हैं। एक, मायान्तर्यामी—महत्तत्त्व— स्रष्टा,, इनका अपर नाम— कारणार्णव शायी महाविष्णु है।

द्वितीय—समष्टि अन्तर्यामी— इनका अपर नाम गर्भोदशायी समष्टि जीवरूप ब्रह्माण्डान्तर्यामी है।

तृतीय व्यष्टि जीवान्तर्यामी है, इनका अपरनाम, क्षीरोदशायी श्रीविष्णु है, तन्मध्य में समष्टि जीवान्तर्यामी परमात्मरूप की उपासना रूप भक्ति का प्रकार भेद "अभ्यास योग युक्तेन" श्लोक में वर्णित है। द्वितीय,— व्यष्टि जीवान्तर्यामी पुरुष की उपासना रूपाभक्ति का भेद "कविं पुराणमनुशासितारं" श्लोक में वर्णित है। श्रीविष्णु के पुरुषाख्य रूपमय का वृत्तान्त श्रीविष्णु पुराण में इस प्रकार है—

"विष्णोस्तु त्रीणिरूपाणि पुरुषाख्यान्यतोविदुः।
एकन्तु महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितं।
तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते ।।"

"अनन्यचेताः सततं यो मां स्मरति नित्यशः ।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ।।"५०८।। इति ।

तदेतत् साम्मुख्यत्रयं श्रीकपिलदेवेनाप्युक्तम् (भा० ३।३२।२६) –

"ज्ञानमात्रं परं ब्रह्म परमात्मेश्वरः पुमान् ।
दृश्यादिभिः पृथग्भावैर्भगवानेक ईयते ।।"५०९।। इति ।

दृशिर्ज्ञानम् । पृथक् परस्परमन्यादृशो भावो भावना येषु तथाविधैर्ज्ञानादिभिरेक एव परिपूर्ण-स्वरूपगुणः परब्रह्मेयते परमात्मेयते भगवांश्चेयते । तत्र ज्ञानेन परब्रह्मतया ज्ञायते,

---

श्रीविष्णु के पुरुषाख्य रूपत्रय का वृत्तान्त सब लोक जानते हैं । प्रथम—महत् स्रष्टा प्रथम पुरुष महाविष्णु हैं । प्रति ब्रह्माण्ड में अवस्थित अर्थात् प्रति ब्रह्माण्डान्तर्यामी गर्भोदशायी द्वितीय पुरुष हैं । सर्व जीवान्तर्य्यामी क्षीरोदशायी श्रीविष्णु तृतीय पुरुष हैं । इन तीन पुरुषों का तत्त्व को जो जानते हैं । वे माया बन्धन से मुक्त हो जाते हैं ।

उक्त पुरुष द्वय की उपासना रूपा भक्ति का वृत्तान्त जिस प्रकार गीता में है । उस प्रकार उसी प्रकरण में "अधियज्ञोऽहमेवात्र" श्लोकादि के द्वारा श्रीकृष्णाख्य भगवान् की उपासना हेतु भक्ति का प्रकार भी निम्नोक्त रीति से लिखित है, (गी० ८।१४)

"अनन्यचेताः सततं यो मां स्मरति नित्यशः ।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ।।"५०८।।

टीका—तदेवं आर्त्तइत्यादिना कर्म मिश्रां जरामरण मोक्षाय इत्यनेनापि कर्ममिश्रां कविं पुराण-मित्यादिभिः, योगमिश्राञ्च सपरिकरां प्रधानीभूतां भक्तिमुक्त्वा सर्व श्रेष्ठां निर्गुणां केवलां भक्तिमाह-अनन्य चेता इति । न विद्यते अन्यस्मिन् कर्मणि ज्ञाने योगे वा अनुष्ठेयत्वेन तथा देवतान्तरेव आराध्यत्वेन तथा स्वर्गापवर्गादावपि प्राप्यत्वेन चेतो यस्य । सततं सदेति, काल देश पात्रशुद्ध्याद्यपक्षेतयैव नित्यशः प्रतिदिन मेव यो मां स्मरति तस्य तेन भक्तेनाहं सुलभः, सुखेन लभ्यः । योग ज्ञानाभ्यासादि दुःख मिश्रणाभाव्यादिति-भ.वः । नित्ययुक्तस्य नित्यमद्‌युंगाकाङ्क्षिणः, आशंसायां भूतवच्चेति, भाविन्यपि योगे आशसितेक्त प्रत्ययः । योगिनो भक्ति योगवतः । यद्वा योग सम्बन्धः दास्य सख्यादि तद्वतः ।

जो अनन्य चेता होकर अर्थात् मुझ को छोड़ कर अन्यत्र सङ्कल्प न रखकर नित्य मेरा स्मरण करता रहता है,हे अर्जुन ! मैं उस नित्य अभियुक्तमनाः भक्ति साधक योगि पुरुष के पक्ष में अति सुख लभ्य हूँ । इस प्रकार भक्ति योग का वर्णन भगवान् श्रीकृष्ण को लक्ष्य करके ही किया गया है । ऐसा होने पर पूर्व वर्णित ब्रह्म, परमात्मा, एवं भगवान् भेद से तीन प्रकार परतत्त्व आविर्भाव के साम्मुख्य का विवरण श्रीमद् भागवत् के तृतीय स्कन्ध में भगवान्, कपिलदेव ने कहा है । (भा० ३।३२।२६)

"ज्ञानमात्रं परं ब्रह्म परमात्मेश्वरः पुमान् ।
दृश्यादिभिः पृथग्भावैर्भगवानेक ईयते ।।"५०९।।

टीका—'समेष्वर्थेष्वित्युक्तं, तदेव साम्यं दर्शयति । ज्ञानमात्रमेव परं ब्रह्मादि शब्दैः प्रसिद्धं, दृश्यादिभिः दृश्य द्रष्टृ करण रूपेण, पृथक् प्रतीयते, ज्ञानमात्रत्वेन समेष्वित्यर्थः ।।"

भगवान् श्रीकपिल देवने कहा, मातः ! एक ही परिपूर्ण स्वरूप एवं परिपूर्ण गुण भगवान् । ज्ञान,

भक्तिविशेषेण परमात्मतया, पूर्णया भक्त्या भगवत्तयेति ज्ञेयम् । परब्रह्मणः स्वरूपलक्षणं ज्ञानमात्रमिति परमात्मनः ईश्वरः पुमानिति भगवतो भगवानित्येव विवृतञ्चैतत् साम्मुख्य त्रयं भगवत्-परमात्मसन्दर्भयोः—ब्रह्मणः (भा० १०।१४।६) "अथापि भूमन्" इत्यादिना, परमात्मनः

---

भक्ति विशेष एवं पूर्णा भक्ति योगरूप उपासना भेद से पर ब्रह्म, परमात्मा एवं भगवद्रूप में ज्ञानी, भक्ति योगी, एवं विशुद्ध भक्ति साधक के निकट प्रकाशित होते हैं। उस पर ब्रह्म का स्वरूप लक्षण, ज्ञानमात्र है, अर्थात् चिन्मात्र सत्ता स्वरूप है। जिस में शक्ति एवं शक्ति वैचित्री की अभिव्यक्ति नहीं है, इस प्रकार निर्विशेष ज्ञान ही ब्रह्म का स्वरूप है। परमात्मा—ईश्वर एवं पुरुष नाम से अभिहित हैं। भगवान्—षड् विधैश्वर्य्य परिपूर्ण हैं, एक ही अखण्ड ज्ञान स्वरूप भगवान्—स्वरूप एवं गुण से परिपूर्ण होकर भी उपासक के उपासना भेद से शक्ति शक्तिमत्त्व भेद रहित निर्विशेष ब्रह्म रूप में, किञ्चित् अभिव्यक्त विशेष परमात्मा परमेश्वर रूप में एवं परिपूर्ण अभिव्यक्त विशेष भगवान् रूप में प्रकाशित होते हैं। वस्तु में शक्ति एवं वैचित्री विद्यमान होने पर भी ग्रहण करने की सामर्थ्य न होने से वस्तु की सत्त्वा ही गृहीत होती है, ग्रहण सामर्थ्य होने पर परिपूर्ण भगवत्तत्त्व का साक्षात्कार होता है। ब्रह्म, परमात्मा, भगवान्—यह त्रिविध आविर्भाव का एवं उक्त त्रिविध आविर्भाव के साम्मुख्य रूप ज्ञान, भक्ति विशेष, एवं पूर्णभक्ति रूप उपासनात्रय का विचार भगवत् एवं परमात्मसन्दर्भ में विस्तृत रूपसे किया गया है। ब्रह्म स्वरूपाविर्भाव का विवरण भा० १०।१४।६ में इस प्रकार है—

"तथापि भूमन् महिमागुणस्यते विबोद्धुमर्हत्यमलान्तरात्मभिः ।
अविक्रियात् स्वानुभवादरूपतोह्यनन्यबोध्यात्मतया न चान्यथा ।"

टीका— एवं तावत् सगुणनिर्गुणयोरुभयोरपि ज्ञानं दुर्घटमिति त्वत् कथा श्रवणादिनैव त्वत् प्राप्ति र्नान्यथेत्युक्तम् । इदानीं यद्यप्युभयोरविशेषेण दुर्ज्ञेयत्वमुक्तं तथापि गुणातीतस्य ज्ञानं कथञ्चिद् भवेत् न तु सगुणस्य, तव अचिन्तानन्त गुणत्वादिति श्लोक द्वयेन स्तौति तथापीति ।

हे भूमन् ! अपरिच्छिन्न गुणस्य ते महिमा अमलैरन्तरात्मभिः प्रत्याहृतेन्द्रियैर्विबोद्धुं बोधगोचरी-भवितुम् अर्हति योग्योभवति। अथवा, विबोद्धु ज्ञातुमर्हति, अह्यते शक्यते इत्यर्थः। यद्वा महिमेति, महिमान कश्चिद्बोद्धुमर्हतीत्यर्थ.। कथम् ? स्वानुभवात् आत्माकारान्तः करण साक्षात्कारात् । नन्वन्तः करण मपि सविकारमेव विषयी करोतीति कथमात्माकारता तस्येत्यत आह अविक्रियादिति । विक्रिया विशेषाकार स्वद्रहितात् विशेष परित्याग एवात्माकारतेत्यर्थः । नन्वन्तः करण साक्षात् कार विषयत्वे अनात्मत्वप्रसङ्गः स्यादत आह—अरूपत इति । रूपं विषयः, अविषयात् वृत्ति विषयत्वमेवात्मनो न फल-विषयत्वम् । अतो नायं दोष इति भावः। कथं तर्हि स्फूर्त्तिः, अनन्य बोध्यात्मतया स्व प्रकाशत्वेनैव नत्वन्यथा इदं तदिति, विषयत्वेनेत्यर्थः । अथवा, मा सर्वतोऽन्तरङ्गा लक्ष्मीरपि अगुणस्य ते महि महिमानम् अमलै-रन्तर्वृत्तिभिरिन्द्रियैरपि तया यादृग् वस्तुतस्तेन रूपेण विबोद्धुं किमर्हति नार्हत्येवेत्यर्थः। कथं तर्हि अर्हति तदाह—स्वानुभवादित्यादिना । उक्तार्थमेवैतत् ॥

ब्रह्मा ने कहा—हे प्रभो ! आप के सगुणनिर्गुण उभय स्वरूप का ही अनुभव दुर्घट होने पर भी आप के कथा श्रवणादि द्वारा आप की उपलब्ध हो सकती है, अन्य किसी प्रकार से नहीं उस में भी यद्यपि सगुण एवं निर्गुण-उभय स्वरूप का अनुभव ही दुर्घट है, तथापि आप का निर्गुण स्वरूप का ज्ञान कथञ्चित हो सकता है। किन्तु अचिन्त्य अनन्त गुण गण मण्डित होने के कारण आप का सगुण स्वरूप का अनुभव होना सर्वथा असम्भव ही है । हे भूमन् ! आप का निर्गुण ब्रह्म स्वरूप का बोध--प्रत्याहृतेन्द्रिय

(भा० २।२।८) "केचित् स्वदेहान्त-हृदयावकाशे, प्रादेशमात्रं पुरुषं वसन्तम्" इत्यादिना, भगवतः (भा० १।७।४) 'भक्तियोगेन मनसि' इत्यादिना च। तथा च यद्यपि साम्मुख्यत्वेनाविशिष्टं

साधक के पक्ष में सुलभ है। कैसे बोध हो सकता है, उस को कहते हैं– स्वानुभवात्—आत्माकार से आकारित अन्तः करण साक्षात् कार से उक्त बोध होता है। प्रश्न हो सकता कि—अन्तः करण सविकार वस्तु को ग्रहण करती है, अतः कैसे अन्तः करण का आत्माकाराकारित होना सम्भव होगा ? उत्तर में कहते हैं—अविक्रियात्—अर्थात् अन्तः करण की विकार शून्यता ही आत्मा कारता है। इस में जिज्ञासा हो सकती कि—निर्विषय आत्मा कैसे अन्तः करण का विषय होगा ? यदि वह अन्तः करण का विषय होता तो, आत्मा का अनात्मत्व अर्थात् जड़त्व प्रसङ्ग होगा। कारण, जो जो इन्द्रिय ग्राह्य है, वही जड़ है, इस प्रकार संशय निरसन निबन्धन कहते हैं– "अरूपतः" अर्थात् आत्मा कभी भी अन्तः करण का विषय नहीं होता है। कारण, वृत्ति विषयत्वमेवात्मनो न फल विषयत्वम्" अर्थात् आत्म घट पटादि के समान इन्द्रिय विषय नहीं होता है, आत्म वृत्ति के द्वारा ही आत्मा प्रकाशित होता है। जिस प्रकार अग्नि, सूर्य्य, में उभय धर्म विद्यमान हैं। एक—अन्य निरपेक्ष रूप से स्वयं प्रकाश सामर्थ्य, द्वितीय– अन्य को प्रकाशित करने की सामर्थ्य। उस प्रकार स्व प्रकाश आत्मा भी अन्तः करणादि इन्द्रिय की अपेक्षा शून्य होकर स्वयं स्व प्रकाश स्वभाव द्वारा विषयाकार अन्तः करण में स्वयं प्रकाशित होता है। यहाँ प्रश्न हो सकता है कि—अन्तः करण में आत्मा की स्फूर्त्ति कैसे सम्भव होगी ? उत्तर में कहते हैं—"अनन्य-बोध्यात्मतया" अर्थात् अणु चैतन्य स्वरूप जीवात्मा की स्फूर्त्ति होने से कैसे विभु चैतन्य ब्रह्म स्वरूप की उपलब्धि हो सकती है ? उत्तर में कहते हैं—

यद्यपि ब्रह्म स्वरूप विभु चैतन्य है, और जीव स्वरूप--अणु चैतन्य है, तथापि चैतन्यांश में उभय साम्यता हेतु अभेद रूप में जीव चैतन्य एवं विभु चैतन्य की स्फूर्त्ति होती है। यहाँ ज्ञातव्य यह है कि—जीव चैतन्य एवं विभु चैतन्य की अभेद रूप में स्फूर्त्ति लाभ की कामना से साधन में प्रवृत्त होने पर भक्ति योग द्वारा आराधित श्रीभगवत् प्रसाद से ही अणु चैतन्य जीव स्वरूप के सहित विभु चैतन्य ब्रह्म स्वरूप की अभेद रूप में उस अवस्था में स्फूर्त्ति होती है। सारकथा यह है कि—अभेद स्फूर्त्ति का मूल निदान श्रीभगवत् कृपा है। कारण, अनुग्राहक तत्त्व श्रीभगवत्तत्त्व है, एवं अनुगृहीत तत्त्व ब्रह्म तत्त्व है। श्रीमत्स्य देव का कथन भा० ८।२४।३८ में सुस्पष्ट है।

परमात्म तत्त्व की अभिव्यक्ति का प्रकार भा० २।२।८ में श्रीशुकदेव के कथन में सुव्यक्त है।

"केचित् स्वदेहान्त हृदयावकाशे, प्रादेशमात्रं पुरुषं वसन्तम्।
चतुर्भुजं कञ्जरथाङ्ग शङ्खगदाधरं धारणया स्मरन्ति॥"

हे राजन् ! कोई कोई सौभाग्यवान् व्यक्ति, निज देह के मध्य में जो हृदय है, उस में जो आकाश अवकाश है,उस अवकाश में अङ्गुष्ठ एवं तर्जनी को विस्तार करने से जो परिमाण होता है उस परिमाण में अन्तर्यामी पुरुष निवास करते हैं। यह पुरुष चतुर्भुज हैं, एवं हस्त चतुष्टय में पद्म, चक्र, शङ्ख, गदा धृत हैं, इस रीति से उन पुरुष का स्मरण करते हैं। भगवत् स्वरूप का आविर्भाव प्रकार का कथन भा० १।७।४-५ में श्रीसूत ने किया है—

"भक्ति योगेन मनसि सम्यक् प्रणिहितेऽमले।
अपश्यत् पुरुषं पूर्णं मायाञ्च तदपाश्रयाम्।
यया सम्मोहित जीव आत्मानं त्रिगुणात्मकम्
परोऽपि मनुतेऽनर्थं तत् कृतञ्चाभिपद्यते॥"

(भा० ११।३।२१) "तस्माद्गुरुं प्रपद्येत" इति पूर्व्वोक्तेस्तत्र श्रवणगुरौ गुरुरेवात्मा जीवनं दैवतं निजेष्टदैवततयाभिमतश्च यस्य तथाभूतः सन् । अमायया निर्दम्भया, अनुवृत्त्या तदनुगत्या शिक्षेत् । यैर्धर्मैरात्मा परमात्मा, भक्तेभ्य आत्मप्रदः श्रीबलिप्रभृतिभ्य इव । अस्य शिक्षा-गुरोर्बहुत्वमपि प्राग्वज्ज्ञेयम् ॥ श्रीप्रबुद्धो निमिम् ॥

२०७ । मन्त्रगुरु स्त्वेक एवेत्याह, (भा० ११।३।४८) —

(२०७) "लब्धानुग्रह आचार्य्यात्तेन सन्दर्शितागमः ।
महापुरुषमभ्यर्च्चेन्मूर्त्त्याभिमतयात्मनः ॥"६१९॥

अनुग्रहो मन्त्रदीक्षारूपः, आगमो मन्त्रविधिशास्त्रम्, अस्यैकत्वमेकवचनेन बोध्यते ।

"बोधः कलुषितस्तेन दौरात्म्यं प्रकटीकृतम् । गुरुर्येन परित्यक्तस्तेन त्यक्तः पुरा हरिः ॥"६२०॥

---

शाब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयम् ॥"

इस प्रकार लक्षण सम्पन्न शिक्षा गुरु के निकट से भागवत धर्म शिक्षा करे। शिक्षा ग्रहण करने की योग्यता का वर्णन करते हैं । श्रीगुरु ही एकमात्र प्रिय एवं परमाराध्य हैं, इस प्रकार बुद्धि सम्पन्न होकर निष्कपट भाव से श्रीगुरु सेवा करतः भागवत धर्म शिक्षा करे। जिस से श्रीभगवान् सन्तुष्ट होकर आत्मदान पर्य्यन्त करते हैं । अर्थात् उस भागवत धर्म की ही शिक्षा करे, जिस से अन्तर में एवं बाहर श्रीहरि की स्फूर्त्ति होती है ।

गुरु ही आत्मा--जीवन है जिस का—इस प्रकार बुद्धि सम्पन्न होकर एवं दैवत – निज इष्ट देव रूप में गुरु को अङ्गीकार करके ही धर्म शिक्षा करे। तथा— अमायया—दम्भ शून्य होकर— अर्थात् शरीर सम्बन्ध में अहं बुद्धि हीन होकर एवं अनुवृत्त्या--श्रीगुरुदेव के आनुगत्य से ही शिक्षा ग्रहण करे । जिस भागवत धर्माचरण से आत्मा, परमात्मा भक्त को आत्मदान करते हैं, जैसे श्रीबलि प्रभृति को आत्मदान किये थे । इस प्रकार गुरु का अनेकत्व को पूर्व प्रकरण के समान ही जानना होगा ।

श्रीप्रबुद्ध निमिमहाराज को कहे थे ॥२०६॥

२०७ । किन्तु मन्त्र प्रदाता गुरु एक ही होते हैं—मन्त्र गुरु का बहुत्व विधान नहीं है । अर्थात् मन्त्र गुरु अनेक नहीं होते हैं । एक ही होते हैं । भा० ११।३।४८ में उक्त है—

(२०७) "लब्धानुग्रह आचार्य्यात्तेन सन्दर्शितागमः ।
महापुरुषमभ्यर्च्चे मूर्त्त्याभिमतयात्मनः ॥"६१९॥

टीका—तमेव विधिमाह—लब्धानुग्रह इत्यादिना । तेन आचार्य्येण सन्दर्शितः, आगमोऽर्च्चन प्रकारो यस्य सः ॥"

श्रीगुरु देव के निकट से मन्त्र दीक्षा रूप अनुग्रह प्राप्तकर गुरुदेव कर्त्तृक प्रदर्शित आगमविधि शास्त्र के अनुसार अर्थात् जिस मन्त्र से जो दीक्षित है, उस मन्त्र में जिस प्रकार अर्च्चन विधि शास्त्र में वर्णित है, उस विधि के अनुसार अनन्त भगवदाविर्भाव के मध्य में जो अवतार साधक का अभिमत है, उस मूर्त्ति द्वारा श्रीभगवान् का अर्च्चन करे । यहाँ 'आचार्य्यात्' एक वचन प्रयोग होने के कारण मन्त्र गुरु का एकत्व विहित हुआ है । अनुग्रह शब्द से—मन्त्रदीक्षा को जानना होगा, आगम—शब्द से मन्त्र विधि शास्त्र को जानना होगा । तज्जन्य ब्रह्मवैवर्त्त प्रभृति में वर्णित है ।

इति ब्रह्मवैवर्त्तादौ तत्त्यागनिषेधात् । तदपरितोषेणैवान्यो गुरुः क्रियते । । ततोऽनेकगुरु-करणे पूर्वत्याग एव सिद्धिः । एतच्चापवादवचनद्वारापि श्रीनारदपञ्चरात्रे बोधितम्,—

"अवैष्णवोपदिष्टेन मन्त्रेण निरयं व्रजेत् । पुनश्च विधिना सम्यग् ग्राहयेद्वैष्णवाद्गुरोः ।।"६२१।। इति ।

श्रीमदाविर्होत्रो निमिम् ।।

२०८ । तत्र श्रवणगुरुसंसर्गेणैव शास्त्रीयज्ञानोत्पत्तिः स्यान्नान्यथेत्याह (भा० ११।१०।१२)

(२०८) "आचार्य्योऽरणिराद्यः स्यादन्तेवास्युत्तरारणिः ।
तत्सन्धानं प्रवचनं विद्या सन्धिः सुखावहः ।।"६२२।।

आद्योऽधरः, तत्सन्धानं तयोर्मध्यमं मन्थनकाष्ठम्, प्रवचनमुपदेशः, विद्या शास्त्रोक्तं ज्ञानन्तु सन्धौ भवोऽग्निरिव, तथा च श्रुतिः (तै० १।३।५)–"आचार्य्यः पूर्वरूपम्" इत्यादि, अतएव (मु० १।२।१२)–"तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्" इति, (छा० ६।१४।२) "आचार्य्यवान् पुरुषो वेद" इति, (कठ० १।२।६) "नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ" इति ।। श्रीभगवान् ।।

---

'बोधः कलुषितस्तेन दौरात्म्यं प्रकटीकृतम् ।
गुरुर्येन परित्यक्तस्तेन त्यक्तः पुरा हरिः ।।"६२०।।

जिस ने दौरात्म्य प्रकाश किया है, उस का बोध कलुषित हो गया है । जिस ने गुरु को परित्याग किया है, उसको श्रीहरि ने पहले ही परित्याग किया है । इस प्रमाणसे दीक्षा गुरु त्याग करना निषिद्ध है । श्रीगुरुचरण आश्रय करने के पश्चात् असन्तोष के कारण यदि अन्य गुरु करण होता है तो, सुतरां पूर्व गुरु त्याग ही हो जाता है । अपवाद वचन के द्वारा नारद पञ्चरात्रमें इस विषय को समझाया गया है ।

"अवैष्णवोपदिष्टेन मन्त्रेण निरयं व्रजेत् ।
पुनश्च विधिना सम्यग् ग्राहयेद्वैष्णवाद्गुरोः ।।" ६२१।।

प्रथम अवैष्णव गुरु के समीप से दीक्षा ग्रहण करने पर अनिवार्य्य नरक गमन होता है, अतएव विधि पूर्वक पुनर्वार वैष्णव गुरु के निकट दीक्षित होना आवश्यक है ।।

श्रीमदाविर्होत्र निमिमहाराज को कहे थे ।।२०७।।

२०८ । श्रवण गुरु, शिक्षा गुरु, एवं दीक्षा गुरु के मध्य में श्रवण गुरु के सन्निधान से ही शास्त्रीय ज्ञान लाभ होता है । अपर किसी प्रकार से शास्त्रीय ज्ञान अर्थात् शास्त्र विहित साध्य साधन प्रयोजन तत्त्व का ज्ञान लाभ नहीं होता है । भगवान् उद्धव को । भा० ११।१०।१२ में कहे हैं—

(२०८) "आचार्य्योऽरणिराद्यः स्यादन्तेवास्युत्तरारणिः ।
तत्सन्धानं प्रवचनं विद्या सन्धिः सुखावहः ।।"६२२।।

आचार्य्य—श्रवण गुरु, आद्य—निम्नस्थ काष्ठ, अन्तेवासी,--शिष्य- ऊपर का काष्ठ श्रीगुरु देव का उपदेश—मध्यम काष्ठ--अर्थात् मन्थन काष्ठ । उस से--शास्त्रीय ज्ञान, किन्तु "सन्धिभव अग्निस्थानीय है । श्रुति भी कहती है । "आचार्य्यः पूर्व रूपम्" अर्थात् आचार्य्य पूर्व काष्ठ हैं । अतएव श्रुति और भी कहती है- "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्" पारमार्थिक तत्त्व वस्तु को जानने के निमित्त जिज्ञासु शिष्य गुरु चरण

२०९। शिक्षागुरोरप्यावश्यकत्वम हुः (भा० १०।८७।३३)—

(२०९) "विजितहृषीकवायुभिरदान्तमनस्तुरगं, य इह यतन्ति यन्तुमतिलोलमुपायखिदः।
व्यसनशतान्विताः समवहाय गुरोश्चरणं, वणिज इवाज सन्त्यकृतकर्णधरा जलधौ ॥६२३।

ये गुरोश्चरणं समवहायातिलोलुपमदान्तमदमितं मन एव तुरगं विजितैरिन्द्रियैः प्राणैश्च कृत्वा यन्तुं भगवदन्तर्मुखीकर्त्तुं प्रयतन्ते, ते उपायखिदस्तेषु तेषूपायेषु खिद्यन्ते, अतो व्यसन-शतान्विता भवन्ति, अतएव इह संसारे तिष्ठन्त्येव। हे अज! अकृतकर्णधरा अस्वीकृतनाविका जलधौ यथा तद्वत्। श्रीगुरुप्रदर्शित भगवद्भजनप्रकारेण भगवद्धर्मज्ञाने सति तत्कृपया व्यसनानभिभुतौ सत्यां शीघ्रमेव मनो निश्चलं भवतीति भावः। अतो ब्रह्मवैवर्त्ते—

"गुरुभक्त्या स मिलति स्मरणात् सेव्यते बुधैः। मिलितोऽपि न लभ्यते जीवैरहमिकापरैः॥"६२४॥

श्रुतिश्च (श्लो० ६।२३) —

---

आश्रय करे। श्रुति में और भी दृष्ट होता है। ":आचार्य्यवान् पुरुषोवेद"। जिस ने गुरु चरणाश्रय किया है, वही परम तत्त्व जानते हैं। श्रीगुरुचरणाश्रय न करने पर परतत्त्व का परिज्ञान नहीं होता है। कठोपनिषद् में लिखित है—

"नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ"

हे प्रिय! यह पारमार्थिक मति को तर्क के द्वारा प्राप्त नहीं कर सकते। अन्य--अर्थात् श्रवण गुरु के मुख से श्रवण करके ही सुन्दर ज्ञान लाभ किया जा सकता है। श्रीभगवान् कहे थे ॥२०८॥

२०९। शिक्षा गुरु का आश्रय ग्रहण करना अत्यावश्यक है। भा० १०।८७।३३ में श्रुतियों का कथन यह है— (२०९) "विजितहृषीकवायुभिरदान्तमनस्तुरगं, य इह यतन्ति यन्तुमतिलोलमुपायखिदः।
व्यसनशतान्विताः समवहाय गुरोश्चरणं, वणिज इवाज सन्त्यकृतकर्णधरा जलधौ।"६२३।

जो, श्रीगुरु चरण आश्रय ग्रहण न करके निज साधन रूप पुरुष कार के द्वारा अति लोलुप, अदान्त (अदमित) मनोरूप अश्वको विजित--इन्द्रिय एवं प्राण वायु द्वारा संयत करने में अर्थात् अन्तर्मुख करने में प्रयत्नवान् होते हैं। वे उपायों को अवलम्बन कर खेद प्राप्त करते हैं, अतएव उन सब का जीवन दुःखमय होता है। वे इस संसार में रह जाते हैं। कारण, मन को भगवदुन्मुख करने में अक्षम होने से संसार बन्धन से मुक्त होना भी असम्भव होता है। हे अज! कर्णधार विहीन तरी समुद्र में अवस्थित होने पर जिस प्रकार अवस्था प्राप्त होती है। श्रीगुरु चरण आश्रय विहीन साधक भी संसार सागर में निपतित होकर उस प्रकार विषय अवस्था को प्राप्त करता है। श्रीगुरु चरण द्वारा प्रदर्शित भगवद् भजन प्रकार से भगवद् धर्म ज्ञान होने पर भगवत् कृपा से दुःख समूह से अभिभूत न होकर आशु मनको संयत कर सकता है। अर्थात् गुरु--चरणाश्रय से शीघ्र मन निश्चल होता है। श्रुति कृत स्त्रोत्र का यही सारार्थ है। अतएव ब्रह्म वैवर्त्त में लिखित है—

"गुरुभक्त्या स मिलति स्मरणात् सेव्यते बुधैः।
मिलितोऽपि न लभ्यते जीवैरहमिकापरैः॥"६२४।

गुरु भक्ति द्वारा श्रीभगवान् की कथा का स्मरण होता है, एवं स्मरण से भगवान् को प्राप्त किया जा सकता है। विज्ञव्यक्तिगण श्रीगुरु चरण की ही सेवा करते रहते हैं। "मैं उत्तम जानता हूँ" इस प्रकार

"यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥" ६२५॥ इति । श्रुतयः ।

२१० । अतः श्रीमन्त्रगुरोरावश्यकत्वं सुतरामेव । तदेतत् परमार्थगुर्वाश्रयो व्यवहारिक-गुर्वादिपरित्यागेनापि कर्त्तव्य इत्याशयेनाह, (भा० ५।५।१८)—

(२१०) "गुरुर्न स स्यात् स्वजनो न स स्यात्, पिता न स स्याज्जननी न सा स्यात् ।
दैवं न तत् स्यान्न पतिश्च स स्यात्, न मोचयेद्यः समुपेतमृत्युम् ॥" ६२६॥

समुपेतः संप्राप्तो मृत्युः संसारो येन तम्, अत उक्तं श्रीनारदेन, (भा० १।५।१५)—"जुगुप्सितं धर्मकृतेऽनुशासतः, स्वभावरक्तस्य महान् व्यतिक्रमः" इत्यादि । तस्मात् तावदेव तेषां गुर्वादि-व्यवहारो यावन्मृत्युमोचकं श्रीगुरुचरणं नाश्रयत इत्यर्थः ॥ श्रीऋषभदेवः स्वपुत्रान् ॥

---

अहङ्कारी जीव भगवान् को प्राप्त करने में अक्षम हैं । श्रुति भी कहती है ।

"यस्य देवे पराभक्ति र्यथादेवेतथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥"२३५॥

जिस की परा भक्ति परमेश्वर में है, एवं उस प्रकार पराभक्ति श्रीगुरु देव में भी है, उस के हृदय में ही शास्त्र कथित श्रीभगवत् सम्बन्धी साध्यसाधन पुरुषार्थ तत्त्व समूह स्फुरित होते हैं । जिस की भक्ति, श्रीगुरु चरणों में नहीं है, उस के हृदय में शास्त्र कथित तत्त्व समूह प्रकाशित नहीं होते हैं ।

श्रुतिगण कही थीं ॥२०९॥

२१० । यदि श्रवणगुरु एवं भजन शिक्षा गुरुके पदाश्रय करना एकान्त कर्त्तव्य है, तब श्रीमन्त्र गुरु के श्रीचरणाश्रय करना जो अवश्य कर्त्तव्य है, इस विषय में संशयका अवकाश ही क्या है ? अतएव व्यवहारिक गुरु को परित्याग करके पारमार्थिक श्रीगुरुचरणाश्रय करना अवश्य कर्त्तव्य है—इस अभिप्राय को व्यक्त कर रहे हैं—भा० ५।५।१८ श्लोक के द्वारा ।

(२१०) " गुरुर्न स स्यात् स्वजनो न स स्यात्, पिता न स स्याज्जननी न सा स्यात् ।
दैवं न तत् स्यान्न पतिश्च स स्यात्, न मोचयेद्यः समुपेतमृत्युम् ॥"६२६॥

टीका—समुपेतः सम्प्राप्तो मृत्युः संसारो येन तं, ततोभक्ति मार्गोपदेशेन यो न मोचयेत् । स गुर्वादि र्न भवेदित्यर्थः । यद्वा यस्तं मोचयितुं न शक्नुयात्, स तस्य गुर्वादि र्न स्यादिति निषेधः । ततश्च पिता न स स्यादिति पुत्रोत्पत्तौ यत्न न कार्य्य इत्यर्थः । दैवं देवता नस्यादिति पूजा न ग्राह्या इत्यर्थः । एव मन्यदपिद्रष्टव्यम् ।

जो संसार दशा प्राप्त व्यक्तिको संसार बन्धन से मुक्त करने में सक्षम नहीं है,वह कभी भी गुरु नहीं हो सकता है, एवं स्व जन भी, वह पिता भी पिता नहीं है, जननी भी जननी पद वाच्य नहीं है, देवता भी देवता नहीं है, पति भी पति नहीं है । अतएव श्रीनारद ने भी भा० १।५।१५ में व्यास को कहा है ।

'जुगुप्सितं धर्मकृतेऽनुशासतः, स्वभावरक्तस्य महान् व्यतिक्रमः ।
यद्वाक्यतो धर्म इतीतरः स्थितो न मन्यते तस्य निवारणं जनः ।"

स्वभावतः ही काम्यकर्म में अनुरक्त मानव को काम्य कर्मानुष्ठान हेतु अनुशासन करना आप के पक्ष में निन्दनीय है । कारण, आप भगवत्तत्त्वाभिज्ञ हैं, आप के पक्ष में यह आचरण अतीव निन्दनीय है, अतएव

२११। अन्यदा स्वगुरौ कर्मिभिरपि भगवद्दृष्टिः कर्त्तव्येत्याह, (भा० ११।१७।२७)—

(२११) "आचार्य्यं मां विजानीयान्नावमन्येत कर्हिचित् ।
न मर्त्यबुद्धयासूयेत सर्वदेवमयो गुरुः ॥"६२७॥

ब्रह्मचारिधर्मान्तः पठितमिदम् ॥ श्रीभगवान् ॥

२१२। ततः सुतरामेव परमार्थिभिस्तादृशे गुराविद्याह, (भा० १।१५।२६-२७)—

(२१२) "यस्य साक्षाद्भगवति ज्ञानदीपप्रदे गुरौ ।
मर्त्यासद्धीः श्रुतं तस्य सर्वं कुञ्जरशौचवत् ॥"६२८॥
"एष वै भगवान् साक्षात् प्रधानपुरुषेश्वरः ।
योगेश्वरैर्विमृग्याङ्घ्रिर्लोकोऽयं मन्यते नरम् ॥"६२९॥

---

पिता प्रभृति के सहित तब तक ही गुर्वादि व्यवहार करना कर्त्तव्य है, जब तक संसार बन्धन मोचक श्रीगुरु चरण आश्रय नहीं होता है।

श्रीऋषभदेव—निज पुत्र वृन्द को कहे थे ॥२१०॥

२११। अन्य प्रकार से अर्थात् निज उद्देश्य सिद्धि हेतु काम्य कर्म परायण व्यक्ति को निज गुरु में भगवद् दृष्टि करना चाहिये। इस अभिप्राय को व्यक्त करते हुये भगवान् श्रीकृष्ण—उद्धव को भा० ११।१७। २७ में कहे हैं—

(२११) "आचार्य्यं मां विजानीयान्नावमन्येत कर्हिचित् ।
न मर्त्यबुद्धयासूयेत सर्वदेवमयो गुरुः ॥" ६२७॥

मुझ को ही, आचार्य्य गुरु जानना चाहिये। कभी भी उनको अवमानन न करे। मनुष्य दृष्टि से उन के प्रति असूया, अर्थात् दोषारोपण भी न करे। गुरु सर्व देवता स्वरूप हैं। अभिप्राय यह है कि-श्रीभगवान् जीव शिक्षा हेतु मनुष्याकार में मनुष्य समाज में अवस्थित होकर पारमार्थिक तत्त्वोपदेश प्रदान कर स्वयं आचरण करके आचरण शिक्षा प्रदान करते हैं। अतएव मनुष्यवत् दृष्ट होने पर भी मनुष्य बुद्धि से अवज्ञा करने से नरक पात अवश्यम्भावी है। यह श्लोक ब्रह्मचारि धर्मवर्णन प्रसङ्ग में उक्त होने के कारण, काम्य कर्म परायण व्यक्ति गण के पक्ष में पारमार्थिक तत्त्वोपदेष्टा श्रीगुरु चरण के भगवद् दृष्टि करना कर्त्तव्य है।

श्रीभगवान् कहे थे ॥२११॥

२१२। अतएव पारमार्थिक गुरु के प्रति भगवद् बुद्धि करना परम कर्त्तव्य है—भा० १।१५।२६-२७ में श्रीनारद युधिष्ठिर को कहे थे—

(२१२) 'यस्य साक्षाद्भगवति ज्ञानदीपप्रदे गुरौ ।
मर्त्यासद्धीः श्रुतं तस्य सर्वं कुञ्जरशौचवत् ॥"६२८॥
"एष वै भगवान् साक्षात् प्रधान पुरुषेश्वरः ।
योगेश्वरैर्विमृग्याङ्घ्रिर्लोकोऽयं मन्यते नरम् ॥"६२९॥

टीका—ननु कथं गुरौ भक्त्या सत्त्वस्य जयः स्यात्, तस्यापि मनुष्यत्वेन तदवस्थत्वात्। तत्राह यस्येति। मर्त्यासद्धीः, मनुष्य इति दुर्बुद्धिः। तस्य शास्त्र श्रवणं कुञ्जर शौचवत् व्यर्थम् ।२६। ननु गुरोः पितृ पुत्रादयस्ते तं नरमेव मन्यन्ते। अत आह। एष गुरुः साक्षात् भगवानेव भवेत्, लोकस्य नरोऽसाविति

एष श्रीकृष्णलक्षणोऽपि, ततः प्राकृतदृष्टिर्न भगवत्तत्त्वग्रहणे प्रमाणमिति भावः ॥ श्रीनारदो युधिष्ठिरम् ॥

२१३। शुद्धभक्तास्त्वेके श्रीगुरोः श्रीशिवस्य च श्रीभगवता सहाभेददृष्टिं तत्प्रियतमत्वेनैव मन्यन्ते, यथा (भा० ४।३०।३८) –

(२१३) "वयन्तु साक्षाद्भगवन् भवस्य, प्रियस्य सख्युः क्षणसङ्गमेन ।

---

बुद्धि भ्रान्तिरित्यर्थः। यद्वा नहि तत् पुत्रादेर्मनुष्यबुद्धचा प्रतीयमानोऽपि गुरुर्भगवान् न भवेत्। यथैव श्रीकृष्ण इत्यर्थः ॥२७॥

साक्षात् भगवान् ज्ञान दीपप्रद श्रीगुरुदेव में जिस की मनुष्य रूप दुर्बुद्धि है, उस के शास्त्र श्रवण प्रभृति अनुष्ठान हस्तिस्नान के समान व्यर्थ होते हैं। यह श्रीगुरु देव साक्षात् भगवान् ही हैं। अर्थात् श्रीभगवान् ही श्रीगुरु रूप में आविर्भूत होकर जीव को श्रीभगवद् भजन तत्त्वोपदेश प्रदान करते हैं। उन श्रीगुरुदेव में मनुष्य बुद्धि—भ्रान्ति प्रसूत है। साक्षात् प्रकृति पुरुष नियन्ता श्रीभगवान् ही जीव वृन्द को सत् शिक्षा प्रदान हेतु आविर्भूत होते हैं। योगेश्वरगण, जिन के चरणारविन्द का अन्वेषण करते रहते हैं। उन श्रीगुरु देव को मायामुग्ध मानव, साधारण मनुष्य मानता है। इस से प्रतिपन्न हुआ है कि—सत् शिक्षा प्रदान करना श्रीभगवान् का ही कार्य्य है अतः साक्षात् भगवान् शिक्षावतार श्रीगुरु रूप में मनुष्य रूप में अवस्थान करते रहते हैं। अतएव भगवत्तत्त्व के प्रति प्राकृत दृष्टि करना कर्त्तव्य नहीं है।

श्रीनारद युधिष्ठिर को कहे थे ॥२१२॥

२१३। शुद्ध भक्त वृन्द किन्तु श्रीगुरु एवं श्रीशिव की श्रीभगवान् के सहित अभिन्नता को भगवत प्रियतम दृष्टि से मानते हैं। अर्थात् शास्त्र से श्रीगुरु देव के सहित श्रीभगवान् की जो अभिन्नता का वर्णन है, एवं श्रीशिव के सहित श्रीभगवान् की जो अभिन्नता वर्णित है, अर्थात् अभेद दृष्टि करने की जो विधि है—उस विषय में शुद्ध भक्त गण-श्रीगुरु एवं श्रीशिव श्रीभगवान् के अत्यन्त प्रिय हैं, अतः अभेद भावना करते हैं। वस्तुत अभेद नहीं है। इस प्रकार भगवत् प्रियतम रूप से अभेद मान कर उपासना रत व्यक्ति अति विरल है, तज्जन्य ही मूल में 'एके' शब्द का प्रयोग किया गया है। श्रीधर स्वामिपाद ने भा० १०।२।३९ "त्वय्यम्बुजाक्षामलसत्त्वधाम्नि समाधिनावेशितचेतसैके ॥"

श्लोक की टीका में लिखा है—"एके मुख्या विवेकिनः ॥"

अतएव ज्ञातव्य यह है कि - तत्त्वतः श्रीगुरु एवं भगवान् अभिन्न होने पर भी सम्बन्ध में श्रीभगवान् एवं श्रीगुरु देव में सेव्य सेवक भाव है। श्रीभगवान् एवं श्रीगुरु देव में सेव्य सेवक भाव सम्बन्ध मानकर जो उपासना करते हैं, उन सब को शुद्ध भक्त कहते हैं, केवल तत्त्व दृष्टि से जो लोक अभेद भावना द्वारा उपासना करते हैं, उनके पक्ष में सम्बन्धानुगा रागानुभक्ति में यह अनुष्ठान सर्वथा प्रतिकूल पड़ता है। अतएव गुरु एवं भगवान् में शिव एवं भगवान् में अभेद दृष्टि करने के निमित्त यद्यपि शास्त्र का उपदेश है—तथापि श्रीगुरु एवं शिव को श्रीभगवान् के प्रिय बुद्धि से देखना एवं तदुचित पूजनादि सम्मान करना ही शुद्ध भक्त वृन्द का अभिमत है।

अर्थात् श्रीगुरुदेव तत्त्वतः श्रीभगवान् होने पर भी श्रीभगवत् प्रिय रूप में ही श्रीगुरुदेव एवं श्रीशिव शुद्ध भक्त गण के पक्ष में उपास्य हैं।

विशुद्ध भक्त गण, श्रीशिव को एवं श्रीगुरुदेव को श्रीभगवान् के सहित प्रियतमत्व रूप से ही जो अभेद दृष्टि से देखते हैं—इसका प्रमाण भा० ४।३०।३८ में लिखित है—

सुदुश्चिकित्स्यस्य भवस्य मृत्यो,-र्भिषक्तमं त्वाद्य गतिं गताः स्मः ॥"६३०॥

टीका च—"तव यः प्रियः सखा तस्य भवस्य, अत्यन्तमचिकित्स्यस्य भवस्य जन्मनो मृत्योश्च भिषक्तमं सद्वैद्यं त्वां गतिं प्राप्ताः" इत्येषा। श्रीशिवो ह्येषां वक्तॄणां गुरुः॥ श्रीप्रचेतसः श्रीमदष्टभुजं पुरुषम्॥

२१४। तदेवं रुच्यादिः श्रीगुर्वाश्रयान्तः उपासनापूर्वाङ्गरूपः साम्मुख्यभेदो बहुविधो दर्शितः। अथ साक्षादुपासनालक्षणस्तद्भेदोऽपि बहुविधो दर्श्यते। तत्र साम्मुख्यं द्विविधम्--निर्विशेषमयं सविशेषमयञ्च। तत्र पूर्वं ज्ञानम्, उत्तरन्तु द्विविधम्—अहंग्रहोपासनारूपं भक्ति-

---

(११३) "वयन्तु साक्षाद्भगवन् भवस्य, प्रियस्य सख्युः क्षणसङ्गमेन।
सुदुश्चिकित्स्यस्य भवस्य मृत्यो,-र्भिषक्तमं त्वाद्यग तिं गताः स्मः॥"६३०॥

टीका—सत्सङ्ग फलमस्माभिरेवानुभूतमित्याहुः वयन्त्विति। तव यः प्रियः सखा, तस्य भवस्य। अत्यन्तमचिकित्स्यस्य भवस्य जन्मनो मृत्योश्च भिषक्तमं सद्वैद्यं त्वां गतिं प्राप्ताः।

क्रमसन्दर्भ—शुद्ध भक्तास्त्वेके प्रचेतोमार्कण्डेयादयः। श्रीगुरोः श्रीशिवस्य च श्रीभगवता सहाभेद दृष्टि तत् प्रियतमत्वेनैव मन्यन्ते। तत्र न वयं भीतत्वेन सत्सङ्गं प्रार्थयामहे, किन्तु परमपुरुषार्थ बुद्धचैव, क्षणिकेनैव सच्छिरोमणि सङ्गलाभेन सर्वाभयापवर्गस्य तव लब्धत्वादित्याह--वयन्त्विति। तु शब्दोऽन्यतो वैशिष्ट्य द्योतनाय। प्रियस्य सख्युरिति गुर्वीश्वरयोर्भवेश्वरयोश्चाभेदोपदेशोऽपीत्थमेव तैः शुद्धभक्तै मंतम्। श्रीशिवोह्येषां वक्तॄणां गुरुः॥

विशुद्ध भक्त गण श्रीशिव को एवं श्रीगुरुदेव को श्रीभगवान् के सहित प्रियतमत्व रूप में ही देखते हैं, उस का प्रमाण निबन्धन यह श्लोक उट्टङ्कित हुआ। अष्टभुज पुरुष को लक्ष्य करके प्रचेतागण कहे थे—हे प्रभो! हम सब आप के प्रियसखा जो महादेव हैं, उनके क्षण काल सङ्ग प्रभाव से,-जो भवरोग अत्यन्त दुश्चिकित्स्य है, उस संसार का साक्षात् भिषक् तम—अर्थात् सद् वैद्य स्वरूप आप को प्राप्त करने में सक्षम हुए हैं। यावत् काल पर्य्यन्त जीव, आप को प्राप्त नहीं करता है, तावत् काल पर्य्यन्त इस विषम संसार व्याधि से वह किसी भी उपाय से मुक्त नहीं हो सकता है, आप भी इस प्रकार सद् वैद्य हैं- आप का दर्शन मात्र से ही संसार व्याधि स्वयं हि निवृत्त हो जाती है। आप को भी आप के प्रिय जन सङ्ग व्यतीत किसी भी उपाय प्राप्त नहीं किया जा सकता है। प्रस्तुत श्लोक में "वयन्तु" 'तु' शब्द का प्रयोग होने के कारण, अन्य सब प्रकाश से वैशिष्ट्य प्रकाश हेतु श्लोकोक्त "प्रियस्य सख्युरिति" प्रिय सखा का, इस प्रकार प्रयोग किया गया है। शिव एवं भगवान् में, गुरु एवं भगवान् में यद्यपि अभेद मनन शास्त्र विहित है। तथापि, श्रीशिव एवं गुरुदेव को श्रीभगवान् के प्रिय मानना ही प्रसिद्ध शुद्ध भक्त वृन्द का अभिमत है। शिव, प्रचेता गण के गुरु हैं, इस श्लोक में उसका उल्लेख हुआ है। वह श्रीगुरु भी श्रीभगवान् के सखा हैं, इसका उल्लेख वक्ता प्रचेतागण की उक्ति में सुस्पष्ट रूप से हुआ है।

श्रीप्रचेतागण श्रीमदष्टभुज पुरुषो को कहे थे ॥२१३॥

२१४। उक्त रीति से भक्ति अङ्ग के प्रथम सोपान—भक्तघङ्ग में रुचि से आरम्भ करके श्रीगुरु-चरणाश्रय पर्य्यन्त उपासना के पूर्वाङ्ग रूप बहु प्रकार भगवत् साम्मुख्य भेद प्रदर्शित हुये हैं। सम्प्रति साक्षात् उपासनारूप साम्मुख्य के जो विविध भेद हैं, उस का प्रदर्शन किया जा रहा है। उस के मध्य में भगवत् साम्मुख्य, आपाततः द्विविध हैं, एक निर्विशेषमय द्वितीय सविशेषमय। उस के मध्य में अभेद

रूपञ्च । अथ ज्ञानस्य लक्षणम् (भा० ११।१९।२७)—

(२१४) "ज्ञानञ्चैकात्म्यदर्शनम्" इति ।

अभेदोपासनं ज्ञानमित्यर्थः ।। श्रीभगवान् ।।

२१५ । तत्साधनप्रकारश्चैवं बहुविधस्तत्र तत्रोक्तः । स च ज्ञानमेवोच्यते । तत्र श्रवणं श्रीपृथुसनत्कुमार-संवादादौ द्रष्टव्यम् । तदनुसारेण मननञ्च ज्ञेयम् । प्रथमतः श्रोतॄणां हि विवेकस्तावानेव, यावता जड़ातिरिक्तं चिन्मात्रं वस्तूपस्थितं भवति । तस्मिंश्चिन्मात्रेऽपि वस्तुनि ये विशेषाः स्वरूपभूतशक्तिसिद्धा भगवत्तादिरूपा वर्त्तन्ते, तांस्ते विवेक्तुं न क्षमन्ते, यथा रजनीखण्डिनि ज्योतिषि ज्योतिर्मात्रत्वेऽपि ये मण्डलान्तर्बहिश्च दिव्यविमानादि-परस्पर-

---

भावनात्मक ज्ञान को निर्विशेषमय साम्मुख्य है । द्वितीय सविशेषमय साम्मुख्य द्विविध हैं— एक अहंग्रहोपासनारूप, अपर भक्ति रूप । ज्ञान साधन का लक्षण, भा० ११।१९।२७ में उक्त है—

(२१४) "धर्म्मो मद् भक्ति कृत्प्रोक्तो ज्ञानञ्चैकात्म्यदर्शनम् ।
गुणेष्वसङ्गो वैराग्यमैश्वर्य्यञ्चाणिमादयः ॥"

टीका—स्वाभिप्रेतान् धर्मादीन् व्याचष्टे धर्मोमद्भक्तिकृत् । यतः स एव प्रोक्तः, प्रकृष्ट उक्त शास्त्रेषु ।

क्रमसन्दर्भ—अथ भक्ति सङ्गाद् धर्मस्य वैशिष्ट्यं चोक्तम् । धर्म इति भगवदर्पणेन भक्ति परिकरी कृतत्वेन च भक्तित्वमुच्यते । यद्वा, मद्भक्ति कृदेवधर्मः प्रकर्षेणोक्तो नान्यः, ततः स एव मुख्य वृत्या धर्म शब्देन वाच्य इत्यर्थः । एवमेवभक्तावपि धर्मशब्दः (२४ श्लोक) 'एवं धर्म्मैः'' इतीति भावः । ऐकात्म्यं सर्वेषां परम स्वरूप मद्रूपेणैकरूपत्वम् । अभेदोपासनं ज्ञानमित्यर्थः । यद्वा, एक एव सर्वेषामात्मा योऽहं स्वयं भगवान्, स एकात्मा, स्वार्थेष्यञ्— ऐकात्म्यम् । तद् दर्शनमेव ज्ञानं प्रोक्तमिति पूर्ववत् ।

मुझ में भक्ति करने का नाम प्रकृष्ट धर्म है, यही शास्त्र में घोषित है । अभेद उपासना को ज्ञान कहते हैं । श्रीभगवान् कहे थे ।।२१४।।

२१५। उस ज्ञान साधन के विविध प्रकार का उल्लेख श्रीमद् भागवत के स्थान स्थान में हैं। उन सब प्रकार को ज्ञान नाम से उल्लेख किया जाता है । उस ज्ञानादि श्रवण एवं ज्ञानादि साधन का प्रकार-- श्रीपृथु सनत् कुमार संवाद प्रभृति में द्रष्टव्य है । एवं श्रवण के प्रकारानुसार प्रथमतः ज्ञान साधक श्रोतावृन्द को उतना विवेक का प्रयोजन है, जिस से चित्त में जड़ातिरिक्त चैतन्य मात्र वस्तु ही उपस्थित हो, वह वस्तु, यद्यपि जड़ सम्बन्ध रहित केवल चैतन्य स्वरूप है, तथापि उस में स्वरूप भूत शक्ति सिद्ध भगवत्ता प्रभृति रूप जो विशेष हैं, अभेद उपासक ज्ञानी साधक उस को अवगत होने में अक्षम है । जिस प्रकार रजनी गत दोष खण्डन कारी ज्योतिः स्वरूप सूर्य्य, केवल ज्योतिर्म्मय होने से भी उस मण्डल के भीतर एवं बाहर अलौकिक सप्ताश्वरथ प्रभृति एवं परस्पर पृथकीभूत रश्मि एवं रश्मि परमाणु रूप विशेष है । किन्तु नेत्र यह सब ग्रहण करने में असमर्थ है । किन्तु देववृन्द सकल विशेष को ही ग्रहण कर सकते हैं । उस प्रकार केवल चैतन्य स्वरूप वस्तु में भी स्वरूप भूत जो सब विशेष हैं, निर्भेद अनुसन्धानात्मक ज्ञान साधन के द्वारा यह सब विशेष गृहीत नहीं होते हैं । अतएव ज्ञानिगण, स्वरूपगत अनन्त धर्मविद्यमान होने पर भी ज्ञान नेत्र के द्वारा उसको ग्रहण करने में अक्षम हैं । अतः निर्विशेष चिन्मात्र स्वरूप का ही अनुभव करते हैं । भक्त गण, भक्ति नेत्र के द्वारा वह सब ऐश्वर्य्य माधुर्य्य प्रभृति स्वरूपगत अनन्त धर्म ग्रहण कर

पृथग्भूत-रश्मिपरमाणुरूपा विशेषास्तांश्चर्म-चक्षुषो न क्षमन्त इत्यन्वयः, तद्वत् । पूर्ववच्च यदि महत्कृपाविशेषेण दिव्यदृष्टिता भवति, तदा विशेषोपलब्धिश्च भवेत्, न चेन्निर्विशेष-चिन्मात्रब्रह्मानुभवेन तल्लीन एव भवति । तथैव निदिध्यासनमपि तेषाम्, तद्यथा (भा० २।२।१५-१६)

(२१५) "स्थिरं सुखञ्च सनमास्थितो यति,-र्यदा जिहासुरिममङ्ग लोकम् ।
काले च देशे च मनो न सज्जयेत्, प्राणान् नियच्छेन्मनसा जितासुः ॥६३१॥
मनः स्वबुद्ध्यामलया नियम्य, क्षेत्रज्ञ एतां निलयेत्तमात्मनि ।
आत्मानमात्मन्यवरुध्य धीरो, लब्धोपशान्तिर्विरमेत कृत्यात् ॥६३२॥

एतां बुद्धिं क्षेत्रज्ञे बुद्ध्यादिद्रष्टरि निलयेत् प्रविलापयेत् । तञ्च क्षेत्रज्ञं स्वरूपभूतया बुद्ध्या आत्मनि तद्द्रष्टृत्वादि-रहिते शुद्धे जीवे । तञ्च शुद्धमात्मानमात्मनि ब्रह्मणि, अवरुध्य

---

एक अनिर्वचनीय आनन्दोच्छ्वास से मत्त हो जाते हैं । वह सब ज्ञान साधक वृन्द भी यदि महत् कृपा भाव मयी दृष्टि प्राप्त करें तो वे भी स्वरूपगत विशेष की उपलब्धि कर सकते हैं । यदि महत् कृपा लाभ न हो तो निर्विशेष चिन्मात्र ब्रह्मानुभव में अर्थात् ब्रह्म स्वरूप में ही लीन होकर रहते हैं । ज्ञानि वृन्द की निदिध्यासन रूप उपासना का वर्णन भा० २।२।१५-१६ इस प्रकार है—

(२१५) "स्थिरं सुखञ्चासनमास्थितो यति,--र्यदा जिहासुरिममङ्ग लोकम् ।
काले च देशे च मनो न सज्जयेत्, प्राणान् नियच्छेन्मनसा जितासुः ॥६३१॥
मनः स्वबुद्ध्यामलया नियम्य, क्षेत्रज्ञ एतां निलयेत्तमात्मनि ।
आत्मानमात्मन्यवरुध्य धीरो, लब्धोपशान्तिर्विरमेत कृत्यात् ॥"६३२॥

टीका—एवं तावदासन्न मृत्योः पुंसः कृत्यमुक्तम् । इदानीं तस्यैव स्वयं देहं त्यक्तु मिच्छनः कृत्यमाह-स्थिरमिति सार्द्धश्चतुर्भिः । अङ्ग ! हे राजन् ! एवम्भूतो यति र्यदा इमं लोकं देहं जिज्ञासुः हातु मिच्छति, तदा देशे पुण्य क्षेत्रे, काले च उत्तरायणादौ, मनो न सज्जयेत् न प्रापयेत् । न देश कालौ योगिनः सिद्धि हेतुः किन्तु योग एवेति, दृढ़निश्चयो भूत्वा स्थिरं सुखकरञ्चासनमास्थितः प्राणान् नियच्छेदित्यर्थः (१५) तद् गृहीत विषयं मनोबुध्या निश्चयरूपया नियम्य तन्मात्रं कृत्वा, एतां बुद्धिं क्षेत्रज्ञे बुद्ध्यादि द्रष्टरि निलयेत् प्रविलापयेत् । तञ्च क्षेत्रज्ञम्, आत्मनि शुद्धे । तञ्च शुद्धमात्मानम्, आत्मैवाहमिति आत्मनि ब्रह्मणि अवरुध्य एकी कृत्य, लब्धोपशान्तिः प्राप्त निवृत्तिः सन् कृत्याद् विरमेत् । ततः परं प्राप्याभावात् ॥१६॥

सम्प्राप्त आसन्न मृत्यु मानव यदि देहत्याग करने के इच्छुक होता है, तो उस के पक्ष में कर्त्तव्य क्या है— उसको कहते हैं—हे राजन् ! पूर्व वर्णित लक्षणाक्रान्त योगी यदि यह शरीर त्याग करने के इच्छुक होता है, तो, पुण्य क्षेत्र एवं उत्तरायण प्रभृति काल में आसक्ति न रखे । कारण, देश वा काल योगी के पक्ष में सिद्धि लाभ का हेतु नहीं है । किन्तु योग ही सिद्धि लाभ का हेतु है । इस प्रकार दृढ़ निश्चय होकर स्थिर एवं सुखकर आसन में अवस्थान करतः प्राण संयम करे । तत् पश्चात् अमला निज बुद्धि के द्वारा मन को संयत रखकर इस अमला बुद्धि को बुद्धि प्रभृति के द्रष्टा क्षेत्रज्ञ विलीन करे । इस क्षेत्रज्ञ को स्वरूप भूत बुद्धि द्वारा "बुद्ध्यादि द्रष्टृत्व प्रभृति धर्म रहित शुद्ध जीव में लीन करे । उस शुद्ध आत्मा को भी ब्रह्म स्वरूप में अवरुद्ध करे । अवरोध शब्द का अर्थ है— ब्रह्म के सहित शुद्ध जीवात्मा को

तदेकत्वेन विचिन्त्य, लब्धोपशान्तिः प्राप्तनिर्वृतिः सन् कृत्याद्विरमेत्,-तस्य ततः परं प्राप्याभावात् ।। श्रीशुकः ।।

२१६। तदेवं ज्ञानमुक्तम् । इदमेव (गी० ८।३) "स्वभावोऽध्यात्ममुच्यते" इत्यनेन श्रीगीतासूक्तम् । स्वस्य शुद्धस्यात्मनो भावो भावना, आत्मन्यधिकृत्य वर्त्तमानत्वादध्यात्म-शब्देनोच्यत इत्यर्थः । अथाहंग्रहोपासनम्-तच्छक्ति विशिष्ट ईश्वर एवाहमिति चिन्तनम् । अस्य फलं स्वस्मिंस्तच्छक्त्याद्याविर्भावः । यथा विष्णु-पुराणे नागपाशादि-यन्त्रितः श्रीप्रह्लादस्तादृशमात्मानं स्मरन् नागपाशादिकमुत्सारितवान् । अत्रान्तिमफलञ्च कीटपेशस्कृन्न्यायेन सारूप्य-साष्टर्चादिकञ्च ज्ञेयम् ।

अथ भक्तिः, तस्यास्तटस्थलक्षणं स्वरूपलक्षणञ्च, यथा गरुड़पुराणे,--

"विष्णुभक्तिं प्रवक्ष्यामि यया सर्वमवाप्यते । यथा भक्त्या हरिस्तुष्येत्तथा नान्येन केनचित् ।।"६३३।।

---

अभेद रूप में भावना करना । अनन्तर निवृति लाभ करके साधन कृत्य से विरत होना चाहिये । कारण, उस ज्ञानी का निर्विशेष ब्रह्म स्वरूप अनुभव के पश्चात् अधिक कुछ प्राप्य नहीं रह जाता है । अभेदानु-सन्धानात्मक ज्ञान साधक की ऐकात्म्य दृष्टि पर्य्यन्त ही चरम फल है ।

प्रकरण प्रवक्ता श्रीशुक हैं—।।२१५।।

२१६। उस रीति से ज्ञान मार्ग वर्णित हुआ । गीता शास्त्र में (८।३) "स्वाभावोऽध्यात्ममुच्यते" उक्त रीति से ज्ञान को ही अध्यात्म कहा गया है । स्वभाव एवं अध्यात्म शब्द का तात्पर्य्य यह है--"स्वस्य शुद्धस्य आत्मनो भावो भावना इति स्वभावः" स्व शब्द का अर्थ शुद्ध आत्मा, भाव शब्द का अर्थ--भावना, अर्थात् शुद्ध त्वं पदार्थ जीवस्वरूप की जो भावना, उसका नाम-- स्वभाव है । अध्यात्म—आत्मानमधिकृत्य वर्त्तमानत्वात् अध्यात्मं, अर्थात् आत्मा को अधिकार करके जो होता है, उस का नाम अध्यात्म है । अनन्तर अहंग्रह उपासना का वर्णन करते हैं—

"तच्छक्ति विशिष्ट ईश्वर एवाहं, इति चिन्तनं" अर्थात् शक्ति विशिष्ट ईश्वर ही मैं हूँ—इस प्रकार चिन्ता का नाम ही अहं ग्रह उपासना है । इस प्रकार चिन्ता से चिन्तन कारी में ईश्वरीय शक्ति विशेष का आविर्भाव होता है ।

जिस प्रकार विष्णु पुराण में लिखित है—नागपाशादि के द्वारा आबद्ध श्रीप्रह्लाद—"विभुता प्रभृति शक्ति विशिष्ट ईश्वर ही मैं हूँ" इस प्रकार स्मरण करते करते नागपाशादि बन्धन विमोचन किये थे । अर्थात् प्रह्लाद में इस प्रकार शक्ति का आविर्भाव हुआ था कि जिस से नागपाशादि के द्वारा प्रह्लाद को बन्धन करने में कोई भी समर्थ नहीं हुए । इस प्रकार अहंग्रह उपासना का अन्तिम फल यह है कि---कीट के गह्वर में आनीत कीट जिस प्रकार संरम्भ भय से भीत होकर भयद कीट के स्वरूप को प्राप्त कर लेता है, अर्थात् भयदाता कीट में मिलित न होकर अपन को भयद कीट के स्वरूप में रूपायित कर लेता है, उस प्रकार अहंग्रह उपासना में "विविध शक्ति विशिष्ट मैं ही ईश्वर हूँ" इस प्रकार भावना करते करते ईश्वर के समान रूप का ऐश्वर्य्य लाभकर मुक्त हो जाता है । अर्थात् सारूप्य ईश्वर के समान रूप---अथवा समान ऐश्वर्य्य प्राप्ति रूप मुक्ति को प्राप्त कर लेता है, उक्त भक्ति के स्वरूप लक्षण एवं तटस्थ लक्षण का वर्णन गरुड़ पुरण में जिस प्रकार लिखित है उसका उट्टङ्कन करते हैं—

"विष्णुभक्तिं प्रवक्ष्यामि यया सर्वमवाप्यते ।

इत्युक्त्वाह -

"भज इत्येष वै धातुः सेवायां परिकीर्त्तितः।
तस्मात् सेवा बुधैः प्रोक्ता भक्तिः साधनभूयसी ॥"६३४॥ इति ।

अत्र 'यया सर्वमवाप्यते' इति तटस्थलक्षणम् । तत्र च (भा० २।३।१०)—"अकामः सर्वकामो वा" इत्यादि-सिद्धत्वादव्याप्त्यभावः,यथा भक्त्येत्याद्युक्तत्वादहंग्रहोपासनायामतिव्याप्त्यभावः बुद्धैः प्रोक्तत्वादसम्भवाभावश्च । सेवा-शब्देन स्वरूपलक्षणम्, सा च कायिक-वाचिक-मानसात्मिका त्रिविधैवानुगतिरुच्यते । अतएव भयद्वेषादीनामहंग्रहोपासनायाश्च व्यावृत्तिः ।

---

यथा भक्त्या हरिस्तुष्येत्तथा नान्येन केनचित् ॥"६३३॥

में उस विष्णु भक्ति का वृत्तान्त कहूँगा, जिस भक्ति के द्वारा सब कुछ प्राप्त कर सकते हैं। भक्ति द्वारा श्रीहरि, जिस प्रकार सन्तुष्ट होते हैं, अपर किसी के द्वारा भी उस प्रकार सन्तुष्ट नहीं होते हैं। इस प्रकार कहने के बाद उन्होंने कहा—

"भज इत्येष वै धातुः सेवायां परिकीर्त्तितः।
तस्मात् सेवा बुधैः प्रोक्ता भक्तिः साधनभूयसी ॥"६३४॥

'भज' धातु का अर्थ है सेवा । अतएव पण्डित गण, निखिल साधन वृन्द के मध्य में सेवा को ही श्रेष्ठा भक्ति कहते हैं। भक्ति के द्वारा सब कुछ लाभ कर सकते हैं, यह लाभ ही भक्ति का तटस्थ लक्षण है। वस्तु का असाधारण कार्य्य ही उस का तटस्थ लक्षण होता है। अर्थात् जो कार्य्य—उसका ही है, अन्य किसी का नहीं है, वह उसका तटस्थ नाम से अभिहित होता है। भगवान् में भक्ति करने से जो सर्वार्थ सिद्धि होती है, उसका विवरण भा० २।३।१० में

"अकामः सर्वकामो वा मोक्षकाम उदारधीः।
तीव्रेण भक्ति योगेन यजेत पुरुषं परम् ॥"

लिखित है। अर्थात् श्रीविष्णु प्रीति काम किंवा देहेन्द्रिय सुखार्थ उक्त अनुक्त सर्वकाम, अथवा मोक्ष काम--जो भी हो—तीव्र भक्ति योग के द्वारा परम पुरुष श्रीभगवान् की उपासना करनी चाहिये। इस से अव्याप्ति दोष की निवृत्ति हुई है। 'स्वलक्ष्यलक्षणाप्रवेशः—अव्याप्तिः।" अर्थात् भक्ति द्वारा सर्वलभ्य है-- यह तटस्थलक्षण है, उस का अप्रवेश सर्व प्राप्ति के मध्य में कहीं भी नहीं हुआ। उक्त लक्षण में अतिव्याप्ति दोष का परिहार करते हुये कहते हैं—"भक्त्या हरिस्तुष्येत्" इस से कर्म ज्ञानादि साधन में भक्ति लक्षण का प्रवेश नहीं हुआ। अर्थात् अलक्ष्य में भक्ति लक्षण का गमन नहीं हुआ। भक्ति द्वारा श्रीभगवान् जिस प्रकार सन्तुष्ट होते हैं, उस प्रकार अन्य किसी भी साधन से सन्तुष्ट नहीं होते हैं। इस से ज्ञान कर्म प्रभृति साधन में भक्ति लक्षण का अप्रवेश निबन्धन अति व्याप्ति दोष विदूरित हुआ। "सेवा बुधैः प्रोक्ता" पण्डित गण उसी को सेवा कहते हैं, इस प्रकार उल्लेख होने के कारण, भक्ति द्वारा जो सर्वार्थ सिद्धि होती है— इस विषय में असम्भावना का अवसर नहीं रहा। कारण, पण्डित गण की उक्ति अव्यभिचारिणी है।

'सेवा' ही भक्ति का स्वरूप लक्षण है। वह सेवा—कायिक, वाचिक, मानसिक भेद से त्रिविध भगवदनुगति रूप हैं, अतएव भय द्वेष प्रभृति में एवं अहंग्रह उपासना प्रभृति में भक्ति लक्षण का प्रवेश नहीं हुआ। अर्थात् अव्याप्ति नहीं हुई। कारण, जिस में श्रीकृष्णानुकूल्य से अनुगति नहीं है, अर्थात् जिस प्रकार आचरण करने से श्रीकृष्ण को सन्तोष होता है, उस प्रकार कायिक, वाचिक, मानसिक श्रीकृष्णानु-

साधनभूयसी साधनेषु श्रेष्ठेत्यर्थः। तदेव लक्षणद्वयं प्रकारान्तरेणाह, (भा० ११।२।३४) –

(२१६) "ये वै भगवता प्रोक्ता उपाया ह्यात्मलब्धये।
अञ्जः पुंसामविदुषां विद्धि भागवतान् हि तान्॥"६३५॥

अविदुषां पुंसां तन्माहात्म्यमविद्वद्भिरपि कर्त्तृभिः। आत्मनः–'ब्रह्म परमात्मा भगवान्' इत्याविर्भाव-भेदवतः स्वस्य धर्मभूतस्य अञ्जोऽनायासेनैव लब्धये लाभाय ये उपायाः साधनानि स्वयं भगवता (भा० ११।१४।३) —

"कालेन नष्टा प्रलये वाणीयं वेदसंज्ञिता।
मयादौ ब्रह्मणे प्रोक्ता धर्म्मो यस्यां मदात्मकः॥"६३६॥

इत्यनुसारेण प्रोक्ताः, तान् उपायान् भागवतान् धर्मान् विद्धि। हि प्रसिद्धौ। तत्र साक्षाद्-भक्तेरपि भागवतधर्म्माख्यत्वम् (भा० ६।३।१२) "एतावानेव लोकेऽस्मिन्" इत्यादौ परम-

---

शीलन न होने के कारण, भय, द्वेष, एवं अहंग्रह उपासना भक्ति लक्षण का प्रवेश नहीं हुआ। लक्षणस्थ 'साधनभूयसी' शब्द का अर्थ है—साधन वृन्द के मध्य में श्रेष्ठा है।

उक्त भक्ति के स्वरूप लक्षण तटस्थ लक्षण का वर्णन भा० ११।२।३४ में श्रीकवि योगीन्द्र ने प्रकारान्तर से कहा है—

(२१६) "ये वै भगवता प्रोक्ता उपाया ह्यात्मलब्धये।
अञ्जः पुंसामविदुषां विद्धि भागवतान् हि तान्॥"६३५॥

अर्थात् जो भक्तिमाहात्म्य के विषय में अनभिज्ञ हैं। उनको भी ब्रह्म, परमात्मा, भगवान्–यह त्रिविध आविर्भाव विशिष्ट आत्मा—अर्थात् भगवान् स्वयं को अञ्जः--अनायास सुख पूर्वक प्राप्त करने के निमित्त स्वयं भगवान् श्रीकृष्ण जो उपाय का अर्थात् साधन का वर्णन किये हैं– उस साधन का नाम ही भागवत धर्म है।

श्रीभगवान् श्रीकृष्ण—वर्ण एवं आश्रमोचित धर्म समूह का जगत् में प्रकाश मनु प्रभृति के द्वारा किये हैं। किन्तु विशुद्धा भक्ति वा भागवत धर्मकाप्रकाश मनु प्रभृति के द्वारा असम्भव होने से कारण निजमुख से जिसका उद्घोष किये हैं, उसका नाम भागवत धर्म है। उसका विवरण भा० ११।१४।३ में इस प्रकार है-

"कालेन नष्टा प्रलये वाणीयं वेदसंज्ञिता।
मयादौ ब्रह्मणे प्रोक्ता धर्म्मो यस्यां मदात्मकः॥"६३६॥

स्वयं श्रीकृष्ण, उद्धव को कहे थे—हे उद्धव! प्रलय काल में जगत् में भक्ति ग्राहक लोक विद्यमान न होने पर वेद प्रतिपाद्य यह भक्ति धर्म नष्ट प्राय हो गया था। अर्थात् मनुष्य समाज में इस का प्रचार नहीं था। मैंने सृष्टि के प्रारम्भ में अर्थात् जिस समय ब्रह्मा रूप मानव का सृजन हुआ उस समय ह्लादिनी शक्ति की सारभूता भक्ति वा भागवत धर्मका वर्णन ब्रह्मा के निकट में किया था। इससे विदित होता है कि-श्रीभगवान् श्रीकृष्ण, निज मुख से जिस उपायों का उपदेश--आदेश वा वर्णन किये हैं, उस का नाम ही भागवत धर्म है। उक्त श्लोकस्थित 'हि' शब्द का अर्थ 'प्रसिद्ध' है। अर्थात् यह कथा वेद, पुराण, मनुष्य लोक से एवं देव समाज में प्रसिद्ध ही है। प्रश्न हो सकता है कि—साक्षात् भक्ति को ही धर्म शब्द से क्यों कहा गया है? उत्तर में कहते हैं—साक्षात् भक्ति ही साक्षात् धर्म से अभिहित है। उस को भागवत धर्म

धर्म्मत्वख्यापनया दर्शितम् । अत्रात्मलब्धये प्रोक्ता इति तटस्थलक्षणम् । अन्येन तदलाभाद-व्यभिचारि । आत्मलब्धये उपाया इति तु स्वरूपलक्षणम् । तल्लाभोपायो हि तदनुगतिरेव ॥ श्रीकविर्निमिम् ॥

२१७। सा भक्तिस्त्रिविधा,--आरोपसिद्धा, सङ्गसिद्धा, स्वरूपसिद्धा च। तत्रारोपसिद्धा स्वतो भक्तित्वाभावेऽपि भगवदर्पणादिना भक्तित्वं प्राप्ता कर्मादिरूपा। सङ्गसिद्धा स्वतो भक्तित्वाभावेऽपि तत्परिकरतया संस्थापनेन (भा० ११।३।२२) "तत्र भागवतान् धर्मान् शिक्षेद्गुर्वात्मदैवतः" इत्यादि-प्रकरणेषु, (भा० ११।३ २३) "सर्वतो मनसोऽसङ्गम्" इत्यादिना लब्ध-तदन्तःपाता ज्ञान-कर्म तदङ्गरूपा । स्वरूपसिद्धा चाज्ञानादिनापि तत्प्रादुर्भावे भक्तित्वाव्यभिचारिणी साक्षात्तदनुगत्यात्मा तदीयश्रवणकीर्त्तनादिरूपा। (भा० ७।५।२३) "श्रवणं

---

भी कहते हैं—भा० ६।३।२२ में धर्मराज ने कहा है—

"एतावानेव लोकेऽस्मिन् पुंसां धर्मः परः स्मृतः ।
भक्तियोगो भगवति तन्नाम ग्रहणादिभिः ॥

इस जगत् में श्रीहरि के नाम श्रवण कीर्त्तनादि के द्वारा श्रीभगवान् में जो भक्ति योग है, यही मानव मात्र का परम धर्म है। इस भागवत धर्म लक्षण में भगवत् प्राप्ति भागवद् धर्म का असाधारण कार्य्य होने के कारण—तटस्थ लक्षण है। भगवान् को प्राप्त करने के निमित्त जो उपाय कथित हैं–यह सब उपाय अर्थात् श्रवण कीर्त्तनादि भागवत धर्म वा भक्ति के स्वरूप लक्षण हैं। भगवत् प्राप्ति का उपाय भी भगवदनुगति है—अर्थात् अनुकूल अनुशीलन है।

श्रीकवि योगीन्द्र निमिमहाराज को कहे थे ।।२१६।।

२१७। यह भक्ति त्रिविध हैं, आरोप सिद्धा, सङ्ग सिद्धा, एवं स्वरूप सिद्धा। उस के मध्यमें स्वरूपतः भक्तित्व न होने पर अर्थात् आनुकूल्य कृष्णानुशीलन न होने पर, निज उद्देश्य सिद्धि हेतु भगवत् सन्तोषार्थ कर्मार्पण के द्वारा जो भक्ति होती है—वह आरोप सिद्धा भक्ति है। अर्थात् भगवान् में आरोपित होता है, तज्जन्य कर्मादि में भक्तित्व होता है। स्वरूपतः भक्तित्व न होने पर भी अर्थात् आनुकूल्य से कृष्णानुशीलन न होने पर भी भक्ति परिकर रूप में संस्थापन द्वारा जिस का भक्तित्व सिद्ध होता है—उस का नाम सङ्ग सिद्धा है। जिस प्रकार भा० ११।३।२२ में उक्त है—

"तत्र भागवतान् धर्मान् शिक्षेद् गुर्वात्मदैवतः। इत्यादि।

प्रकरण में भा० ११।३।३२ उक्त है—"सर्वतो मनसोऽसङ्गम्"–अर्थात् विशुद्ध भागवत धर्म वर्णन में प्रवृत्त होकर उस के सहायक रूप में ज्ञान कर्म्मादि को भक्तयङ्ग रूप में उल्लेख किया है। स्वरूपसिद्धा भक्ति का लक्षण यह है–अज्ञानादि के द्वारा भी उसका प्रादुर्भाव होने पर भक्तित्व में अव्यभिचारिणी साक्षात् भगवदानुकूल्यजीवना भगवत् सम्बन्धि श्रवण कीर्त्तनादि रूपा। जिस प्रकार भा० ७।४।२३ में प्रह्लाद ने कहा है—"श्रवणं कीर्त्तनं विष्णोः स्मरणं पाद सेवनं, अर्च्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्। अर्थात् श्रीविष्णु के श्रवण, कीर्त्तन, स्मरण, आदर विशेष के सहित विष्णु की परिचर्य्या, अर्च्चन, नमस्कार, दास्य, सख्य, विष्णु में आत्मसमर्पण—यह नवविधा भक्ति स्वरूप सिद्धा हैं। अर्थात् अव्यवधान से साक्षाद्रूप में श्रीविष्णु के सम्बन्ध में कायिक, वाचिक, मानस चेष्टा का नाम स्वरूपसिद्धा भक्ति है।

कीर्त्तनं विष्णोः" इत्यादौ विष्णोः श्रवणं विष्णोः कीर्त्तनमिति विशिष्टस्यैव विवक्षितत्वात् तेषामपि नारोपसिद्धत्वम्, प्रत्युत मूढ़प्रोन्मत्तादिषु तदनुकर्त्तृष्वपि कथञ्चित् सम्बन्धेन फल-प्रापकत्वात् स्वरूपसिद्धत्वम् । यथा—श्रीप्रह्लादस्य पूर्वजन्मनि श्रीनृसिंहचतुर्द्दश्युपवासः, यथा कुक्कुरमुखगतस्य श्येनस्य भगवन्मन्दिरपरिक्रमः । एवमन्यदृष्टचादिना मूढ़ादिभिः कृतस्य वन्दनस्यापि ज्ञेयम् । तदेवं त्रिविधापि सा पुनरकैतवा सकैतवा चेति द्विविधा ज्ञेया । तत्रारोपसङ्गसिद्धयोर्यस्या भक्तेः सम्बन्धेन भक्तिपदप्राप्त्या सामर्थ्यम्, तन्मात्रापेक्षत्वं चेदकैतवत्वम्, स्वीयान्यदीयफलापेक्षत्वं चेत् सकैतवत्वम् । स्वरूप-सिद्धायाश्च यस्य भगवतः सम्बन्धेन तादृशं माहात्म्यं तन्मात्रापेक्ष-परिकरत्वञ्चेदकैतवत्वम्, प्रयोजनान्तरापेक्षया कर्म-ज्ञानपरिकरत्वञ्चेत् सकैतवत्वम् । इयमेवाकैतवाकिञ्चनाख्यत्वेन पूर्वमुक्ता (भा० १।१।२) "धर्मः

---

श्रवण कीर्त्तनादि भक्त्यङ्ग के सहित श्रीविष्णु का साक्षात् सम्बन्ध होने के कारण, एवं कर्म ज्ञान प्रभृति से यह सब क्रिया का वैशिष्ट्य हेतु यह श्रवण कीर्त्तनादि–"आरोपसिद्धा भक्ति लक्षण से पार्थक्य-मण्डित है । कारण, आरोपसिद्धा भक्ति में साक्षात् ही श्रीभगवान् के सहित किसी प्रकार सम्बन्ध न रख कर ही अनुष्ठित कर्म्मादि श्रीभगवान् में अर्पित होते हैं । स्वरूप सिद्धा भक्ति का वैशिष्ट्य यह है कि-अबुद्धि पूर्वक भी यदि यह अनुष्ठित होती है । तो भक्ति फल प्राप्ति विषय में अन्यथा होने की सम्भावना नहीं है । तज्जन्य स्वरूपसिद्धा भक्ति को आरोपसिद्धा भक्ति के लक्षण में अन्तर्भुक्त नहीं किया जा सकते हैं । स्वरूप सिद्धा भक्ति का प्रभाव ही इस प्रकार है कि भक्ति का अनुकरण कारी मूढ़ प्रोन्मत्त प्रभृति में भी किसी प्रकार भक्ति सम्बन्ध होने पर यह फल प्राप्ति कराने में सक्षम है । जिस प्रकार पूर्व जन्म में प्रह्लाद के द्वारा अनुष्ठित श्रीनृसिंह चतुर्दशी का उपवास । पूर्व जन्म में प्रह्लाद एक ब्राह्मण युवक था, चरित्र अत्यन्त कलुषित होने के कारण वेश्यासक्त हो गया था । एक दिन वेश्या के सहित मनोमालिन्य होने के कारण उपवास रहना पड़ा । दैवात् उस दिन श्रीनृसिंह चतुर्दशी की उपवास तिथि थी । ब्राह्मण युवक का कुछ भी अनुसन्धान नहीं था । अनुसन्धान न होने पर भी भक्ति स्वभाव एवं प्रभाव से श्रीनृसिंह चतुर्दशी व्रत का फल लाभ हुआ । एवं पर जन्म में श्रीनृसिंह देव का परम भक्त वह हो गया । उस भक्ति से नित्यसिद्ध प्रह्लाद के भाव के सहित किसी प्रकार पार्थक्य न होने से पर जन्म में नित्यसिद्ध प्रह्लाद के सहित सायुज्य लाभ भी हुआ था ।

द्वितीय दृष्टान्त यह है । कुकुर मुख गत श्येनपक्षी की भगवन्मन्दिर परिक्रमा । एक श्येन पक्षी को कुकुर आक्रमणोद्यत होने पर—श्येन पक्षी भीत होकर पलायन करने लगी, उस से उस की भगवन्मन्दिर परिक्रमा हो गई । इस परिक्रमा के फल से उसकी वैकुण्ठ प्राप्ति हुई । इस प्रकार अन्य दृष्ट प्रभृति द्वारा भी यदि मूढ़ प्रभृति भगवद् वन्दन करते हैं तो उस नमस्कार के फल से भगवत् प्राप्ति होती है ।

उक्त आरोपसिद्धा, सङ्गसिद्धा, आरोपसिद्धा—यह त्रिविध भक्ति—अकैतव एवं सकैतव भेद द्विविध हैं । उस के मध्य में आरोपसिद्धा एवं सङ्गसिद्धा, जिस भक्ति के सम्बन्ध से भक्ति संज्ञा से अभिहिता होती है, केवल उस भक्ति मात्र की ही अपेक्षा होती है, भक्ति भिन्न अन्य फल प्राप्ति की आकाङ्क्षा नहीं होती है तो, वह आरोपसिद्धा एवं सङ्गसिद्धा भक्ति अकैतवा होती है । और यदि स्वकीय वा अन्यदीय फलापेक्षा होती है तो वह आरोपसिद्धा एवं सङ्गसिद्धा भक्ति-सकैतवा होती है । इति पूर्व में इस अकैतवा भक्ति को ही अकिञ्चना भक्ति कही गई है । भा० १।१।२ में कथित "धर्म्मः प्रोज्झितकैतवोऽत्र परमः" श्लोक में भक्ति

प्रोज्झितकैतवोऽत्र परमः" इत्येव वास्य तदुभयविधत्वे प्रमाणं ज्ञेयम्। तथोक्तम्, (भा० ७।७।५२) "प्रीयतेऽमलया भक्त्या हरिरन्यद्विडम्बनम्" इति।

अथारोपसिद्धा। एतदर्थमेव (भा० ११।५।१२ १२।१२।५३) "नैष्कर्म्यमप्यच्युतभाव-वर्जितम्" इत्यादौ सकाम-निष्कामयोर्द्वयोरपि कर्म्मणोर्निन्दा, भगवद्वैमुख्याविशेषात्। तत्र यादृच्छिक-चेष्टाया अपि भगवदर्पितत्वे भगवद्धर्मत्वं भवति, किमुत वैदिककर्मण इति वक्तुं तस्या अपि तद्रूपत्वमाह, (भा० ११।२।३६) —

(२१७) "कायेन वाचा मनसेन्द्रियैर्वा, बुद्ध्यात्मना वानुसृतस्वभावात्।
करोति यद्यत् सकलं परस्मै, नारायणायेति समर्पयेत्तत्॥"६३७॥

पूर्व्वं हि (भा० ११।२।३१) "धर्म्मान् भागवतान् ब्रूत" इति प्रश्नानन्तरं (भा० ११।२।३४) "ये वै भगवता प्रोक्ताः" इत्यादिना मुख्यत्वेन साक्षात् तल्लब्धये उपायभूताः श्रवण-कीर्त्तनादयो

---

का सकैतवत्व एवं अकैतवत्व निर्णय हुआ है। सारार्थ यह है कि—भक्ति भिन्न धर्म अर्थ, काम, एवं मोक्ष के मध्य में किसी एक की कामना विद्यमान होने से वह भक्ति सकैतवा होती है। और धर्मार्थ काम मोक्ष के मध्य में किसी की कामना न हो, एकमात्र श्रीभगवत् सन्तोषार्थ अनुष्ठिता भक्ति अकैतवा है।

स्वरूप सिद्धा भक्ति के सहित श्रीभगवान् का साक्षात् सम्बन्ध विद्यमान होने के कारण स्वरूपसिद्धा भक्ति की परम सामर्थ्य है। यदि केवल भगवान् की ही अपेक्षा होती वह स्वरूप सिद्धा भक्ति अकैतवा होती है। उस भक्ति का नाम ही अकिञ्चना भक्ति है। भा० ७।७।५४ में लिखित है—

"न दानं न तपो नेज्या न शौचं न व्रतानि च।
प्रीयते ऽमलया भक्त्या हरिरन्यद् विडम्बनम्॥

दान, तपस्या, यज्ञ, शौच, एवं निखिल व्रत प्रभृति साधन समूह अभिनय मात्र ही है। कारण, श्रीहरि एकमात्र अमला अर्थात् निष्कामा भक्ति के द्वारा ही सन्तुष्ट होते हैं।

सम्प्रति आरोपसिद्धा भक्ति का प्रसङ्ग उत्थापित हो रहा है, इस अभिप्राय से ही भा० ११।५।१२, १२।१२।५३ में कहा गया है—"नैष्कर्म्यमप्यच्युतभाववर्जितम्"—अर्थात् भगवद् विमुखता की निवृत्ति न होने के कारण, सकाम निष्काम— उभय विध कर्म ही निन्दित हैं। जो जितने ही सत् कर्म का अनुष्ठान क्यों न करें, हृदय में यदि भगवत अनुसन्धान नहीं होता है तो, यह सब कार्य्य असत् होते हैं। उस में भी दैहिक एवं व्यवहारिक चेष्टा, जो लौकिक रूप से निर्दिष्ट है, उस का अर्पण भगवान् को करने से भी यदि भागवद् धर्म होता है तो, वैदिक कर्म का अर्पण भगवान् को करने पर सुतरां ही भागवद् धर्म होगा। यह दर्शाने के निमित्त दैहिक एवं व्यवहारिक चेष्टा का भी भागवद्धर्मता का वर्णन करते हैं। भा० ११।२।३६

(२१७) "कायेन वाचा मनसेन्द्रियैर्वा, बुद्ध्यात्मना वानुसृतस्वभावात्।
करोति यद्यत् सकलं परस्मै, नारायणायेति समर्पयेत्तत्॥"६३७॥

श्रीकवि योगीन्द्र कहे थे—हे राजन्! काय, वाक्य, मन एवं इन्द्रिय द्वारा, बुद्धि एवं चित्त के द्वारा अथवा निजदैहिक एवं व्यवहारिक जो कुछ कार्य्य करते रहते हो, समस्त कार्य्य—'परम पुरुष नारायणाय-नमः' कहकर समर्पण करो।

भागवतधर्म्मा लक्षिताः, ते चात्रैव (भा० ११।२।३९) "शृण्वन् सुभद्राणि रथाङ्गपाणेः" इत्यादि। कतिचिद्दर्शिताः। उत्तराध्याये च (भा० ११।३।२२) —"तत्र भागवतान् धर्म्मान् शिक्षेद्-गुर्वात्मदैवतः" इत्युपक्रमवाक्यानन्तरम् (भा० ११।३।३३) "इति भागवतान् धर्म्मान् शिक्षन् भक्त्या तदुत्थया" इत्युपसंहार-वाक्यस्य प्राग्भागवतधर्म्मत्वेनान्यसङ्गादि त्यागादिकमपि वक्ष्यते (भा० ११।३।२३) "सर्वतो मनसोऽसङ्गम्" इत्यादिना। तस्मात् लौकिक-कर्म्माद्यर्पणमिदं यथाकथञ्चित् तद्धर्म्मसिद्ध्यर्थमेवोच्यते। अर्थश्चायं टीकायाम्—"आत्मना चित्तेनाहङ्कारेण वा अनुसृतो यः स्वभावस्तस्मात्। अयमर्थः—न केवलं विधितः कृतमेवेति नियमः, स्वभावानुसारि लौकिकमपीति। श्रीगीतासु च (९।२७)—

'यत् करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम्॥'६३८॥

---

इस के पूर्व में "धर्मान् भागवतान् ब्रूतः" अर्थात् भागवत धर्म्म का वर्णन करो, इस प्रकार निमि महाराज कृत प्रश्नोतर में श्रीकवियोगीन्द्र कहे थे—"ये वै भगवता प्रोक्ताः" अर्थात् निज प्राप्ति हेतु श्रीभगवान् जो सब उपाय कहे थे, उन सब उपायों का नाम भागवद् धर्म है। इस से मुख्य रूप से साक्षात् भगवत् प्राप्ति के उपाय स्वरूप श्रवण कीर्त्तनादि भागवद् धर्म समूह को लक्ष्य किया गया है। यह सब भागवद् धर्म के मध्य में भी "शृण्वन् सुभद्राणिरथाङ्गपाणेः" इत्यादि श्लोक में भगवान् के जन्म कर्म एवं नाम श्रवण कीर्त्तन करते करते वाह्यलोकापेक्षा शून्य होकर विचरण करे। इस प्रकार भागवत धर्म के कतिपय अङ्ग का वर्णन किया गया है। अनन्तर उस के ही तृतीयाध्याय भा० ११।३।२२ में "तत्र भागवतान् धर्मान् शिक्षेद् गुर्वात्मदैवतः" अर्थात् श्रीगुरु चरण के समीप में भागवत धर्म समूह की शिक्षा करे। इस प्रकार उपक्रम वाक्य के पश्चाद् कहा गया है—

"इति भागवतान् धर्मान् शिक्षन् भक्त्या तदुत्थया"

अर्थात् इस प्रकार श्रीगुरुचरण के समीप से भागवद् धर्म शिक्षा करके भजन करते करते भाव भक्ति लाभ करोगे एवं भाव भक्ति के प्रभाव से माया उत्तीर्ण हो सकोगे। इस प्रकार उपसंहार वाक्य के पूर्व में भागवत धर्म के सहायक रूप में अन्य सङ्ग त्याग प्रभृति उपदेश भी भा० ११।३।२३ 'सर्वतोमनसोऽसङ्गम्" द्वारा करेंगे। अतएव लौकिक कर्म्मादि का अर्पण भगवान् में करने से जैसे तैसे भागवद् धर्म सिद्ध होता है-यह कहा गया है। अर्थात् वस्तुतः भगवान् में कर्मार्पण करने से ही भागवद् धर्म नहीं हो सकता है, किन्तु अर्पण समय में यथा कथञ्चित् भगवान् का स्मरण होने के कारण ही भागवद् धर्म कहा गया है, यह गौण भागवद् धर्म है। "कायेन वाचा" श्लोक की टीका में श्रीधर स्वामिपादने कहा है—"आत्मना" अर्थात् चित्त अथवा अहङ्कार द्वारा जो कुछ किया जाता है, अनुसृत जो स्वभाव है, उस स्वभाव के द्वारा जो कर्म्म किया जाता है, उस को भी श्रीभगवान् को अर्पण करे। यहाँ का तात्पर्य्य यह है कि—केवल शास्त्र विधि के द्वारा कृत कर्म्म का अर्पण श्रीनारायण को करे, यह नियम नहीं है। स्वभावानुसार कृत लौकिक कर्म को भी अर्पण करे। श्रीमद् भगवद् गीता में भी लिखित है—९।२७—

"यत् करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम्॥६३८॥

हे अर्जुन! तुम जो कुछ करते हो, जो भोजन करते हो, होम दान, तप, करते हो, यह सब मुझ को

इतः पूर्व्वं प्राणबुद्धिदेहधर्म्माधिकारत इत्यादिकमन्त्रश्च तथा। अत्र स्वाभाविककर्म्मणोऽर्पणे दुष्कर्म्मणो द्विविधा गतिः, ज्ञानेच्छूनामविशेषेण, भक्तीच्छूनान्तु अनेन दुर्वासन दुःखदर्शनेन स करुणामयः करुणां करोत्विति वा, (वि० पु० १।२०।१९)—

"या प्रीतिरविवेकानां विषयेष्वनपायिनी। त्वामनुस्मरतः सा मे हृदयान्नापसर्पतु॥"६३९॥

इति विष्णुपुराणोक्त प्रकारेण,—

"युवतीनां यथा यूनि यूनाञ्च युवती यथा। मनोऽभिरमते तद्वन्मनो मे रमतां त्वयि॥"६४०॥

इति पाद्मोक्तप्रकारेण च मम सुकर्म्मणि दुष्कर्म्मणि च यद्रागसामान्यं तत् सर्वतोभावेन भगवद्विषयमेव भवत्विति वा समाधेयम्। कामिनान्तु सर्वथैव सर्वदुष्कर्म्मार्पणम् (भा० ११।३।४६ "वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पितमीश्वरे" इत्यत्र पुनर्वैदिकमेवेश्वरेऽर्पितं कुर्वाण इत्युक्तम्॥ श्रीकविर्निमिम्॥

---

समर्पण करो। इस से लौकिक कर्मार्पण भी विहित हुआ है। पूजा प्रकरण में कथित है—"इतः पूर्वं प्राण बुद्धि देह धर्माधिकारतः" इत्यादि मन्त्र में भी लौकिक वैदिक उभय विध कर्मार्पण ही विहित हुआ है। उभय विध कर्मार्पण के मध्य में स्वाभाविक कर्म्मार्पण विषय में दुष्कर्म्म की दो प्रकार गति होती हैं। ज्ञानेच्छु साधक के पक्ष से दुष्कर्म सुकर्म्म—उभय विध कर्मार्पण द्वारा फलांश में पार्थक्य नहीं होता है। कारण, ज्ञानिगण मानते हैं—"नाहं कर्त्ता, नाहं भोक्ता" अर्थात् मैं कर्म भी नहीं करता हूँ। कर्म फल भी भोग नहीं करता हूँ। देहेन्द्रिय कर्माचरण करते हैं, एवं वे ही कर्म फल भोग करते हैं। मैं देहेन्द्रिय से भिन्न नित्यसिद्ध बुद्ध मुक्त स्वभाव अनुचैतन्य स्वरूप हूँ। इस प्रकार भावना से ही वे सब कर्मार्पण करते हैं। किन्तु भक्तीच्छु साधक के पक्ष में उस से भिन्न रीति है—भक्त गण जानते हैं—

मेरी यह दुर्वासना एवं दुःख को देखकर -करुणामय प्रभु मेरे प्रति करुणा करेंगे। आप स्वयं कृपा करके दुर्वासना जनित क्लेश विदूरित नहीं कर देते हैं तो, मेरी कुछ भी सामर्थ्य नहीं है, मैं निज शक्ति से दुर्वासना निवृत्ति कर सकूँ" इस प्रकार दैन्य परि पूरित अन्तः करण से श्रीभगवच्चरणों में विज्ञापन ही भक्तों का कर्मार्पण है। अथवा, श्रीविष्णु पुराण में कथित है—

"या प्रीतिरविवेकानां विषयेष्वनपायिनी।
त्वामनुस्मरतः सा मे हृदयान्नापसर्पतु॥"६३९॥

अविवेकी जनों की विषय में जो निश्चला प्रीति है, हे नाथ! मैं आप का नियत स्मरण कर कहता हूँ, मेरे हृदय से आप के प्रति उस प्रकार निश्चला-अनपायिनी प्रीति जैसे कभी भी विदूरित न हो, अथवा पद्मपुराणोक्त प्रकार के अनुसार विज्ञापन होता है।

"युवतीनां यथा यूनि यूनाञ्च युवती यथा।
मनोऽभिरमते तद्वन्मनो मे रमतां त्वयि॥"६४०॥

अनेक युवती वृन्द का मन, एक युवक में अथवा बहु युवकों का मन, एक युवती में जिस प्रकार अभिरमित होता है। हे नाथ! मेरा मन जैसे सर्वदा उस प्रकार आप में अभिरमित हो। इस प्रकार ही मेरी आसक्ति सुकर्म में वा दुष्कर्म्म में यत् किञ्चित् है। वह आसक्ति सर्वतो भावेन श्रीभगवान् में हो। इस प्रकार समाधान करना कर्त्तव्य है। सकाम मानव के पक्ष में तो सब प्रकार से ही सब दुष्कर्म्म समर्पण करना चाहिये। भा० ११।३।४६ में उक्त है—"वेदोक्तमेव कुर्वाणोनिःसङ्गोऽर्पितमीश्वरे" अर्थात्

२१८। अथ वैदिक-कर्म्मार्पणस्य प्रशंसामाहुः (भा० ८।५ ४७)—

(२१८) "क्लेशभूर्य्यल्पसाराणि कर्माणि विफलानि वा।
देहिनां विषयार्त्तानां न तथैवार्पितं त्वयि ॥६४१॥

विषयार्त्तानां कर्म्माणि क्वचित् क्लेशो भूरि येषु तथाप्यल्पं फलं येषु तथाभूतानि भवन्ति, क्वचित् कृष्यादिवत् विफलानि वा भवन्ति। त्वय्यर्पितं कर्म्म तु न तथा, किन्तु क्लेशं विना यथाकथञ्चित् कृतस्य कामनयाप्यर्पणे तत्कामस्यावश्यकप्राप्तिः सा च सर्वत उत्कृष्टा भवति। तथा तन्मात्रफलेन च पर्य्याप्तिर्न भवति, संसारविध्वंसादि--फलत्वादित्यर्थः। तदुक्तम् (भा० ११।२।३५) —

---

फलाकाङ्क्षा शून्य होकर वेद विहित कर्म का समर्पण ही श्रीभगवान् को करे। यहाँ केवल ईश्वर में वैदिक कर्मार्पण ही विहित हुआ है। श्रीकवि—निमिमहाराज को कहे थे ॥२१७॥

२१८। अनन्तर देववृन्द—श्रीअजित भगवान् को स्तव करते हुए वैदिक कर्मार्पण की प्रशंसा कर कहे थे—भा० ८।५।४७

(२१८) "क्लेशभूर्य्यल्पसाराणि कर्माणि विफलानि वा।
देहिनां विषयार्त्तानां न तथैवार्पितं त्वयि ॥"६४१॥

टीका— न च वहिर्मुखानामिव त्वद् भक्तानामस्माकंत्वय्यर्पितानि पूर्वं पुण्यानि विपरीत फलानि भवितु मर्हन्तीवत्याह। क्लेशो भूरि येषु अल्पं सारं फलं येषु तानि तानि यथा विफलान्येव सकामानां कर्म्माणि त्वय्यर्पितन्तु नैव तथा।

"नावमः कर्म कल्पोऽपि विफलायेश्वरार्पितः।
कल्पते पुरुषस्यैष स ह्यात्मा दयितोहितः॥
यथा हि स्कन्ध शाखानां तरोर्मूलावसेचनम्।
एवमाराधनं विष्णोः सर्वेषामात्मनश्च हि॥"

टीका—तत्रावैफल्यमुपपादयति। अवमः अल्पोऽपि कर्म कल्पः, कर्म्माभासोऽपि ईश्वरार्पितश्चेत् विफलाय श्रमाय न कल्पते, हि यस्मात् स एष ईश्वरः पुरुषस्य आत्मा, अतएव दयितोहितश्च। न ह्यात्मनि दयिते हिते चार्पितं कर्म निष्फलं स्यात्। अनल्पफलत्वमाह—

यथाहि मूलावसेचनं स्कन्धानां शाखानाञ्च भवति॥

विषय भोग हेतु आर्त्त देहाभिमानी जीव समूह के कर्म समूह प्रचुरतर क्लेशसाध्य अथच अति अल्प हैं। कभी तो कृषि कार्य्य के समान विफल भी होते हैं। किन्तु हे नाथ! जो कर्म्म आप को अर्पित होता है। वह कर्म उस प्रकार क्लेश कर वा विफल नहीं होता है। किन्तु क्लेश स्वीकार न करके यथा कथञ्चित् कर्मार्पण फल लाभ की कामना न करके भी यदि किया जाता है तो, उस से कामित फल प्राप्ति अवश्य ही होगी, एवं वह सर्वोत्कृष्ट होगी। कारण, कामित फल प्राप्ति में ही कर्मार्पण का पर्य्यवसान नहीं होता है। अर्थात् वही यथेष्ट लाभ नहीं है। कारण, निखिल साधनों का मुख्य फल है— भगवद् वहिर्मुख जीव का संसार बन्धन ध्वंस होना। यदि साधन करके संसार बन्धन ध्वंस नहीं होता है। तो संसार बन्धन जनित क्लेश भोग अनिवार्य्य होगा। श्रीभगवान् में साक्षाद् भक्ति व्यतीत कर्मार्पणादि रूपा भक्ति के द्वारा माया बन्धन से मुक्त होने की सम्भावना है ही नहीं। अतएव भा० ११।२।३५ में उक्त है—

"यानास्थाय नरो राजन् न प्रमाद्येत कर्हिचित् ।
धावन् निमील्य वा नेत्रे न स्खलेन्न पतेदिह ॥"६४२॥

इति, (भा० ५।१९।२६) "सत्यं दिशत्यर्थितमर्थितो नृणाम्" इत्यादि च,—यथैव नाभिः श्रीऋषभदेवरूपं भगवन्तं पुत्रत्वेनापि लेभे । श्रीगीतासु च (२।४०)—

"नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्म्मस्य त्रायते महतो भयात् ॥"६४३॥ इति ।

---

"यानास्थाय नरो राजन् न प्रमाद्येत कर्हिचित् ।
धावन् निमील्य वा नेत्रे न स्खलेन्न पतेदिह ॥"६४२॥

टीका--अञ्जः पदेनोक्तं सुकरत्वं विवृणोति यानिति । यान् आस्थाय--आश्रित्य, योगादिष्वव न प्रमाद्येत--विघ्नैर्न विहन्येत । किञ्च निमील्य नेत्रे धावन्नपि इह एषु भागवतधर्मेषु न स्खलेत् । निमीलनं नाम अज्ञानं । यथाहुः,—श्रुति स्मृति उभे नेत्रे विप्राणां परिकीर्त्तिते । एकेन विकलः काणो द्वाभ्यामन्ध प्रकीर्त्तित इति । अज्ञात्वापीति । यथा पदन्यास स्थानमतिक्रम्य शीघ्रं परतः पदन्यासेन गतिर्धावनं, तद्वत्रापि किञ्चित् किञ्चिदतिक्रम्य अतिशीघ्रानुष्ठानं धावनम् तथानुतिष्ठन्नपि न स्खलेत् न प्रत्यवायी स्यात् । तथा न पतेत्, फलात् न भ्रश्येत् । ब्राह्मणादीना मुक्तानपिधर्मान् कांश्चिदकुर्वाणो भागवतान् धर्मान् श्रवण कीर्त्तनादीन् कुर्वाणस्तत्फलं प्राप्नुयादित्यर्थः ॥

भागवत धर्म में विश्वास स्थापन करने से मनुष्य मात्र किसी भी विघ्न से अभिभूत नहीं होते । भागवद्धर्म मार्ग में क्रम उल्लङ्घन करके एवं श्रुति ज्ञान स्मृति ज्ञान रूप नयन युगल को आवृत करके चलने पर भी स्खलन वा पतन नहीं होता है । कामना द्वारा भजन करने पर काम्य विषय लाभ तो होता ही है, जिस विषय में कामना करनी भी नहीं आती है, उस प्रेम सम्पत्ति को भी प्राप्त करता है । इस विषय में भा० ५।१९।२७ में उक्त है—

"सत्यं दिशत्यर्थितमर्थितो नृणाम् ।
नैवार्थदो यत् पुनरर्थितोयतः ।
स्वयं विधत्ते भजतामनिच्छता
मिच्छापिधानं निजपादपल्लवम् ।"

परम करुण श्रीभगवान्, सकाम मानवगण कर्त्तृक प्रार्थित होकर, सत्य ही प्रार्थित विषय प्रदान करते हैं । किन्तु काम्य विषय दान करके श्रीभगवान् मन मन में सोचते रहते हैं—यह है अतिमूर्ख, भूरि कार्य्य करके तुच्छ फल ग्रहण किया है, कारण, मन, मुझ को अर्पण करके भी मन. संयोग रूप वैषयिक सुखाभिलाषी हुआ, जो भी हो, मैं तो विज्ञ हूँ । अर्थात् फल का परिणाम जानता हूँ । अतएव पुनर्वार प्रार्थी इस को न होना पड़े—इस प्रकार ही वस्तु प्रदान करना कर्त्तव्य है । यह सोचकर प्रभु जिस विवर से विषय भोग वासना का उद्गम होता है, उस हृदय विवर में निज पद पल्लवस्थापन करेंगे, जिस से विषय वासना के प्रति तुच्छ बुद्धि होगी । इस प्रकार निज चरण माधुर्य्यास्वादन प्रदान कर परम करुण प्रभु सकाम भक्त को भी कृतार्थ करते हैं । तात्पर्य्य यह है कि—कामना प्रेरित होकर भगवद् भजन करने पर भी प्रभु वाञ्छातिरिक्त फल दान कर कृतार्थ करते हैं । जैसे नाभि महाराज—भजन प्रभाव से श्रीऋषभदेव नामक श्रीभगवान् को पुत्र रूप में प्राप्त किये थे । श्रीगीता में भी उक्त है—(२।४०)

देवाः श्रीमदजितम् ॥

२१९--२२१। तदेव कर्म्मार्पणमुपपादयति त्रिभिः (भा० १।५।३२)—

(२१९) "एतत् संसूचितं ब्रह्मंस्तापत्रयचिकित्सितम्।
यदीश्वरे भगवति कर्म ब्रह्मणि भावितम् ॥"६४४॥

ब्रह्मन् हे वेदव्यास ! एतत् तापत्रयस्य चिकित्सितं चिकित्सा तैश्चातुर्म्मास्यवासिभिः परमहंसैः सूचितम्। किन्तत् ? भगवति कर्म्म यत् समर्पितं भवति। तत्र कर्म्मसमर्पणमेवेत्यर्थः। कथम्भूते ? स्वयं भगवति पूर्णस्वरूपैश्वर्य्यादिमत्तया सर्वांशिन्येव, केनचिदंशेन जीवादि-नियन्तृतया ईश्वरे परमात्म-शब्दवाच्ये, स्वरूपभूतविशेषेण विना केवलचिन्मात्रतया प्रतिपाद्यत्वेन ब्रह्मणि तच्छब्दवाच्ये। ननु उत्पत्त्यैव तत्तत्सङ्कल्पेन विहितत्वात् संसारहेतोः कर्म्मणः कथं तापत्रयनिवर्त्तकत्वम् ? उच्यते— सामग्रीभेदेन घटत इति, यथा (भा० १।५।३३)

(२२०) "आमयो यश्च भूतानां जायते येन सुव्रत।
तदेव ह्यामयं द्रव्यं न पुनाति चिकित्सितम् ॥"६४५॥

---

"नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते।
स्वल्प मप्यस्य धर्मस्य त्रायतेमहतोभयात् ॥"६४३॥

निष्काम भक्ति योग प्रारम्भ होने पर विनष्ट नहीं होता है एवं निष्काम भक्ति योग में विघ्न की सम्भावना भी नहीं है। भागवत धर्म का स्वल्प मात्र अनुष्ठान महाभय रूप संसार से परित्राण करता है। देवतागण श्रीमद् अजित को कहे थे ॥२१८॥

२१९-२२१। कर्मार्पण प्रकार का प्रतिपादन तीन श्लोकों के द्वारा करते हैं। भा० १।५।३२

(२१९) "एतत् संसूचितं ब्रह्मंस्तापत्रयचिकित्सितम्।
यदीश्वरे भगवति कर्म ब्रह्मणि भावितम् ॥"६४४॥

ब्रह्मन् ! हे वेदव्यास ! आध्यात्मिक, आधिदैविक एवं आधिभौतिक–तापत्रय की सुचिकित्साको चातुर्म्मास्य वासी परम हंसगण सूचित किये थे। उस को कहते हैं— श्रीभगवान् में जो कर्म अर्पित होता है, वह कर्म समर्पण ही भवरोग की सुचिकित्सा है। भगवान् किस प्रकार हैं, उस वृत्तान्त को कहते हैं। स्वयं भगवान् है। स्वरूप भूत ऐश्वर्य्य प्रभृति द्वारा परिपूर्ण होने के कारण जो सब के अंशी हैं। उन भगवान् को कर्मार्पण करना कर्त्तव्य है। जो श्री भगवान् अंश के द्वारा जीव प्रकृति नियन्ता होने के कारण ईश्वर हैं, अर्थात् परमात्म शब्द वाच्य है। स्वरूप भूत विशेष की अभिव्यक्ति न होने के कारण चिन्मात्र सत्ता रूप में प्रति पादित होते हैं, अतः ब्रह्म संज्ञा से अभिहित होते हैं। उन स्वयं भगवान् को कर्मार्पण करने से भवरोग की सुचिकित्सा होती है। इस अभिप्राय से ही मूल श्लोक में ईश्वर, भगवान्, एवं ब्रह्म, पदत्रय का उल्लेख किया गया है।

प्रश्न हो सकता है कि– देह दैहिक सुख संकल्प से ही काम्य कर्म्म की उत्पत्ति होती है। सङ्कल्प व्यतीत काम्य कर्म्म करने की प्रवृत्ति ही नहीं होती है। वही संसार के हेतु है। अतः संसार के हेतु रूप काम्य कर्म कैसे तापत्रय निवृत्ति के प्रति हेतु हो सकता है ? उत्तर में कहते हैं– सामग्री भेद से सम्भव पर हो सकता है। भा० १।५।३३ में उक्त है—

य आमयो रोगो येन घृतादिना जायते, तदेव केवलमामयकारणं द्रव्यं तमामयं न निवर्त्तयति, किन्तु चिकित्सितं द्रव्यान्तरैर्भावितं तत् निवर्त्तयत्येव। (भा० १।५।३४)—

(२२१) "एवं नृणां क्रियायोगाः सर्वे संसृतिहेतवः।
त एवात्मविनाशाय कल्पन्ते कल्पिताः परे ॥"६४६॥

परे भगवति कल्पिताः कामनयाप्यर्पिताः सन्तः संसारध्वंसपर्य्यन्तफलत्वात् आत्मविनाशाय धर्म्मनिवृत्तये कल्पन्ते ॥ श्रीनारदो श्रीवेदव्यासम् ॥

२२२। किञ्च, कर्म्मफलं वस्तुतो भगवदाश्रयमेव, तत्तु दुर्बुद्धेरात्मसात्कुर्वतो युक्त्यैव तुच्छफल-प्राप्तिः संसारश्च, सुधियस्तु तत्सात्कुर्वत स्तद्वैपरीत्यमित्याह गद्याभ्याम् (भा० ५।७।६) —

(२२२) "संप्रचरत्सु नानायोगेषु विरचिताङ्गक्रियेष्वपूर्वं यत्तत् क्रियाफलं धर्म्माख्यं

---

(२२०) "आमयो यश्च भूतानां जायते येन सुव्रत।
तदेव ह्यामयं द्रव्यं न पुनाति चिकित्सितम् ॥"६४५॥

श्रीदेवर्षि नारद—श्रीकृष्णद्वैपाय व्यासन देव को कहे थे। घृतादि सेवन से व्याधि की उत्पत्ति होती है, व्याधि के कारण घृतादि द्रव्य व्याधि से निवृत्त करने में सक्षम नहीं हैं। किन्तु घृतादि द्रव्य यदि चिकित् सित होता है, अर्थात् द्रव्यान्तर के द्वारा शोधित होता है तो वह व्याधि के कारण घृतादि द्रव्य ही व्याधि को विनष्ट करने में सक्षम हैं। इस प्रकार ही भा० १।५।३४ में उक्त है—

(२२१) "एवं नृणां क्रियायोगाः सर्वे संसृतिहेतवः।
त एवात्मविनाशाय कल्पन्ते कल्पिताः परे ॥"६४६

हे कृष्णद्वैपायन ! इस प्रकार मानव वृन्द कर्त्तृक अनुष्ठित जो सर्वक्रिया योग संसार के हेतु हैं, यह सब क्रियायोग यदि कामना से भी भगवान् में अर्पित होता है तो, संसार ध्वंस पर्य्यन्त फल प्रद होने के कारण—आत्मविनाश हेतु अर्थात् धर्म निवृत्ति के निमित्त हो होता है।

श्रीनारद श्रीवेदव्यास को कहे थे ॥२१९-२२१॥

२२२। और भी विशेष ज्ञातव्य यह है कि—कर्म्म फल वस्तुत भगवदाश्रित ही है। कर्म्म फल के प्रति जीव का कोई अधिकार नहीं है। श्रीभगवद् गीता में उसका वर्णन है—"कर्म्मण्येवाधिकारस्ते मा फलेषु कदाचन"। हे अर्ज्जुन ! तुम्हारा अधिकार कर्म में ही है, फल में अधिकार नहीं है। उस कर्म फल को दुर्बुद्धि परायण मानव, आत्मसात् करके स्वयं भोग करता है, अतः तुच्छ फल भोग एवं दुरन्त सन्ताप युक्त ससार भोग होता है। जिस का जिस में अधिकार नहीं है, उस वस्तु को भोग करने से अथवा उस को भोग करने का सङ्कल्प करने पर दुर्भोग उपस्थित हाना स्वाभाविक है। सुधीवृन्द किन्तु साक्षात् श्रीभगवान् को समर्पण करके ही कर्म्म करते हैं, अतः कर्म फल का वैपरीत्य--अर्थात् परमा शान्ति प्राप्त करते हैं एवं संसार बन्धन से भी मुक्त हो जाते हैं। इस अभिप्राय का वर्णन श्रीशुक देवने भा० ५।७।६ के गद्यद्वय के द्वारा किया है—

(२२२) "संप्रचरत्सु नानायोगेषु विरचिताङ्गक्रियेष्वपूर्वं यत्तत् क्रियाफलं धर्म्माख्यं परे ब्रह्मणि यज्ञपुरुषे सर्वदेवतालिङ्गानां मन्त्राणामर्थनियामकतया साक्षात् कर्त्तरि परदेवतायां भगवति वासुदेव एव

परे ब्रह्मणि यज्ञपुरुषे सर्वदेवतालिङ्गानां मन्त्राणामर्थनियामकतया साक्षात् कर्त्तरि परदेवतायां भगवति वासुदेव एव भावयमान आत्मनैपुण्य-मृदितकषायो हविःष्वध्वर्यु भिर्गृह्यमाणेष स यजमानो यज्ञभाजो देवांस्तान् पुरुषावयवेष्वभ्यध्यायत् । इति ।

टीका च—"सम्प्रचरत्सु प्रवर्त्तमानेषु नानायोगेषु विरचिता अनुष्ठिता अङ्गक्रिया येषु तेषु यत् अपूर्व्वं तद्वासुदेव एव भावयमानः सञ्चिन्तयन् स यजमानो यज्ञभागभाजो ये देवाः सूर्य्यादयस्तान् पुरुषस्य वासुदेवस्य अवयवेषु चक्षुरादिषु अभ्यध्यायत्, न तु तत् पृथकृत्वेनेत्यन्वयः । अपूर्व्वे पक्षद्वयं मीमांसकानाम् । तदिदानीमेव सूक्ष्मत्वेनोत्पन्नं फलमेवापूर्वं कालान्तरे फलोत्पादिका कर्मशक्तिर्वेति । तदुक्तम्—

"यागादेव फलं तद्धि शक्तिद्वारेण सिध्यति । सूक्ष्मशक्त्यात्मकं वापि फलमेवोपजायते ॥"६४७॥ इति ।

तदेतदाह—क्रियाफलं धर्म्माख्यमिति च । ननु यद्यङ्गं देवता कर्म प्रधानमिति मतम्, तर्हि कर्त्तृ निष्ठमपूर्वं स्यात्, तदुक्तम्—

"कर्मभ्यः प्रागयोग्यस्य कर्मणः पुरुषस्य वा । योग्यता शास्त्रगम्या या परा सापूर्वमिष्यते ॥"६४८॥ इति ।

---

भावयमान आत्मनैपुण्य-मृदितकषायो हविःष्वध्वर्यु भिर्गृह्यमाणेषु स यजमानो यज्ञभाजो देवांस्तान् पुरुषावयवेष्वभ्यध्यायत् । इति ।

श्रीधर स्वामिपाद कृत टीका का अर्थ यह है – भरत—जो सब यज्ञ प्रवर्त्तन किये थे, एवं यह सब यज्ञ की अङ्ग क्रिया का ध्यान करते थे, उस से जो अपूर्व्व उत्पन्न होता, अर्थात् फलोत्पन्न होता था—उस की भावना श्रीवासुदेव में ही करते थे । यजमान भरत,—यज्ञ के भागग्राही जो सूर्य्य प्रभृति देवता होते हैं, उन देवता समूह का भी ध्यान परमपुरुष वासुदेव के चक्षु प्रभृति अवयव में ही करते थे । श्रीवासुदेव से पृथक् रूप में सूर्य्यादि देववृन्द की भावना नहीं करते थे । कर्म मीमांसक के मत में अपूर्व अर्थात् कर्म फल पक्ष द्वय के अवलम्बन से प्रकाशित होता है । अपूर्व का वृत्तान्त कहते हैं । सूक्ष्म रूप में उत्पन्न कर्म फल ही अपूर्व है, अथवा कालान्तर में फलोत्पादिका कर्म शक्ति ही अपूर्व है । तज्जन्य कथित है—यज्ञ से जो फल उत्पन्न होता है, वह फलोत्पत्ति भी कर्म शक्ति के द्वारा ही सिद्ध होती है । अथवा सूक्ष्म शक्त्यात्मक फल ही उत्पन्न होता है—सप्रमाण उसका वर्णन करते हैं ।

"यागादेव फलं तद्धि शक्तिद्वारेण सिध्यति ।
सूक्ष्मशक्त्यात्मकं वापि फलमेवोपजायते ॥"६४७॥ इति ।

वर्णित है—क्रिया जनित फल का ही अपर नाम धर्म है । प्रश्न होता है कि,—यदि कर्म का अङ्ग देवता हो एवं कर्म प्रधान हो तो, अपूर्व अर्थात् फल,—कर्त्तृ निष्ठ हो जाता है । उस के विषय में कथित है-

"कर्मभ्यः प्रागयोग्यस्य कर्मणः पुरुषस्य वा ।
योग्यता शास्त्रगम्या या परा सापूर्वमिष्यते ॥"६४८॥

यहाँ विचार यह है कि – यज्ञ में देवता का ही प्राधान्य है,— किन्तु कर्म्म—देवताराधन के निमित्त ही अनुष्ठित होता है । ऐसा होने पर देवता आराधन के उद्देश्य में प्रवृत्त कर्म का तात्पर्य्य देवता प्रसन्नता में ही है, अत फल भी देवताश्रय होना आवश्यक है । कर्मानुष्ठान के पहले अयोग अर्थात् प्रोक्षणादि अपूर्व का ही व्रीहि प्रभृति का आश्रयत्व है । अतएव कैसे भरत, अपूर्व अर्थात् क्रिया फल की भावना वासुदेवाश्रय

अथ देवताप्रधानं कर्म तु देवताराधनार्थम्। तदा देवताप्रसादरूपत्वादपूर्वस्य देवताश्रयत्वमेवयुक्तम्। कर्मभ्यः प्रागयोग्यस्य प्रोक्षणाद्यपूर्वस्येव वीह्य द्याश्रयत्वम्। कुतो वासुदेवाश्रयमपूर्वं भावयति ? उच्यते—यदि कर्त्तृ निष्ठमपूर्वं स्यात्, तर्हि वासुदेवस्यान्तर्यामिणः प्रवर्त्तकत्वेन मुख्यकर्त्तृत्वात् तदाश्रयमेवापूर्वम्, न तु तत्प्रयोज्ययजमानाश्रयम्—'शास्त्रफलं प्रयोक्तरि' इति न्यायात्, अन्यथा ऋत्विजामप्यपूर्वाश्रयत्वप्रसङ्गात्। तदेतदाह--साक्षात् कर्त्तरीति। देवताश्रयत्वेऽपि वासुदेवाश्रयत्वमेवेत्याह---परदेवतायामिति। परदेवतात्वे हेतुः--सर्वदेवता--लिङ्गानां तत्तद्देवताप्रकाशकानां मन्त्राणां ये अर्था इन्द्रादि देवतास्तेषां नियामकतया तस्यैव प्रसादनीयत्वात् फलदातृत्वाच्च युक्तमेवापूर्वाश्रयत्वमित्यर्थः। एवं भावनमेवात्मनो नैपुण्यं कौशलं तेन मृदिताः क्षीणाः कषाया रागादयो यस्य। अध्वर्युभिरिति बहुवचनं नाना--कर्माभिप्रायेण" इत्येषा। अत्र श्रीविष्णोरङ्गित्वे प्राप्ते यज्ञाङ्गत्वेन तद्भजनञ्च दोष इति

---

रूप में करते थे ? उत्तर में कहते हैं—यदि क्रिया फल कर्त्तृ निष्ठ होता है, तो वासुदेव ही अन्तर्य्यामी रूप में कर्म्म का प्रवर्त्तक हैं, अर्थात् कर्म करने की प्रवृत्ति प्रदान करते हैं, अतः वासुदेव ही मुख्य कर्त्ता हैं, अतएव वासुदेवाश्रय क्रिया फल है किन्तु वासुदेव कर्त्तृक प्रयोज्य यजमान क्रिया फल का आश्रय नहीं हो सकता है। "शास्त्र फलं प्रयोक्तरि" अर्थात् शास्त्रका फल प्रयोक्ता में उपपन्न होता है। अर्थात् प्रयोजक कर्त्तानिष्ठ होता है।

ऐसा न होने पर क्रिया फल पुरोहित निष्ठ भी होने लगेगा। कारण, यह सब भी यज्ञादि कर्म्म करते रहते हैं। सुतरां यज्ञ जनित फल भागी यह सब क्यों नहीं होंगे ? इस अभिप्राय से ही मूल गद्य में लिखित है—"कर्त्तरि" अर्थात् साक्षात् कर्त्ता श्रीभगवान् में ही कर्म फल की भावना करते थे। वासुदेव सर्व नियन्ता होने के कारण ही साक्षात् कर्त्ता हैं। मीमांसक गण कहते हैं – क्रियाफल कर्त्तृ निष्ठ एवं देवता निष्ठ है। एतदुभय पक्ष के मध्य में कर्त्तृ निष्ठ क्रिया फल विचार में मुख्य कर्त्ता श्रीवासुदेव रूप में ही क्रिया फल का निर्णय हुआ है। "देवतानिष्ठ क्रिया फल" पक्ष में विचार प्रस्तुत करते हैं। देवतानिष्ठ क्रियाफल' पक्ष के विचार में भी क्रिया फल वासुदेव निष्ठ ही होता है। इस अभिप्राय से ही मूल गद्य में 'परदेवतायां' पदोल्लेख है। श्रीवासु देव ही परदेवता हैं। वासुदेव ही जो परदेवता हैं—इस में हेतु निर्द्देश करते हैं। "सर्व देवतालिङ्गानां मन्त्राणामर्थ नियामकतया" अर्थात् श्रीवासुदेव ही समस्त देवता का प्रकाशक है, इन्द्रादि देवतावृन्द का नियामक श्रीवासुदेव ही हैं, अतः उनकी प्रसन्नता सम्पादन कहना परम कर्त्तव्य हैं। अर्थात् सर्व देवता नियामक श्रीवासुदेव प्रसन्न होने से नियम्य इन्द्रादि देवगण स्वतः ही प्रसन्न होते हैं, अतएव श्रीवासुदेव को प्रसन्न करना कर्त्तव्य है। जब श्रीवासुदेव ही सर्वदेवता का नियामक हैं, तब "देवताश्रय अपूर्व" मीमांसक के द्वितीय मत में भी क्रिया फल श्रीवासुदेव निष्ठ ही होता है। कारण, नियामक तत्त्व की प्रसन्नता से नियम्य तत्त्व की प्रसन्नता स्वाभाविकी है। विशेषतः श्रीवासुदेव ही निखिल कर्म फल प्रदाता है। तज्जन्य कर्म्म जन्य फल वा अपूर्व, इस प्रकार भावना करना ही कर्म कर्त्ता का कर्मानुष्ठान नैपुण्य है। कारण, इस प्रकार वासुदेव में कर्म फल भावना करके कर्मानुष्ठान करने पर हृदय से रागद्वेष अनभिनिवेश प्रभृति दोष विदूरित होते हैं। मूल गद्य में "अध्वर्युभिः" पद में बहु वचन का प्रयोग—विभिन्न कर्म्मानुष्ठान का सूचक है। यहाँ पर स्वामि पादने श्रीविष्णु को अङ्गी रूप में निर्द्देश किया है। अतएव यज्ञाङ्ग रूप में श्रीवासुदेव का भजन करना अतीव दोषावह है। इस विषय में पद्मपुराण

लभ्यते । अत्र पाद्मोत्तरखण्डे यथा—

"उद्दिश्य देवता एव जुहोति च ददाति च । स पाषण्डीति विज्ञेयः स्वतन्त्रो वापि कर्मसु ॥"६४९॥ इति ।

पाषण्डित्वमत्र वैष्णवमार्गाद्भ्रष्टत्वमित्यर्थः, श्रीगीतासु च (९।२३--२४)

"येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥६५०॥
अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्चयवन्ति ते ॥"६५१॥ इति ।

अतो वास्तवविचारे सर्व एव वेदमार्गाः श्रीभगवत्येव पर्य्यवस्यन्तीति अभिप्रेत्योक्तं श्रीमदक्रूरेण (भा० १०.४०।९-१०)—

"सर्व एव यजन्ति त्वां सर्वदेवमयेश्वरम् ।
येऽप्यन्य देवताभक्ता यद्यप्यन्यधियः प्रभो ॥६५२॥
यथाद्रिप्रभवा नद्यः पर्जन्यापूरिता विभो ।

---

के उत्तर खण्ड में लिखित है—

"उद्दिश्य देवता एव जुहोति च ददाति च ।
स पाषण्डीति विज्ञेयः स्वतन्त्रो वापि कर्म्मसु ॥"६४९।

जो व्यक्ति देवता को उद्देश्य करके आहुति प्रदान करता है, अथवा दान करता है, उस को पाषण्डी जानना चाहिये । अथवा जो व्यक्ति, कर्मानुष्ठान में अपने को स्वाधीन मानता है, वह पाषण्डी है । यहाँ पाषण्डी शब्द का अर्थ है—वैष्णव मार्ग से भ्रष्ट होना है । श्रीभगवद् गीता में भी उक्त है-(९।२३--२४)

"येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥६५०॥
अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥"६५१॥ इति ।

जो अन्य देवता के भक्त होकर श्रद्धा पूर्वक उन उन देवता की आराधना करते हैं, हे कौन्तेय ! वे मेरी आराधना ही करते हैं, किन्तु अविधि पूर्वक करते हैं । अन्य देवता की आराधक कैसे मेरी आराधना करता है, उसको कहते हैं—"अहं हि सर्व यज्ञानां" मैं ही समस्त यज्ञों का भोक्ता हूँ, एवं प्रभु हूँ-अर्थात् नियामक एवं फल दाता हूँ । जो तत्वतः मुझ को नहीं जानते हैं, वे ही वैष्णव मार्ग से भ्रष्ट हैं । वस्तुतः शास्त्र विचार से प्रतिपन्न होता है कि समस्त शास्त्रों का पर्य्यवसान श्रीभगवान् में ही है । श्रीभगवद् गीता में उक्त है—"वेदैश्च सर्वैरहमेववेद्यः" हे अर्जुन ! समस्त वेदों में मैं ही वेद्य हूँ । यह सब प्रमाणों सुस्पष्ट प्रतिपन्न होता है कि—स्व रूपैश्वर्य्य माधुर्य्य पूर्ण भगवान् श्रीकृष्ण को समझाने के निमित्त ही समस्त वेद प्रवृत्त हुए हैं । इस अभिप्राय से ही भा० १०।४०।९--१० में श्रीअक्रूरने भी कहा है—

"सर्व एव यजन्ति त्वां सर्वदेवमयेश्वरम् ।
येऽप्यन्य देवताभक्ता यद्यप्यन्यधियः प्रभो ॥६५२॥
यथाद्रिप्रभवा नद्यः पर्जन्यापूरिता विभो ।

विशन्ति सर्वतः सिन्धुं तद्वत्त्वां गतयोऽन्ततः ॥६५३॥

गतयो मार्गाः, अन्ततो विचारपर्य्यवसानेन ॥

२२३। अथ द्वितीयं गद्यम् (भा० ५।७।७) —

(२२३) "एवं कर्म्मविशुद्धया विशुद्धसत्त्वस्यान्तर्हृदयाकाश-शरीरे ब्रह्मणि भगवति वासुदेवे महापुरुषरूपोपलक्षणे श्रीवत्सकौस्तुभ-वनमालारिदरगदादिभिरुपलक्षिते निजपुरुष-हृल्लिखितेनात्मनि पुरुषरूपेण विरोचमान उच्चैस्तरां भक्तिरनुदिनमेधमानरयाजायत" इति।

एवं पूर्व्वोक्तप्रकारेण कर्म्मविशुद्धया विशुद्धसत्त्वस्य भक्तिः सश्रद्ध-श्रवण-कीर्त्तनादिलक्षणा अजायतेत्यन्वयः क्वचिद्भगवति वासुदेवे पूर्णस्वरूपभगाभ्यां सर्वनिवासेन च तन्नाम्ना प्रसिद्धे

---

विशन्ति सर्वतः सिन्धुं तद्वत्त्वां गतयोऽन्ततः ॥"६५३॥

हे प्रभो ! सकल व्यक्ति ही आप की उपासना करते रहते हैं। जो, अन्य देवता के भक्त हैं, यद्यपि वे सब अन्य देवता में आसक्त चित्त हैं, तथापि आप की ही पूजा करते हैं। कारणः आप सर्वदेवमयेश्वर हैं। जिस प्रकार पर्वत से उद्भूत नदी समूह मेघ जल से पूर्ण होकर विभिन्न पथ के द्वारा समूद्र में प्रविष्ट होती हैं, उस प्रकार समस्त वेद, विचार पूर्वक आप में पर्य्यवसित होते हैं। अर्थात् आप को ही प्रतिपादन करने में प्रवृत्त हुए हैं। गतयः—शब्द का अर्थ मार्ग समूह हैं। अन्ततः—शब्द का अर्थ—विचार पर्य्यवसान के द्वारा ॥२२२॥

२२३। भा० ५।७।७ के पूर्वोक्त द्वितीयगद्य यह है।

(२२३) 'एवं कर्म्म विशुद्धया विशुद्ध सत्त्वस्य भक्तिः सश्रद्ध श्रवणकीर्त्तनादि लक्षणा अजायतेत्यन्वयः क्वचिद् भगवति वासुदेवे पूर्णस्वरूपभगाभ्यां सर्वनिवासेन च तन्नाम्ना प्रसिद्धे अन्तर्हृदये य आकाशः स एव शरीरं स्वस्यैवाविर्भाव विशेषाधिष्ठानं यस्य तस्मिन्नन्तर्यामिणि परमात्माख्ये, ब्रह्मणि निर्विशेषतया विर्भावात् तदाख्ये च भगवतो निराकारत्वं वारयति, महापुरुषस्य यद्रूपं शास्त्रे श्रूयते, तद्रूपं लक्ष्यते दृश्यते तत्र तस्मिन्। किञ्च, श्रीवत्सादिभिरपिचिह्निते। एधमानरया वर्द्धमान प्रकर्षा।

टीका—एवम्भूतया कर्म्मविशुद्धया विशुद्धसत्त्वस्य भक्तिरजायतेत्यनुषङ्गः। क्व? अन्तर्हृदये य आकाशः स एव शरीरमभिव्यक्तिस्थानं यस्य तस्मिन् ब्रह्मणि। कीदृशे? महापुरुषस्य उपलक्षणमाकारो यस्य तस्मिन्। किञ्च श्रीवत्सादिभिरुपलक्षिते निजपुरुषाणां नारदादीनां हृदि लिखितवन्निश्चलतया स्थितेन उक्तेन पुरुषरूपेण आत्मनि स्व मनसि विरोचमाने! कीदृशी भक्तिः? अत्यन्तातिशयेन एधमानो रयो वेग प्रकर्षो यस्याः ॥

पूर्व वर्णित रीति से श्रीभगवान् में अर्पित होने के कारण, जो कर्म्म—विशुद्ध होता है। अर्थात् जिस प्रकार पहले कहा गया है, कि—जिस धृतादि द्रव्य से व्याधि उत्पन्न होती है, उस घृतादि द्रव्य को द्रव्यान्तर की भावना के द्वारा शोधित करके सेवन करने से व्याधिविदूरित होती है। उस प्रकार जो कर्म्म जीव को संसार में आवद्ध करता है, उस कर्म्म श्रीभगवान् में अर्पित होने पर विशुद्ध होता है, एवं उस से चित्त शुद्ध होता है। उस विशुद्ध चित्त मानव के हृदय में श्रद्धा युक्त श्रवण कीर्त्तनादि लक्षणा भक्ति का आविर्भाव भगवान् वासुदेव में होता है। जो स्वरूप, गुण से सर्वथा परिपूर्ण होने के कारण, एवं निखिल पाप-नरक निरसन कारी होने के कारण वासुदेव नाम से विख्यात हैं। जो, अन्तर्हृदय में जो आकाश

अन्तर्हृदये य आकाशः स एव शरीरं स्वस्यैवाविर्भावविशेषाधिष्ठानं यस्य तस्मिन्नन्तर्यामिणि परमात्माख्ये, ब्रह्मणि निर्विशेषतयाविर्भावात् तदाख्ये च भगवतो निराकारत्वं वारयति, महापुरुषस्य यद्रूपं शास्त्रे श्रूयते, तदुपलक्ष्यते दृश्यते यत्र तस्मिन् । किञ्च, श्रीवत्सादिभिरपि चिह्निते । एधमानरया वर्द्धमानप्रकर्षा ।। श्रीशुकः ।।

२२४ । तदेतत् कर्मार्पणं द्विविधम्,–भगवत्प्रीणनरूपं तस्मिंस्तत्त्यागरूपञ्चेति, यथोक्तं कौर्म्ये—

"प्रीणातु भगवानीशः कर्मणानेन शाश्वतः । करोति सततं बुद्धया ब्रह्मार्पणमिदं परम् ।।६५४।।
यद्वा फलानां सन्न्यासं प्रकुर्य्यात् परमेश्वरे । कर्मणामेतदप्याहुर्ब्रह्मार्पणमनुत्तमम् ।।६५५।। इति ।

अत्र निमित्तानि च त्रीणि,–कामना, नैष्कर्म्यम्, भक्तिमात्रञ्चेति । निष्कामत्वन्तु केवलं न सम्भवति,– "यद् यद्धि कुरुते जन्तुस्तत्तत् कामस्य चेष्टितम्" इत्युक्तेः । अत्र च कामना-

---

विद्यमान है, वह आकाश ही जिन श्रीभगवान् के आविर्भाव विशेष का शरीर है, अर्थात् अधिष्ठान स्वरूप है। उस परमात्म संज्ञक अन्तर्य्यामि स्वरूप में एवं निर्विशेष रूप में आविर्भूत होने के कारण, जिन की चिन्मात्रसत्ता ब्रह्म नाम से विख्यात है, उन वासुदेव स्वरूप में कर्म्म फल समर्पण के द्वारा अधिकतर भक्ति का आविर्भाव होता है। श्रीभगवान् का निराकारत्व निवारक विशेषण--"महापुरुषोपलक्षणे" है, अर्थात शास्त्र में महापुरुष का जो लक्षण वर्णित है, वह रूप जिस भगवत् स्वरूप में दृष्ट होता है, उस रूप का विशेष परिचय प्रदान करते हैं। श्रीवत्स, कौस्तुभ, शङ्ख, चक्र, गदा प्रभृति के द्वारा उपलक्षित अर्थात् चिह्नित हैं। और भी एक विशेषण है—"हृल्लिखितेन आत्मणि पुरुषरूपेण विरोचमाने" अर्थात् निज भक्त जन के हृदय में अङ्कित पुरुष रूप में सुशोभित हैं। उक्त गद्य का निष्कर्ष यह है - विशुद्ध कर्मानुष्ठान के द्वारा विशुद्ध चित्त भक्त के हृदय में श्रीभगवान् की श्रद्धा युक्त श्रवण कीर्त्तनादि लक्षणा भक्ति प्रत्यह वेगवती होकर प्रकाशिता होती है। जो श्रीभगवान् निर्विशेष स्वरूप में आविर्भूत होकर ब्रह्म संज्ञा प्राप्त करते हैं, एवं जीव—प्रकृति के नियामक रूप में परमात्म संज्ञा प्राप्त करते हैं, जो भक्त हृदय में उत्कीर्ण चित्त के समान शोभित होते हैं, जो श्रीभगवान् श्रीवत्स, कौस्तुभ चक्र, शङ्ख, गदा प्रभृति भूषण एवं चिह्न से चिह्नित हैं, उन वासुदेव संज्ञक भगवान् में भक्ति होती है।

प्रवक्ता श्रीशुक हैं—।।२२३।।

२२४। पूर्वोक्त कर्म्मार्पण द्विविध हैं। (१) भगवत् प्रीणन रूप, एवं (२) भगवत् अर्पणरूप। कूर्म्म पुराण में उक्त है—

"प्रीणातु भगवानीशः कर्मणानेन शाश्वतः। करोति सततं बुद्धया ब्रह्मार्पणमिदं परम् ।।६५४।।
यद्वा फलानां सन्न्यासं प्रकुर्य्यात् परमेश्वरे। कर्मणामेतदप्याहुर्ब्रह्मार्पणमनुत्तमम् ।।" ६५५।। इति ।

अर्थात् परमेश्वर भगवान् इस कर्म्म के द्वारा सन्तुष्ट हों, इस बुद्धि से जो कर्म्म करता है, वह श्रेष्ठ कर्म्मार्पण है।

अथवा, जो परमेश्वर में समस्त कर्म्म फल अर्पण करता है, यह कर्म्मफल समर्पण श्रेष्ठ ब्रह्मार्पण है। उस कर्म्मार्पण के त्रिविध हेतु हैं। प्रथम—कामनासिद्धि, द्वितीय– नैष्कर्म्य, तृतीय—भक्तिमात्र। केवल निष्काम भाव सम्भव नहीं है। कारण–"यत् यद्धिकुरुते जन्तुस्तत्तत् कामस्य चेष्टितम्" जन्तु अर्थात् जीव समूह जो कुछ करते रहते हैं—यह सभी कामना की चेष्टा के फल हैं। पूर्वोक्त तीन प्रकार निमित्त के मध्य

नैष्कर्म्म्ययो: प्राय: कर्म्मत्याग:, प्रीणनन्तु तदाभास एव, स्वार्थपरत्वात् । भक्तौ पुन: प्रीणनमेव, भक्तेस्तदेक जीवनत्वात् । कामनाप्राप्तिर्यथा (भा० ८।५।४७)—"क्लेशभूर्य्यल्पसाराणि" इत्यादि । यथा चाङ्गस्य राज्ञ: पुरुषार्थके यज्ञे, नैष्कर्म्म्यप्राप्तिश्च (भा० ११।३।४६) —"वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पितमीश्वरे । नैष्कर्म्म्यां लभते सिद्धिम्" इत्यत्र । अथ भक्तिप्राप्तिश्च "एवं कर्म्म-विशुद्धया" इत्यादि-गद्ये दर्शितैव, (भा० १।५।३५)—

"यदत्र क्रियते कर्म्म भगवत्परितोषणम् ।
ज्ञानं यत्तदधीनं हि भक्तियोगसमन्वितम् ॥"६५६॥

इत्यत्र च । भक्तियोगसहचरत्वात् ज्ञानमत्र भगवज्ज्ञानम् । परमभक्तास्तु भगवत्परितोषणं प्रीणनमेव-प्रार्थयन्ते (भा० ४।३०।३९-४०)—

(२२४) "यन्नः स्वधीतं गुरवः प्रसादिता, विप्राश्च वृद्धाश्च सदानुवृत्त्या ।

---

में कामना एवं नैष्कर्म्म्य प्रायश: ही कर्म्मत्याग रूप है, भगवत् प्रीणन इस में आभास मात्र ही है । कारण कामना एवं नैष्कर्म्म्य के मध्य में स्वार्थ परता है, किन्तु भक्ति का पूर्णतात्पर्य्य भगवत् प्रीणन में ही है । कारण, भगवत् सन्तोष ही भक्ति का एकमात्र जीवन है । कामना प्राप्ति तात् पर्य्य में अनुष्ठित कर्म्म समूह के द्वारा फल प्राप्ति प्रायश: विपरीत रूप में होते है । भा० ८।५।४७ में उक्त है—"क्लेशभूर्य्यल्पसाराणि कर्म्माणि विफलानि वा" इस के अनुसार काम्य कर्म्मानुष्ठान द्वारा क्लेश प्रचुर सार अल्प होता है, अर्थात् फल अल्प होता है, अथवा, क्लेश मात्र ही होता है । फल लाभ होता ही नहीं । अथवा, पुत्र प्राप्ति कामना से अङ्ग महाराज द्वारा अनुष्ठित यज्ञ का फल से वेण नामक असत् पुत्रोत्पन्न हुआ था, उस से उत्पन्न उद्वेग तो हुआ ही था, विशेष कर मृत्यु भी हुई थी । इस प्रकार सकाम कर्म्मानुष्ठान के द्वारा प्रायश: फल वैपरीत्य ही होता है । नैष्कर्म्म्य निमित्त कर्म का विवरण भा० ११।३ ४६ में है—

"वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पितमीश्वरे ।
नैष्कर्म्म्यां लभते सिद्धिम् । रोचनार्था फल श्रुति: ॥"

निष्काम भाव से जो कर्म अनुष्ठान करके ईश्वर को समर्पण करता है—वह नैष्कर्म्म्यसिद्धि लाभ करता है । अनन्तर निष्काम भाव से श्रीभगवान् को कर्म अर्पण करके कर्म्म अनुष्ठान करने के कारण, जिस प्रकार भक्ति लाभ होता है, एवं कर्म्म विशुद्धि का विवरण भा० ५।७।७ में कथित हुआ है । भा० १।५।३५ में कथित है—

"यदत्र क्रियते कर्म्म भगवत् परितोषणम् ।
ज्ञान यत्तदधीनं हि भक्तियोगसमन्वितम् ॥"६५६॥

टीका—ननु च ज्ञानेनाज्ञानप्राप्तकर्म्मनाश:, तच्च ज्ञानं भक्ति योगाद् भवति कथं कर्मणा कर्म्मनाश: स्यात् । तत्राह यदत्रेति ॥

अर्थात् भगवत् सन्तोषार्थ जो कर्म अनुष्ठित होता है । उस से भक्ति योग समन्वित भगवत् ज्ञान लाभ होता है । यहाँपर ज्ञान शब्द से भगवद् विषयक ज्ञान को जानना होगा । कारण जो ज्ञान भक्ति योग के सहित मिलित है । वह ब्रह्म विषयक ज्ञान नहीं हो सकता है । अतएव यह ज्ञान भगवद् विषयक है । परम भक्त वृन्द-किन्तु, भगवत् सन्तोष रूप प्रीणन की ही प्रार्थना करते हैं । जिस प्रकार भा० ४।३०।३९-४० में उक्त है—

आर्य्या नताः सुहृदो भ्रातरश्च, सर्वाणि भूतान्यनसूययैव ॥६५७॥
यन्नः सुतप्तं तप एतदीश, निरन्धसां कालमदभ्रमप्सु ।
सर्वं तदेतत् पुरुषस्य भूम्नो, वृणीमहे ते परितोषणाय ॥"६५८॥

अदभ्रं बहुकालं ते तव परितोषणाय भवत्विति वृणीमहे ॥ प्रचेतसः श्रीमदष्टभुजं पुरुषम् ॥ २२५ । तदेवमारोपसिद्धा दर्शिता । अथ सङ्गसिद्धोदाहरणप्राप्ता मिश्रा भक्तिर्दर्श्यते । स्वरूप-सिद्धासङ्गेन ह्यन्येषामपि भक्तित्वं दर्शितम् (भा० ११।३।२२) "तत्र भागवतान् धर्म्मान्" इत्यादि-श्रीप्रबुद्धवाक्य-प्रकरणे सर्व्वासङ्ग-दयामैत्र्यादीनामपि भागवतधर्म्मत्वाभिधानात् । तत्र कर्म्ममिश्रा त्रिविधा सम्भवति,--सकामा, कैवल्यकामा, भक्तिमात्रकामा च । यद्यपि काम-कैवल्ये अपि,—

"या वै साधनसम्पत्तिः पुरुषार्थचतुष्टये । तया विना तदाप्नोति नरो नारायणाश्रयः ॥६५९॥

---

(२२४) "यन्नः स्वधीतं गुरवः प्रसादिता, विप्राश्च वृद्धाश्च सदानुवृत्त्या ।
आर्य्या नताः सुहृदो भ्रातरश्च, सर्वाणि भूतान्यनसूययैव ॥६५७॥
यन्नः सुतप्तं तप एतदीश, निरन्धसां कालमदभ्रमप्सु ।
सर्वं तदेतत् पुरुषस्य भूम्नो, वृणीमहे ते परितोषणाय ॥"६५८॥

हे प्रभो ! हम सबने उत्तम रूप से जो वेदाध्ययन किया, अनुकूल वृत्ति से गुरु, विप्र, एवं वृद्ध ब्राह्मण वृन्द को सन्तुष्ट किया है । मान्य व्यक्ति, सुहृद् जन एवं भ्रातृ वर्ग को जो नमस्कार किया गया है । समस्त प्राणियों के प्रति असूया वर्जन करके सुदीर्घ काल जल के मध्य मे जो तपस्या की है, यह समस्त कर्म आप के सन्तोष के निमित्त हों । हे प्रभो ! आप, परम पुरुष हैं, आप का सन्तोष ही हम सब का प्रार्थनीय है । इस की प्रार्थना ही हम सब करते हैं ।

प्रचेतावृन्द श्रीमदष्टभुज पुरुष को कहे थे ॥२२४॥

२२५ । पूर्व वर्णित रीति से आरोप सिद्धा भक्ति का वर्णन हुआ । अनन्तर सङ्गसिद्धा के उदाहरण मे उपस्थित मिश्राभक्ति का प्रदर्शन करते हैं । स्वरूप सिद्धा भक्ति के सहित कर्म ज्ञानादि का भी भक्तित्व प्रदर्शित हुआ है । अर्थात् यद्यपि कर्म्मज्ञानादि का साधन भक्ति से भिन्न है, तथापि भक्ति के सहित अनुष्ठित होने से उस का भी भक्तित्व सिद्ध होता है। इसका प्रदर्शन भी हुआ है । भा० ११।३।२२ में लिखित है—

"तत्र भागवतान् धर्म्मान् शिक्षेत्" अर्थात् श्रीगुरु चरण के समीप से ही भागवत धर्म की शिक्षा करे, इस प्रकार उपक्रम करके उक्त है—"सर्वतो मनसोऽसङ्गं" अर्थात् सर्वत्र मनकी अनासक्ति की शिक्षा करे। उस के मध्य में सर्वभूत में दया मित्रता प्रभृति का भी भागवत धर्मत्व कथित हुआ है । यद्यपि मनकी अनासक्ति का भूतदया प्रभृति में साक्षाद् भक्ति धर्मत्व नहीं है । अर्थात् जिस साधन के सहित श्रीभगवान् का साक्षात् सम्बन्ध नहीं है । अथच उस से भगवद् भक्ति की सहायता होती है । उस को भी भक्ति शब्द से कहा गया है । जिस प्रकार श्रीहरि कथा श्रवणमें श्रवणेन्द्रिय का साक्षात् सम्बन्ध होता है । कीर्त्तन में भी जिह्वा का साक्षात् सम्बन्ध होता है, तज्जन्य उसे भक्ति कहते हैं । उस प्रकार भूत दया प्रभृति में साक्षाद्रूप से भगवान् का सम्बन्ध न होने के कारण वह भक्ति संज्ञा से अभिहित नहीं होती है । उस के मध्य में कर्म मिश्राभक्ति तीन प्रकार हैं । सकामा, कैवल्य कामा, एवं भक्ति कामा । यद्यपि काम एवं कैवल्य, भक्ति द्वारा ही लभ्य हो सकता है, कारण उक्त है—

इत्युक्तेः केवलयैव भक्त्या सम्भवतः, तथापि तत्तद्वासनानुसारेण तत्र तत्र रुचिर्जायत इत्येवं तत्तदर्थं तन्मिश्रता तु जायत इत्यवगन्तव्यम्। ततः सकामा प्रायः कर्म्ममिश्रैव। तत्र कर्म्म-शब्देन धर्म्म एव गृह्यते। तल्लक्षणञ्च यमदूतैः सामान्यत उक्तम् (भा० ६।१।४०) "वेदप्रणिहितो धर्म्मः" इति, वेदोऽत्र त्रैगुण्य-विषयः, (२।४५) "त्रैगुण्यविषया वेदाः" इति श्रीगीतोक्तेः, तत्प्रवर्त्तनमात्रत्वेन सिद्धः, न तु भक्तिवद-ज्ञानेनापीत्यर्थः। श्रीगीतास्वेवान्यत्र तस्य कर्म्म-संज्ञितत्वञ्चोक्तम् (गी० ८।३)—"भूतभावोद्भवकरो विसर्गः कर्म्मसंज्ञितः" इति विसर्गो देवतोद्देशेन द्रव्यत्यागः, तदुपलक्षितः सर्वोऽपि धर्म्मः कर्म्मसंज्ञित इत्यर्थः। स च भूतानां प्राणिनां ये भावा वासनास्तेषामुद्भवकर इति विशेषणाद्भगवद्भक्तित्वं वृत्तः। अथ भक्तिः सञ्ज्ञाय धर्म्मस्य वैशिष्टचञ्चैकादशे श्रीभगवतोक्तम् (भा० ११।१९।२७) "धर्म्मो मद्भक्तिकृत् प्रोक्तः" इति। भगवदर्पणेन भक्तिपरिकरीकृतत्वेन च भक्तिकृत्त्वमुच्यते। तदेवमीदृशेन कर्म्मणा मिश्रा सकामा भक्तिर्यथा (भा० ३।२२।६—७)—

---

"या वै साधन सम्पत्तिः पुरुषार्थ चतुष्टये।
तया विना तदाप्नोति नरो नारायणाश्रयः।।६५६।

धर्म, अर्थ, काम, मोक्ष,—यह चतुर्विध पुरुषार्थ प्राप्ति हेतु जिस साधन सम्पति की वार्त्ता शास्त्र में कीर्त्तित है, जो मानव एकान्त भाव से श्रीनारायण पदाश्रय करता है। वह उन सब साधन अनुष्ठान न करके भी अनायास उस चतुर्वर्ग फल को प्राप्त करने में सक्षम होता है, तथापि उस उस वासना के अनुसार यदि काम्य कर्म एवं ज्ञान साधन में रुचि उत्पन्न हुई हो तो, इस प्रकार धर्मादि पुरुषार्थ चतुष्टय प्राप्ति के निमित्त कर्म्मादि मिश्रा भक्ति का अनुष्ठान होता है। अतएव सकामा भक्ति प्रायशः कर्म्म मिश्रा ही होती है। जहाँ पर कर्म शब्द का अर्थ धर्म होता है, वहाँ धर्म का लक्षण यम दूत गण की उक्ति से जानना होगा। भा० ६।१।४० में उन्होंने कहा है—"वेद प्रणिहितोधर्म्मः" जो वेद विहित है—वही धर्म है। यहाँ वेद शब्द से त्रैगुण्य विषयक वेद को जानना होगा। कारण गीता २।४५ में उक्त है—"त्रैगुण्य विषया वेदाः" अर्थात् त्रिगुण प्रतिपादक वेद है। इस वेद की आदेश विधि से जो सिद्ध होता है, वही धर्म है। किन्तु, भक्ति के समान अज्ञान से प्रवर्त्तित होने से वह धर्म नहीं होगा। अर्थात् उस को नहीं कहा जा सकता है। भक्ति मार्ग में प्रविष्ट होने के निमित्त रुचि प्रधान कारण हैं, किन्तु बोध प्रधान कारण नहीं है। अज्ञान से भी यदि भक्ति अनुष्ठित होती है तो अनुष्ठान कारी फल लाभ से वञ्चित नहीं होगा। किन्तु धर्म उस प्रकार नहीं है। वेद विधि बांधित होकर अनुष्ठित होने से ही फल लाभ होगा। अन्यथा अनुष्ठान फल प्रदान में असमर्थ होगा। भगवद् गीता के ८।३। में कर्म को धर्म शब्द से कहा गया है। "भूतभावोद्भव करो विसर्गः कर्म संज्ञितः" अर्थात् देवता को उद्देश्य करके द्रव्य त्याग करने का नाम हो विसर्ग है, एवं इस विसर्ग का नाम ही कर्म है। देवता के उद्देश्य में द्रव्य त्याग, एवं "भूतभावोद्भवकर." अर्थात् प्राणि मात्र की वासना का उदगम कारी अर्थात् जिस से वासना का उद्गम होता है, वह कभी भी भगवद् भक्ति नाम से अभिहित हो ही नहीं सकता है। कारण, भगवद् भक्ति का स्वभाव ही है—अन्य समस्त भोग वासना को विनष्ट करके भगवद् विषय मे निविड़ आकाङ्क्षा उत्पन्न करना। धर्म की भक्ति संज्ञा प्राप्ति हेतु वैशिष्टच का कथन श्रीभगवान् भागवत के ११।१९।२७ में किये हैं। "धर्मोमद्भक्तिकृत् प्रोक्तः" अर्थात् मुझ में भक्ति करने का नाम धर्म्म है। श्रीभगवान् में कर्मार्पण के द्वारा भक्ति परिकर करने से उस धर्म को भक्ति कहते

(२२५) "प्रजाः सृजेति भगवान् कर्द्दमो ब्रह्मणोदितः ।
सरस्वत्यां तपस्तेपे सहस्राणां समा दश ॥६६०॥
ततः समाधियुक्तेन क्रियायोगेन कर्द्दमः ।
संप्रपेदे हरिं भक्त्या प्रपन्नवरदाशुषम् ॥"६६१॥

अत्र तद्दर्शनजात--भगवदश्रुपातलिङ्गेन निष्कामस्याप्यस्य ब्रह्मादेशगौरवेणैव कामना ज्ञेया ॥ श्रीमैत्रेयो विदुरम् ॥

२२६ । अथ कैवल्यकामा, क्वचित् कर्म्मज्ञानमिश्रा क्वचिज्ज्ञानमिश्रा च तत्र ज्ञानम् (भा० ११।१९।२७) "ज्ञानञ्चैकात्म्यदर्शनम्" इति दर्शितम् । तदीयश्रवणादीनां वैराग्ययोग--सांख्यानाञ्च तदङ्गत्वात्तदन्तः-पातः । अथ कर्म्मज्ञानमिश्रा यथा (भा० ३।२७।२१-:२३) —

(२२६) "अनिमित्तनिमित्तेन स्वधर्म्मेणामलात्मना ।

---

हैं । ऐसा होने पर कर्म मिश्रा कामा भक्ति की कथा भा० ३।२१।६-७ में वर्णित है ।

(२२५) "प्रजाः सृजेति भगवान् कर्द्दमो ब्रह्मणोदितः ॥
सरस्वत्यां तपस्तेपे सहस्राणां समा दश ॥६६०॥
ततः समाधियुक्तेन क्रियायोगेन कर्द्दमः ।
संप्रपेदे हरिं भक्त्या प्रपन्नवरदाशुषम् ॥"६६१॥

टीका—सहस्राणां समादश—दश सहस्राणि संवत्सराणीत्यर्थः ततस्तस्मिन् तपसि । क्रिया योगेण--पूजा प्रकारेण । सम्प्रपेदे—सिषेवे प्रपन्नेभ्यो भक्तेभ्यो वर दातारम् ॥

ब्रह्मा भगवान् कर्द्दम को कहे थे । तुम प्रजा सृजन करो । इस प्रकार आदिष्ट होकर सरस्वती नदी में दश सहस्र वत्सर, आप तपस्ता किये थे । अनन्तर एकाग्रचित्त से विधि पूर्वक पूजन प्रकार के द्वारा भक्ति पूर्वक प्रपन्न वरद श्रीहरि की सेवा किये थे । इस प्रसङ्ग के अग्रिम ग्रन्थ भा० ३।२१।३८ में वर्णित है—

"यस्मिन् भगवतो नेत्रान्न्यपतन् हर्ष विन्दवः ।
कृपया सम्परीतस्य प्रपन्नेऽर्पितया भृशम् ॥"

जहाँ शरणागत कर्दम ऋषि को देखकर श्रीभगवान् के नेत्र से अश्रुबिन्दु निपतित हुए थे । इस प्रकार उल्लेख से सुस्पष्ट प्रतीत होता हैं कि—कर्दम ऋषि पहले निष्काम भक्त ही थे । किन्तु निज पिता, गुरु, भक्त प्रवर श्रीब्रह्मा की आदेश मर्य्यादा रक्षा हेतु सकाम भाव से भगवदाराधना किये थे । ऐसा न होने से सकाम भक्त दर्शन से श्रीभगवान् के नेत्र युगल से अश्रुपात नहीं होता ।

मैत्रेय विदुर को कहे थे ॥२२५॥

२२६ । अनन्तर कैवल्य कामा भक्ति का प्रदर्शन करते हैं । यह कैवल्य कामा भक्ति, नहीं कर्म ज्ञान मिश्रा कहीं ज्ञान मिश्रा होती है । उस के मध्य में ज्ञान शब्द का अर्थ ऐकात्म्य दर्शन है, जीवात्मा एवं परमात्मा का स्वरूपतः अभेद दर्शन ज्ञान । भा० १२।१९।२७ "ज्ञानञ्चैकात्म्य दर्शनम्" में इस का उल्लेख है । इस का वर्णन पहले हुआ है । उस ज्ञानाङ्ग श्रवण मननादि एवं वैराग्य, योग, सांख्य,-ज्ञान के अङ्ग होने के कारण यह सब भक्ति के मध्य में परिगणित नहीं होते हैं । उभय विध कैवल्य कामा भक्ति के मध्य में कर्म ज्ञान मिश्रा भक्ति का दृष्टान्त भा० ३।२७।२१--२३ में है ।

तीव्रया मयि भक्त्या च श्रुतसम्भृतया चिरम् ॥६६२॥
ज्ञानेन दृष्टतत्त्वेन वैराग्येण बलीयसा ।
तपोयुक्तेन योगेन तीव्रेणात्मसमाधिना ॥६६३॥
प्रकृतिः पुरुषस्येह दह्यमाना त्वहर्निशम् ।
तिरोभवित्री शनकैरग्नेर्योनिरिवारणिः ॥"६६४॥

निमित्तं फलम्, तत्र निमित्तं प्रवर्त्तकं यस्मिन् तेन निष्कामेण, अमलात्मना निर्म्मलेन मनसा, ज्ञानेन शास्त्रोत्थेन, योगो जीवात्मपरमात्मनोर्ध्यानम्—"योगः सन्नहनोपाय-ध्यान--सङ्गतियुक्तिषु" इति नानार्थ-वर्गात् ध्यानमेव ध्यातृ-ध्येय-विवेकरहितं समाधिः । अत्र (भा० १०।८१।१९) "सर्वासामेव सिद्धीनां मूलं तच्चरणार्चनम्" इत्युक्त्या भक्तेरेवाङ्गित्वेऽपि अङ्गवन्निर्द्देशस्तेषां तत्र साधनान्तर-सामान्यदृष्टि-रित्यभिप्रायेण । अतएव तेषां मोक्षमात्रमेव फलमिति ॥ श्रीकपिलदेवः ॥

---

(२२६) 'अनिमित्तनिमित्तेन स्वधर्म्मेणामलात्मना ।
तीव्रया मयि भक्त्या च श्रुतसम्भृतया चिरम् ॥६६२॥
ज्ञानेन दृष्टतत्त्वेन वैराग्येण बलीयसा ।
तपोयुक्तेन योगेन तीव्रेणात्मसमाधिना ॥६६३॥
प्रकृतिः पुरुषस्येह दह्यमाना त्वहर्निशम् ।
तिरोभवित्री शनकैरग्नेर्योनिरिवारणिः ॥"६६०॥

श्रीभगवान् कपिल देव निज जननी को कहे थे—हे मातः ! केवल प्रकृति सम्बन्ध ही जीव का बन्धन का कारण है। किन्तु गुण बुद्धि से उस प्रकृति कार्य्य में आसक्ति निवृत्ति होने पर जीव की मुक्ति हो सकती है। तब जो आचरण परायण व्यक्ति की आसक्ति प्रकृति कार्य्य में परिलक्षित होती है। वह साधन वैकल्य से ही होती है। इस अभिप्राय से ही साधनाति शय का वर्णन करतः भय निवृत्ति का उपाय को कहते हैं। फलाभि सन्धि रहित का नाम ही अनिमित्त है। उस अनिमित्त ही जिस कार्य्य में प्रवृत्ति के हेतु है—उस का नाम—अनिमित्त निमित्त है। इस प्रकार धर्म्म में धर्म्मानुष्ठान के द्वारा, अर्थात् फलाभि सन्धि शून्य स्वधर्म में निर्म्मल चित्त के द्वारा, एवं कथा श्रवण के द्वारा परिपुष्टा मुझ में तीव्र भक्ति द्वारा, एवं तत्वदर्शी शास्त्रोत्थ ज्ञानद्वय द्वारा, एवं जीवात्मापरमात्मा का ध्यानरूप योग द्वारा एवं बलीयान् वैराग्य द्वारा, एवं जो तीव्रध्यान ही ध्यातृ ध्येय विवेकशून्य होने से समाधि संज्ञा प्राप्त होता है, उस समाधि द्वारा, जो प्रकृति अहर्निश प्रचुरतर भाव से अभिभूयमान होने से भी क्रम पूर्वक अग्नि का उद्भवस्थल काष्ठ के समान, अर्थात् अग्नि अतिशय प्रबल होने पर अग्नि को निर्वापित करने के निमित्त जिस प्रकार मानव अग्नि प्रज्वलन का कारण काष्ठ को अग्निसे विदूरित करता है। उस प्रकार मायाभी निज अंश अविद्या के सहित उस साधक जन से तिरोहिता होती है। यहाँ ज्ञातव्य यह है कि—भा० १०।८१।१९ में उक्त "सर्वासामेव सिद्धानां मूलं तच्चरणार्च्चनम्" श्रीविष्णु के चरणार्च्चन ही समस्त प्रकार सिद्धिलाभ का मूल हेतु है, इस प्रकार उल्लेख होने कारण भक्ति ही निखिल साधनों की अङ्गिनी है, कर्म, योग, ज्ञान प्रभृति उस के अङ्ग हैं। तथापि यहाँपर भक्ति को कर्म ज्ञान योग प्रभृति का अङ्ग रूप में निर्देश किया गया है—उस का कारण

२२७। अथ ज्ञानमिश्रामाह (भा० ११।१८।२१)—

(२२७) "विविक्तक्षेमशरणो मद्भाव-विमलाशयः।
आत्मानं चिन्तयेदेकमभेदेन मया मुनिः ॥"६६५॥

भावो भावना ॥ श्रीभगवान् ॥

२२८। तदेवं कैवल्यकामायां ज्ञानमिश्रोक्ता। अथ भक्तिमात्रकामायां कर्म्ममिश्रा यथा (भा० ११।१९।२०)–

"श्रद्धामृतकथायां मे शश्वन्मदनुकीर्त्तनम्।
परिनिष्ठा च पूजायां स्तुतिभिः स्तवनं मम ॥"६६६॥ इत्यादि,

(भा० ११।१९।२३–२४) —

(२२८) "मदर्थेऽर्थपरित्यागो भोगस्य च सुखस्य च।
इष्टं दत्तं हुतं जप्तं मदर्थं यद्व्रतं तपः ॥६६७॥

---

है—उक्त साधक वृन्द की साधारण दृष्टि, कर्म योग ज्ञानादि के सहित भक्ति में है। इस अभिप्राय से ही भक्ति को ज्ञान योग कर्मादि का अङ्ग रूप में निर्देश किया गया है। अतएव उन सब साधकों को मोक्षलाभ ही होता है, किन्तु श्रीभगवान् के श्रीचरण युगल में प्रेमलाभ नहीं होता है ॥२२६॥

२२७। अनन्तर कैवल्य कामा के मध्य में द्वितीय प्रकार ज्ञान मिश्रा भक्ति का उदाहरण प्रस्तुत करते हैं। भा० ११।१८।२१ में उक्त है—

(२२७) "विविक्तक्षेमशरणो मद्भाव--विमलाशयः।
आत्मानं चिन्तयेदेकमभेदेन मया मुनिः ॥"६६५॥

टीका—विविक्तं विजनं, क्षेमं, निर्भयं, शरणं स्थानं यस्य स, मयिभावेन विमल आशयोयस्य सः ॥

मुनि, विजन एवं निर्भय स्थान में अवस्थान करतः मदीय भावना से निर्म्मलान्तः करण होकर मेरे सहित अभिन्न रूप में एकमात्र मेरी चिन्ता करे। भावः—शब्द का अर्थ है भावना।

श्रीभगवान् कहे थे ॥२२७॥

२२८। कैवल्य कामा भक्ति के मध्य में ज्ञानमिश्रा भक्ति का वर्णन किया गया है। अनन्तर भक्तिमात्र काम्या भक्ति के मध्य में कर्म्म मिश्रा भक्ति का दृष्टान्त का उल्लेख करते हैं। भा० ११।१९।२० में वर्णित है-

"श्रद्धामृतकथायां मे शश्वन्मदनुकीर्त्तनम्।
परिनिष्ठा च पूजायां स्तुतिभिः स्तवनं मम ॥"६६६॥

टीका—श्रद्धा--श्रवणादरः। शश्वदिति सर्वत्रानुषज्जते। मदनुकीर्त्तनं श्रवणानन्तरं मत्कथा व्याख्यामित्यर्थ।

मेरी अमृतमयी कथा में श्रद्धा, अर्थात् श्रवणादर, निरन्तर मेरा कीर्त्तन, मेरी पूजा में सर्वतोभावेन निष्ठा, स्तुति समूह के द्वारा मेरा स्तव करना। भा० ११।१९।२३--२४ में उक्त है—

(२२८) "मदर्थेऽर्थपरित्यागो भोगस्य च सुखस्य च।
इष्टं दत्तं हुतं जप्तं मदर्थं यद्व्रतं तपः ॥६६७॥

एवं धर्म्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम् ।
मयि सञ्जायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते ॥"६६८॥ इत्यन्तम् ।

मदर्थे मद्‌भजनार्थं तद्विरोधिनोऽर्थस्य परित्यागः, भोगस्य तत्साधनस्य चन्दनादेः' सुखस्य पुत्रोपलालनादेः, इष्टादि वैदिकं यत् कर्म्म, तदपि मदर्थं कृतं भक्तेः कारणमित्यर्थः । धर्म्मै-र्भागवताभिधैः, एवं काय-वाङ्मनोभिस्तदर्थमात्रचेष्टावत्त्वेनानुष्ठितैर्भगवद्धर्म्मैरात्मनिवेदिनाम् (भा० ५।१८।१२) "यस्यास्ति भक्तिर्भगवत्यकिञ्चना" इत्यादि-न्यायेनास्य भक्तिमात्र कामस्यान्यः कोऽर्थः साधनरूपः साध्यरूपो वा-वशिष्यते ? सर्व्वोऽसावनादृतोऽपि तदाश्रितोऽपि भवतीत्यर्थः ॥ श्रीभगवान् ॥

२२९ । कर्म्म-ज्ञानमिश्रा यथा (भा० ३।२९।१५–१०)–

(२२९) "निषेवितानिमित्तेन स्वधर्म्मेण महीयसा ।
क्रियायोगेन शस्तेन नातिहिंस्रेण नित्यशः ॥६६९॥

---

एवं धर्म्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम् ।
मयि सञ्जायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते ॥६६८॥

देश कालोचित मेरी परिचर्य्या का आदर, अष्टाङ्ग प्रणाम मेरी पूजा से मेरे भक्त की पूजा का अधिक महत्त्व, कारण भक्त की पूजा करने से मेरा अतिशय सन्तोष होता है । दृश्यमान सर्वभूत में मेरी सत्ता है । इस दृष्टि से आदर प्रदान करना, मेरा भजन हेतु कायिक चेष्टा, लौकिक वाक्य के द्वारा भी मेरा गुण वर्णन, सङ्कल्पात्मक मन को मुझ को अर्पण करे मुझ को छोड़कर अन्यत्र अभिलाष वर्जन करे । मेरा भजन के आनुकूल्य हेतु भक्ति विरोधी विषयों को परित्याग करे, भोग साधन चन्दनादि परित्याग करे । पुत्र लालन पालनादि सुख परित्याग करे, मेरे उद्देश्य में कर्म्मानुष्ठान करे । कारण, मदीय सुखार्थ अनुष्ठित वैदिक कर्म भक्ति लाभ का कारण होता है । विष्णु वैष्णव सन्तोषार्थ दान करे । ब्राह्मण वैष्णव को घृत पक्वान्न प्रदान करे । भगवन्नाम का मन्त्र जप करके मुझ को समर्पण करे । मुझको प्राप्त करने के निमित्त एकादशी प्रभृति में उपवास करना ही भक्त की तपस्या है । हे उद्धव ! इस रीति से अनुष्ठित भागवत धर्म के द्वारा मुझ को आत्मसमर्पण कारी मनुष्य वृन्द की भक्ति वृद्धि होती है । अर्थात् इस प्रकार अनुष्ठित साधन भक्ति के द्वारा प्रेम भक्ति मिलती है । इस प्रकार काय वाक्य मन के द्वारा केवल भगवत् सन्तोषार्थ चेष्टा करके अनुष्ठित भागवत धर्म के द्वारा जिन्होंने भगवान् को आत्मसमर्पण किया है । एवं भजन के विनिमय में अन्य कुछ नहीं चाहा है । उनकी साधन रूप अथवा साध्य रूप किसी प्रकार प्रयोजन प्राप्ति अवशिष्ट नहीं रह जाती है । समस्त प्रयोजन बिना प्रयत्न से स्वयं ही सिद्ध होते हैं । यदि भक्ति मात्र कामी भक्त, धर्मार्थ काम मोक्ष प्रभृति को अनादर करता है, तथापि उक्त समस्त पुरुषार्थ उक्त भक्त के अनुगत होकर रहते हैं । कारण, भा० ५।१८।१२ में कथित है —

"यस्यास्ति भक्तिर्भगवत्यकिञ्चना सर्वैर्गुणैस्तत्रसमासतेसुराः ॥"

श्रीभगवान् में जिसकी अकिञ्चनाभक्ति है, गरुड़ प्रभृति श्रीभगवान् के प्रिय पार्षद वृन्द समस्त गुणों के सहित उस भक्त में आसक्त होते हैं । श्रीभगवान् कहे थे ॥२२८॥

२२९ । भा० ३।२९।१५--१९ में कर्म ज्ञान मिश्रा भक्ति का वर्णन है—

मद्धिष्ण्यदर्शन-स्पर्श-पूजा-स्तुत्यभिवन्दनैः ।
भूतेषु मद्भावनया सत्त्वेनासङ्गमेन च ॥६७०॥
महतां बहुमानेन दीनानामनुकम्पया ।
मैत्र्या चैवात्मतुल्येषु यमेन नियमेन च ॥६७१॥
आध्यात्मिकानुश्रवणान्नामसङ्कीर्त्तनाच्च मे ।
आर्जवेनार्य्यसङ्गेन निरहंक्रियया तथा ॥६७२॥
मद्धर्म्मणो गुणैरेतैः परिसंशुद्ध आशयः ।
पुरुषस्याञ्जसाभ्येति श्रुतमात्रगुणं हि माम् ॥"६७३॥

निषेवितेन सम्यगनुष्ठितेन, अनिमित्तेन च निष्कामेण, स्वधर्म्मेण नित्य-नैमित्तिकेन, महीयसा श्रद्धादियुक्तेन, क्रियायोगेन पञ्चरात्राद्युक्त-वैष्णवानुष्ठानेन, शस्तेन उत्तमदेश-कालादिमता निष्कामेण च, नातिहिंस्रेण अतिहिंसारहितेन, 'अति'--शब्दः-प्राणादिपीड़ा-परित्यागफलपत्रादि-जीवावयवस्वीकारार्थः, मद्धिष्ण्यं मदर्चादि, भूतेष्वन्तर्य्यामित्वेन मद्भावनया, सत्त्वेन धैर्य्येण, असङ्गमेन वैराग्येण च अहिंसास्तेयब्रह्मचर्य्यापरिग्रहा यमाः, शौच-सन्तोष-तपः-स्वाध्यायेश्वरप्रणिधानानि नियमाः, आध्यात्मिक—मात्मानात्मविवेकशास्त्रम्, निरहंक्रियया गर्व्वराहित्येन, मद्धर्म्मणो मद्धर्मानुष्ठातुः पुरुषस्याशयश्चित्तम्, श्रुतमात्रगुणं

(२२९) "निषेवितानिमित्तेन स्वधर्म्मेण महीयसा ।
क्रियायोगेन शस्तेन नातिहिंस्रेण नित्यशः ॥६६९॥
मद्धिष्ण्यदर्शन—स्पर्श--पूजा--स्तुत्यभिवन्दनैः ।
भूतेषु मद्भावनया सत्त्वेनासङ्गमेन च ॥६७०॥
महतां बहुमानेन दीनानामनुकम्पया ।
मैत्र्या चैवात्मतुल्येषु यमेन नियमेन च ॥६७१॥
आध्यात्मिकानुश्रवणान्नामसङ्कीर्त्तनाच्च मे ।
आर्जवेनार्य्यसङ्गेन निरहंक्रियया तथा ॥६७२॥
मद्धर्म्मणो गुणैरेतैः परिसंशुद्ध आशयः ।
पुरुषस्याञ्जसाभ्येति श्रुतमात्रगुणं हि माम् ॥"६७३॥

श्रीभगवान् कपिल देव निज जननी को कहे थे—हे मातः ! सम्यक् रूप से अनुष्ठित, श्रद्धादि युक्त स्वधर्म निष्ठा द्वारा, एवं पञ्च रात्रादि शास्त्र में वर्णित वैष्णवानुष्ठान क्रियायोग के द्वारा अर्थात् अर्च्चन के द्वारा, उत्तम देश कालादि को जान कर निष्काम भाव से धर्माचरण के द्वारा नाति हिंस्रेण, अतिहिंसा रहित होकर, अर्थात् प्राणादि पीड़ा वर्जन पूर्वक विहित पत्र पुष्पादि ग्रहण पूर्वक स्वधर्माचरण द्वारा, प्रत्यह श्रीविग्रह दर्शन, स्पर्श, पूजा, स्तुति एवं नमस्कार के द्वारा, सर्वत्र मैं विद्यमान हूँ, इस प्रकार भावना द्वारा एवं सत्य, अर्थात् धैर्य्य द्वारा, असङ्ग—वैराग्य द्वारा, महापुरुष वृन्द को सम्मान प्रदान कर, दीन जन को कृपा करके, आत्म तुल्य व्यक्ति के प्रति बन्धु भावस्थापन कर, शौच, सन्तोष, तपस्या, स्वाध्याय, ईश्वर प्रणिधान--यह पञ्चविध नियम द्वारा, अहिंसा, अचौर्य्य, ब्रह्मचर्य्य, अपरिग्रह यह चतुर्विध यम द्वारा, एवं

मामञ्जसाऽभ्येति, (भा० ३।२९।११) "मद्गुणश्रुतिमात्रेण मयि" इत्याद्युक्तलक्षणां ध्रुवानुस्मृतिं प्राप्नोतीत्यर्थः। अत्राध्यात्मिकश्रवणादिना ज्ञान ङ्गेन ज्ञानमिश्रात्वमपि ।। श्रीकपिलदेवः ।।

२३०। अथ ज्ञानमिश्रा (भा० ६।१६।६२) –

(२३०) "दृष्टश्रुताभिर्मात्राभिर्निर्मुक्तः स्वेन तेजसा।
ज्ञान-विज्ञान-संतृप्तो मद्भक्तः पुरुषो भवेत् ।।"६७४।।

दृष्टेति ऐहिकामुष्मिकविषयैः, स्वेन तेजसा विवेकबलेन ।। श्रीसङ्कर्षणश्चित्रकेतुम् ।।

२३१। अथ केवलस्वरूपसिद्धोदाह्रियते। तत्र सकामा कैवल्यकामा चोपासक-सङ्कल्प-गुणैस्तत्तद्-गुणत्वेनोपचर्य्यते। ततः सकामा द्विविधाः,–तामसी राजसी च, पूर्व्वा यथा (भा० ३।२९।८)—

---

मेरा नाम सङ्कीर्त्तन, सारल्य, साधुसङ्ग, निरहङ्कार—यह सब के द्वारा, मदीय धर्मानुष्ठान कारी व्यक्ति का चित्त विशुद्ध होता है। अर्थात् अन्य सर्व प्रकार आवेश शून्य होकर एकमात्र मुझ में गाढ़ आवेश प्राप्त कर मेरा गुण श्रवण मात्र से अतिशय सुख पूर्वक आशु मुझ को प्राप्त करता है। भा० ३।२९।११ में उक्त है–

"मद्गुण श्रुति मात्रेण मयि सर्व गुहाशये।
मनोगतिरविच्छिन्ना यथागङ्गाम्भसोऽम्बुधौ ।।"

हे मातः! मदीय गुण श्रवण मात्र से ही मांसमयी दृष्टि के अगोचर में अवस्थित मुझ में, सिन्धु में गङ्गा प्रवाह की निर्बाध गति के तुल्य अविच्छिन्न मनो गति का नाम ही ध्रुवानुस्मृति है, उस ध्रुवानुस्मृति को प्राप्त करता है। यहाँ भक्ति योग के सहित जिस प्रकार स्वधर्मानुष्ठान का उल्लेख होने के कारण, यह भक्ति कर्म मिश्रा हुई है, उस प्रकार ही आध्यात्मिक श्रवणादि की कथा का उल्लेख होने से यह भक्ति ज्ञान मिश्रा भी है।                    श्रीकपिलदेव--स्वीय जननी को कहे थे ।।२२९।।

२३०। अनन्तर ज्ञान मिश्रा भक्ति का वर्णन करते हैं—भा० ६।१६।६२ में उक्त है—

(२३०) "दृष्टश्रुताभिर्मात्राभिर्निमुक्तः स्वेन तेजसा।
ज्ञानविज्ञान संतृप्तो मद्भक्तः पुरुषो भवेत् ।।"६७४।।

अनन्तर ज्ञान मिश्रा कैवल्य कामा भक्ति का दृष्टान्त उपस्थापित करते हैं—चित्र केतु महाराज के प्रति श्रीसङ्कर्षण देव कहे थे—हे राजन्! पुरुष निज विवेक द्वारा ऐहिक, आमुष्मिक विषय द्वारा निर्म्मुक्त होकर शास्त्रोत्थज्ञान द्वारा एवं अपरोक्ष अनुभव द्वारा संतृप्त होकर मेरे प्रति भक्तिमान् होता है।

श्रीसङ्कर्षण चित्रकेतु को कहे थे ।।२३०।।

२३१। सम्प्रति केवल स्वरूप सिद्धा भक्ति का उदाहरण प्रस्तुत करते हैं। उस के मध्य में उपासक के सङ्कल्प के अनुसार सकामा एवं कैवल्य कामा के धर्म रूप में उपचार होता है। अर्थात् केवल स्वरूप सिद्ध भक्ति सकामा वा कैवल्य कामा नहीं है। किन्तु उपासक के हृदय में अन्य कामना विद्यमान होने पर उस उपासक के हृदय में कामना होने के कारण, भक्ति सकामा होती है, एवं मोक्ष कामना होने पर स्वरूप सिद्धा भक्ति भी कैवल्य कामा नाम से अभिहिता होती है। अतएव सकामा भक्ति– तामसी एवं राजसी भेद से द्विविध हैं। उस के मध्य में तामसी भक्ति का लक्षण भगवान् कपिल देवने भा० ३।२९।८ में निज जननी को कहा है—

(२३१) "अभिसन्धाय यो हिंसां दम्भं मात्सर्य्यमेव वा।
संरम्भी भिन्नदृग्भावं मयि कुर्य्यात् स तामसः ॥"६७५॥

अभिसन्धाय सङ्कल्प्य, संरम्भी सक्रोधः, भिन्नदृक् स्वस्मिन्निव सर्व्वत्र यत् सुखं दुःखं च तत्तदवेत्ता निरनुकम्प इत्यर्थः ॥

२३२। उत्तरा यथा (भा० ३।२९।९) —

(२३२) "विषयानभिसन्धाय यश ऐश्वर्य्यमेव वा।
अर्चादावर्चयेद्यो मां पृथग् भावः स राजसः ॥"६७६॥

पृथक् मत्तोऽन्यत्र विषयादिष्वेव भावः स्पृहा यस्य, न तु मयीति राजसत्वहेतुता दर्शिता ॥

२३३। अथ कैवल्यकामा सात्त्विक्येव, सा यथा (भा० ३।२९।१०) —

(२३३) "कर्म्मनिर्हारमुद्दिश्य परस्मिन् वा तदर्पणम्।
यजेद्यष्टव्यमिति वा पृथग्भावः स सात्त्विकः ॥"६७७॥

---

(२३१) "अभिसन्धाय जो हिंसां दम्भं मात्सर्य्यमेव वा।
संरम्भी भिन्न दृग्भावं मयि कुर्य्यात् स तामसः ॥"६७५॥

जो, हिंसा, गर्व, परश्रीकातरता प्रभृति सङ्कल्प करके कोपन स्वभाव एवं भेद दृष्टि से अर्थात् निज सुख दुःख जिस प्रकार प्रिय एवं अप्रिय है, उस प्रकार सर्वत्र दृष्टि शून्य 'सर्वभूत में दया शून्य' होकर जो मुझ में भक्ति करता है, वह तामस है, अतएव उसकी भक्ति तामसी है। द्वितीय राजसी भक्ति का उदाहरण भी श्रीकपिल देवने प्रस्तुत किया है। जो विषय, यश, अथवा ऐश्वर्य्य लाभेच्छु होकर प्रतिमा प्रभृति में मेरा अर्च्चन करता है, वह राजस है। कारण, मुझ को छोड़कर अन्य विषय में चित्त का आवेश है, किन्तु मुझ में चित्त का आवेश नहीं है, राजसत्वके प्रति यही हेतु है ॥२३१॥

२३२। अनन्तर कैवल्य कामा भक्ति,—किन्तु सात्त्विकी है, उस का वर्णन श्रीकपिल देवने स्वीय जननी के समक्ष में किया है। (भा० ३।२९।९

(२३२) "विषयानभिसन्धाय यश ऐश्वर्य्य मेव वा।
अर्चादावर्चयेद् यो मां पृथग् भावः स राजसः ॥"६७६॥

हे मातः। जो कर्म परिहार अर्थात् मोक्षलाभ हेतु अथवा ईश्वर में कर्म्मार्पण करता है, किंवा यज्ञादि कर्म समूह नित्य विधि प्राप्त होने के कारण, अवश्य ही ईश्वर की पूजा करनी चाहिये, इस बुद्धि से परमेश्वर की पूजा करता है, किन्तु भक्ति तत्त्व ज्ञान द्वारा परमेश्वर की पूजा नहीं करता है। अतएव वह व्यक्ति, पूर्व वर्णित राजस भक्त के समान पृथक् भाव होने के कारण, अर्थात् भक्त मोक्ष को ही पुरुषार्थ रूप में भावना करता है, तज्जन्य मोक्षार्थी भक्त सात्त्विक नाम से अभिहित होता है ॥३२३॥

२३३। अनन्तर कैवल्य कामा सात्त्विकी भक्ति का वर्णन करते हैं—भा० ३।२९।१० में है।

(२३३) "कर्म निर्हार मुद्दिश्य परस्मिन् वा तदर्पणम्।
यजेद् यष्टव्यमिति वा पृथग् भावः स सात्त्विकः ॥"६७७॥

श्रीकपिलदेव निज जननी को कहे थे,— मातः! जो कर्म परिहार अर्थात् मोक्षलाभ हेतु अथवा

कर्म्मनिर्हारं मोक्षमुद्दिश्य परस्मिन् परमेश्वरे यो वा कर्मार्पणं कुरुते, यो वा यष्टव्यं सर्व्वेषां नित्यविधिप्राप्तत्वेनावश्यमेव तत्पूजनं कर्त्तव्यमिति बुद्धया, न तु भक्तितत्त्वज्ञानेन यो यजेत्, परमेश्वरं पूजयति, अतएव पूर्व्ववत् पृथग्भावो भक्तेः पृथङ्मोक्षमेव पुरुषार्थत्वेन भावयन् स सात्त्विक उच्यते । उत्तरस्या अपि तात्पर्य्यं कर्म्मनिर्हार एव भवेदिति । उक्तञ्च (भा० ११।२५।२६) "सात्त्विकः कारकोऽसङ्गी" इति, (भा० ११।२५।२४) "कैवल्यं सात्त्विकं ज्ञानम्" इति, (भा० ११।२५।२९) "सात्त्विकं सुखमात्मोत्थम्" इति च तत्साधन-साध्ययोः सगुणत्वम् । अत्रत्योदाहरणं यजेदित्युत्तरार्द्धमेव ॥

---

परमेश्वर में कर्म्मार्पण करता है, किंवा यज्ञादि कर्म्म समूह नित्य विधि विहित हेतु अवश्य ही परमेश्वर की पूजा करनी चाहिये—इस बुद्धि से परमेश्वर की पूजा करता है, किन्तु भक्ति तत्त्व ज्ञान से पूजा नहीं करता है । अतएव वह पूर्व वर्णित राजस भक्त के समान पृथग् भाव होने के कारण, अर्थात् भक्ति से मोक्ष को श्रेष्ठ पुरुषार्थ मान कर धर्माचरण करता है, वह मोक्षार्थी भक्त, सात्त्विक नाम से अभिहित होता है । उत्तर पक्ष का, अर्थात् नित्य विधि प्राप्त मानकर जो परमेश्वर का अर्च्चन करता है—उसका भी तात्पर्य्य कर्म्म परिहार में ही पर्य्यवसान होता है । इस अभिप्राय से ही भा० ११।२५।२६ में उक्त है—

"सात्त्विकः कारकोऽसङ्गी रागान्धो राजसः स्मृतः ।
तामसः स्मृति विभ्रष्टो निर्गुणो मदपाश्रयः ॥
सात्त्विकयाध्यात्मिकी श्रद्धा कर्म श्रद्धा तु राजसी ।
तामस्यधर्म्मे या श्रद्धा मत् सेवायान्तु निर्गुणः ॥"

श्रीभगवान् कृष्ण कहे थे,—हे उद्धव ! जो कर्त्ता अनासक्त है, वह सात्त्विक है, अर्थात् जिस की आसक्ति कर्म फल में नहीं है, वह अधिकारी सात्त्विक होता है । और जो अधिकारी फल प्राप्ति हेतु अत्यन्त अभिनिविष्ट है, वह राजस है । जो अनुसन्धान शून्य है, वह तामस है । जो एकान्त भाव से मेरी शरणागत है, वह निर्गुण है, कारण, उसका किसी प्रकार अहङ्कार नहीं है । आत्म--अनात्म विचार में जो श्रद्धा है,—वह सात्त्विकी है, कर्म्म श्रद्धा का नाम राजसी है, अधर्म में धर्म्म मानकर जो श्रद्धा है, वह तामसी है, मेरी सेवा में जो श्रद्धा है—वह निर्गुण है । भा० ११।२५।२४ में और भी कहे हैं—

"कैवल्यं सात्त्विकं ज्ञानं रजोवैकल्पितञ्च यत् ।
प्राकृतं तामसं ज्ञानं मन्निष्ठं निर्गुणं स्मृतम् ॥

टीका--इदानीं सगुण निर्गुण भेदेन ज्ञानादीनां चातुर्विध्यमाह । कैवल्यं देहादि व्यतिरिक्तात्म विषयं वैकल्पिकं देहादि विषयम् । यत् तद्रजं राजसम् । प्राकृतं बालमूकादि ज्ञान तुल्यम् । मन्निष्ठं परमेश्वर विषयम् । भा० ११।२५।२७ में भी आपने कहा है ।

"सात्त्विकं सुखमात्मोत्थं विषयोत्थन्तु राजसम् ।
तामसं मोह दैन्योत्थं निर्गुणं मदपाश्रयम् ॥"

टीका—आत्मोत्थं सुखम् । मदपाश्रयमित्यपि त्वं तत् पदार्थ विषयत्वेन ज्ञानवदेव द्रष्टव्यम् ॥

कैवल्य सात्त्विक ज्ञान है, इस से प्रतिपन्न होता है कि मोक्ष कामना सात्त्विकी है । इस से सुस्पष्ट प्रतीति होती है कि—इस विषय में साध्य साधन—उभय ही सात्त्विक होने के कारण कैवल्य कामा भक्ति भी सगुणा भक्ति के मध्य में पर्य्यवसित है । भा० ३।२९।१० में उक्त—

२३४। अथ यस्या एवोत्कर्षज्ञानार्थमेते भक्तिभेदा निरूपिताः, सा भक्तिमात्रकामत्वान्निष्काम निर्गुणा केवला स्वरूपसिद्धा निरूप्यते। इयमेवाकिञ्चनाख्यत्वेन सर्व्वोद्ध्र्वं पूर्व्वमप्यभिहिता तामाह, (भा० ३।२९।११-१४)—

(२३४) "मद्गुणश्रुतिमात्रेण मयि सर्व्वगुहाशये।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ ॥६७८॥
लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम्।
अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ॥६७९॥
सालोक्य-सार्ष्टि-सामीप्य-सारूप्यैकत्वमप्युत।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ॥६८०॥
स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः।
येनातिव्रज्य त्रिगुणं मद्भावायोपपद्यते ॥"६८१॥

मद्गुणश्रुतिमात्रेण, न तु तत्रोद्देश्यान्तरसिद्धयभिप्रायेण। प्राकृतगुणमयकरणानां सर्व्वेषां गुहा करणागोचरपदवी तस्यां शेते गुह्यतया निश्चलतया च तिष्ठति यस्तस्मिन् मयि

---

"कर्मनिर्हार मुद्दिश्य परस्मिन् वा तदर्पणम्।
यजेद् यष्टव्यमिति वा पृथग् भावः स सात्त्विकः ॥"६७७॥

'यजेद् यष्टव्यमिति वा' यह उद्धरार्द्ध ही इस विषय का उदाहरण है ॥२३३॥

२३४। अनन्तर जिस का उत्कर्ष बोध हेतु भक्ति का विविध भेद निरूपित हुए हैं। उस भक्ति की कामना एकमात्र भक्ति विषय में ही होने के कारण, वह निष्कामा, निर्गुणा, केवला, स्वरूप सिद्धा, प्रभृति नामों से अभिहिता होती है। इस स्वरूप सिद्धा भक्ति का सर्व प्रथम 'अकिञ्चना" शब्द से सर्व श्रेष्ठ रूप में उल्लेख किया गया है। उस अकिञ्चना भक्ति का लक्षण भगवान् श्रीकपिलदेव ने जननी को भा० ३।२९।११--१४। में कहा है।

(२३४) ' मद्गुणश्रुणिमात्रेण मयि सर्व्वगुहाशये।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ ॥६७८॥
लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम्।
अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ॥६७९॥
सालोक्य-सार्ष्टि--सामीप्य--सारूप्यैकत्वमप्युत।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ॥६८०॥
स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः।
येनातिव्रज्य त्रिगुणं मद्भावायोपपद्यते ॥"६८१॥

जननि! निर्गुण भक्ति योग का वर्णन करता हूँ, श्रवण करें। भक्ति की जिस अवस्था में किसी प्रकार उद्देश्य सिद्धि का अभिप्राय शून्य होकर मेरा गुण में— अर्थात् मेरी गुण कथा का श्रवण मात्र से ही सर्व गुहाशय मुझ में, गङ्गा प्रवाह की सिन्धु में निर्बाध गति के समान, अविच्छिन्ना मानसगति प्रवाहित होती है, उस अवस्थापन्न भक्ति का नाम निर्गुणा है। यहाँपर 'गुहाशय' शब्द का अर्थ है—प्राकृत गुणमय

अविच्छिन्ना विषयान्तरेण विच्छेत्तुमशक्या या मनोगतिः सा। अविच्छिन्नत्वे दृष्टान्तः,यथेति। गतिरिति पूर्व्वस्मादाकृष्यते, छान्दसत्वात्, लक्षणं स्वरूपम्। ननु तस्या गुणश्रुतेः का वार्त्ता, उद्देश्यान्तराभावेन मनोगतित्वाभावेन च द्विधापि निर्देष्टुमशक्यत्वात् ? तत्राह,-अहैतुकी फलानुसन्धानरहिता, अव्यवहिता स्वरूपसिद्धत्वेन साक्षाद्रूपा, न त्वारोपादिसिद्धत्वेन व्यवधानात्मिका। तादृशी या भक्तिः, श्रोत्रादिना सेवनमात्रम्, सा च तस्य स्वरूपमित्यर्थः! 'मात्र'-पदेनाविच्छिन्नेत्यनेन च मनोगतेरहैतुकीत्वादिसिद्धेः पृथग्योजनार्हत्वात्,(भा० ११।२३।२६) "सात्त्विकः कारकोऽसङ्गी" इत्यादिषु "निर्गुणो मदपाश्रयः" इत्यादिभिस्तदाश्रयक्रियादीनां निर्गुणत्वस्थापनात्, (भा० ११।१३।४०)—

"मां भजन्ति गुणाः सर्वे निर्गुणं निरपेक्षकम्।
सुहृदं सर्वभूतानां साम्यासङ्गादयो गुणाः॥"६८२॥

इत्यत्र तद्गुणानामप्यप्राकृतत्वश्रवणात्। अहैतुकीत्वमेव विशेषतो दर्शयति -जना मदीयाः सालोक्यादिकमपि, उत अपि दीयमानमपि न गृह्णन्ति, मत्सेवनं विनेति गृह्णन्ति चेत्,

---

इन्द्रिय वृन्द का अगोचर जो स्थान है, उस स्थान में गोपनीय रूप में एवं निश्चल रूप में जो अवस्थान करते हैं, वह गुहाशय हैं। अविच्छिन्ना' शब्द का अर्थ है—किसी भी विषयान्तर के द्वारा जो भगवद् विषयिणी मनोवृत्ति विच्छिन्ना नहीं होती है। निर्गुण भक्ति योग का यही लक्षण अर्थात् स्वरूप है।

यहाँ संशय हो सकता है कि– जिस में कुछ भी उद्देश्य नहीं है, एवं जो भगवान् मन के अविषय है, उन भगवान् के गुणों का निर्द्देश करना असम्भव ही है। अतएव श्रीभगवान् के गुण श्रवण कैसे हो सकता है ? उत्तर में कहते हैं—जो भक्ति अहैतुकी है, अर्थात् फलानुसन्धान रहिता है, अव्यवहिता भी है, अर्थात् स्वरूप सिद्धा भक्ति साक्षात् रूपा है, किन्तु आरोप सिद्धा भक्ति के समान ज्ञान कर्म्मादि व्यवधान युक्ता नहीं है। कथा श्रवण रूपा उस प्रकार भक्ति श्रवणादि इन्द्रियों के द्वारा सेविता होती है, वही निर्गुण भक्ति योग का स्वरूप है। मूल श्लोक में लिखित है—"मद् गुण श्रुति मात्रेण" यहाँ मात्र पद का उल्लेख है। एवं "मनोगतिरविच्छिन्ना" यहाँ 'अविच्छिन्ना पद का उल्लेख होने के कारण, मनोगति के अहैतुकी प्रभृति धर्म स्वतः सिद्ध होने से पृथक् रूप से 'अहैतुकी', 'अव्यवहिता' प्रभृति पदों का प्रयोग निष्प्रयोजन होने पर भी सुस्पष्ट रूप से लक्षण को समझाने के निमित्त उक्त पद द्वय का प्रयोग किया गया है। भा० ११।२५।२६ में उक्त है–"सात्त्विकः कारकोऽसङ्गी, एवं निर्गुणोमदपाश्रयः" इत्यादि श्लोकों के द्वारा भगवदाश्रित क्रिया प्रभृति का निर्गुणत्व स्थापन करने के कारण, एवं

"मां भजन्ति गुणाः सर्वे निर्गुण निरपेक्षकम्।
सुहृदं सर्वभूतानां साम्यासङ्गादयोगुणाः॥"६८२॥

सर्वभूतों का सुहृद्, सर्व निरपेक्ष प्राकृत गुणातीत मुझ को साम्य एवं असङ्ग प्रभृति अप्राकृत गुण समूह सेवन करते हैं, इत्यादि श्लोक में भगवद् गुणों का अप्राकृतत्व प्रदर्शन करके निर्गुणा भक्ति जो अहैतुकी है, अर्थात् फलाभिसन्धि शुन्य है—इस का वर्णन विशेष रूप से करते हैं– हे मातः! जो मेरे हैं, वे (सालोक्य) समान लोक में निवास करने का अधिकार, 'सार्ष्टि' श्रीभगवान् के समान् ऐश्वर्य्य प्राप्ति। एकत्व, ब्रह्म वा ईश्वर सायुज्य प्राप्ति यह पञ्चविध मुक्ति के मध्य में एकत्व—अर्थात् ईश्वर सायुज्य वा

तर्हि मत्सेवनार्थमेव गृह्णन्ति, न तु तदर्थमेवेत्यर्थः। सार्ष्टिः समानैश्वर्य्यम्, एकत्वं भगवत्-सायुज्यं ब्रह्मसायुज्यञ्च, अनयोस्तल्लीलात्मकत्वेन तत्सेवनार्थत्वाभावादग्रहणावश्यकत्वमेवेति भावः। तस्मात् स एव निर्गुणभक्तियोगाख्य आत्यन्तिकः, स एव चात्यन्तिम-फलतया भवनीत्यपवर्ग इत्यर्थः, (भा० ३।१५।४८) "नात्यन्तिकं विगणयन्ति" इत्यादेः, आत्यन्तिक-प्रलयतया तत्प्रसिद्धेश्च। ननु गुणत्रयात्ययपूर्वक-भगवत्साक्षात्कार एवापवर्ग इति चेत्, तस्यापि तादृशधर्मत्वं स्वतः सिद्धमेवेत्याह—येनेति येन, कदाचिदप्यपरित्याज्येन, मम भावाय

---

ब्रह्म सायुज्य मुक्ति में ब्रह्म में लीन होना ही तात्पर्य्य होने कारण— भगवत् सेवा में वह मुक्ति अनुकूल नहीं होती है। तज्जन्य सेवा पुरुषार्थिवृन्द सायुज्य मुक्ति का ग्रहण कभी भी नहीं करते हैं। अतएव पहले वर्णित के अनुसार जिस का लक्षण प्रकाशित हुआ है। वह भक्ति योग ही आत्यन्तिक पुरुषार्थ है, शास्त्र में उस का वर्णन भी बहुशः हुआ है। भा० ३।१५।४८ में उक्त है—

"नात्यन्तिकं विगणयन्त्यपि ते प्रसादं।
किम्वान्यदर्पितभयं भ्रुव उन्नयैस्ते।
येऽङ्ग त्वदङ्घ्रिशरणा भवतः कथायाः।
कीर्त्तन्यतीर्थ यशसः कुशला रसज्ञाः॥"

हे प्रभो! आप का यशः परम रमणीय एवं अतिशय पवित्र है, अतएव कीर्त्तनार्ह एवं तीर्थ स्वरूप हैं। जो सब निपुण व्यक्ति, आप के कथा रसज्ञ हैं, वे मोक्ष नामक आप का आत्यन्तिक अनुग्रह को भी हितकर नहीं मानते हैं। अन्य इन्द्रादि पद की तो कथा ही क्या है? कारण, इन्द्रादि पद आप के भ्रूभङ्ग जनित भय सङ्कुल हैं, आप की कथा से भक्त गण निरतिशय आनन्द लाभ करते हैं, अतः भय सङ्कुल इन्द्रादि पद की अपेक्षा उन सब को नहीं है। इत्य दि श्लोकों के द्वारा दर्शाया गया है कि—भक्तिमें मोक्ष सुख तिरस्कार कारी ही भक्ति सुख है। विशेष कर "यदैवमेतेन विवेक हेतिना" श्लोक के द्वारा मोक्ष सुख को आत्यन्तिक प्रलय कहा गया है, अतएव जो प्रलयपद वाच्य है, उस में क्या अधिक सुख सम्भव है? कतिपय व्यक्ति कहते हैं—सत्वादि गुण त्रय विनाश पूर्वक भगवत् साक्षात् कार का नाम ही अपवर्ग है। उस का समाधान हेतु कहते हैं—भगवत् प्रीति लक्षण भक्ति योग में सत्वादि गुणत्रय का विनाश होकर भगवत् साक्षात् कार स्वतः सिद्ध ही है। अर्थात् जहाँ श्रीभगवान् में प्रीति लक्षणा भक्ति का आविर्भाव होता है, वहाँ सत्वादि गुण त्रय का विनाश होकर भगवत् साक्षात् कार होता ही है। इस अभिप्राय से ही कहते हैं—"येनाति व्रज्य त्रिगुणात्" अर्थात् जो भक्ति योग कभी भी परित्याज्य नहीं है। इस प्रकार भक्ति योग के प्रभाव से मेरा भाव अर्थात् साक्षात् कार हेतु योग्यता को प्राप्त करता है। (भा० ५।१९।१८--१९) "यथावर्ण विधानमपवर्गश्च भवति, योऽसौ भगवति" उक्त अभि प्राय से ही कहा गया है, भारत वर्ष के वर्ण समुचित धर्म का पालन यथा विधि करने से अपवर्ग होता है, जो अपवर्ग—भगवान् वासुदेव में अनन्य निमित्त भक्ति योग है। उक्त भक्ति योग—अपवर्ग नाम से ख्यात होने का कारण यह है—"अनन्य निमित्त भक्ति योग लक्षणो नाना गति निमित्ताविद्या ग्रन्थि रन्धन द्वारेण" जिस अविद्या ग्रन्थि के द्वारा जीव विभिन्न देह में भ्रमण करता रहता है, उस अज्ञान मय अहमिका ग्रन्थि का छेदन भक्ति योग से ही होता है। इस अभिप्राय से ही अनन्य निमित्त अर्थात् अहैतुकी भक्ति योग का नाम अपवर्ग दिया गया है। किन्तु यथा विहित वर्ण धर्म आचरण करने से ही श्रीभगवान् में अहैतुकी भक्ति का उदय नहीं होता है।

विद्यमानतायै साक्षात्कारायेत्यर्थः, उपपद्यते समर्थो भवति, यथोक्तं पञ्चमे (भा० ५।१९।१८ १९) "यथावर्णविधानमपवर्गश्च भवति, योऽसौ भगवति" इत्यादिकम्, "अनन्यनिमित्त-भक्तियोग-लक्षणो नानागतिनिमित्ताविद्याग्रन्थिरन्धनद्वारेण" इत्यन्तम् ।

अतो निर्गुणापि बहुधैवावगन्तव्या, एवमेवोक्तमेतत्प्रकरणारम्भे (भा० ३।२९।७)—

"भक्तियोगो बहुविधो मार्गैर्भाविनि भाव्यते ।
स्वभावगुणमार्गेण पुंसां भावो विभिद्यते ।।"६८३।। इति ।

मार्गैः प्रकारविशेषैः, अतः स्वस्य भक्तियोगस्यैव मार्गेण वृत्तिभेदेन श्रवणादिना भावयाभिमानस्य तद्भेदेन दास्यादिना गुणानां तमआदीनाञ्च तद्भेदेन हिंसादिना पुंसां भावोऽभिप्रायो विभिद्यत इत्यर्थः । अत्र मुक्ताफलटीका च—"अयमात्यन्तिकः, ततः परं प्रकारान्तराभावात्, अस्यैव भक्तियोग इत्याख्यान्वर्थेन, भक्तिशब्दस्यात्रैव मुख्यत्वात् । इतरेषु फल एवानुरागः, न तु विष्णौ, फलालाभेन भक्तित्यागात्" इत्येषा । श्रीगोपालतापनीश्रुतौ च (१।१८)–

---

यावत् पर्य्यन्त भगवद् भक्त का सङ्गलाभ नहीं होता है, । भगवद् भक्त सङ्ग ही एकमात्र अहैतुकी भक्ति लाभ का कारण है । अतएव निर्गुणा भगवद् भक्ति योग भी प्रकार भेद से विविध हैं । इस विषय का वर्णन श्रीकपिल देव ने किया है । भा० ३।२९।७ में

"भक्तियोगो बहुविधो मार्गैर्भाविनि भाव्यते ।
स्वभावगुणमार्गेण पुंसां भावो विभिद्यते ।।"६८३।।

हे भाविनि ! विशेष विशेष मार्ग के द्वारा भक्ति योग बहु विध प्रकार से प्रकाशित होता है । अतएव स्वभाव, स्वरूप एवं गुण वृत्ति भेद से मानव के अभिप्राय में विभिन्न प्रकार हो जाते हैं । अर्थात् मानव के गुणानुरूप फल सङ्कल्प भेद होने के कारण भक्तिमें भी भेद उपस्थित होता है । अतएव भक्ति योग का मार्ग अर्थात् श्रवण कीर्त्तनादि वृत्ति भेद से अभिमान एवं दास्य सख्य प्रभृति अभिमान गत भेद से, एवं तमः, रजः, सत्त्वगुण प्रभृति के धर्म हिंसा प्रभृति के द्वारा मानव का भाव अर्थात् अभिमत विविध प्रकार के होते रहते हैं । यहाँ पर वोपदेव कृत मुक्ताफल टीका में लिखित है ":अयमात्यन्तिकः, ततः परं प्रकारान्तराभावात् । अस्यैव भक्ति योग इत्याख्यान्वर्थेन, भक्तिशब्दस्यात्रैव मुख्यत्वात् । इतरेषु फल एवानुरागः, न तु विष्णौ फलालाभेन भक्तित्यागात्" इत्येषा ।

अर्थात् यह भक्ति योग ही आत्यन्तिक पुरुषार्थ है । कारण, इस भक्ति योग के बाद और प्रकार गत भेद नहीं है । कारण, सत्त्व, रजः तमः—यह तीन गुणों के अतीत भक्ति योग के वृत्तिगत भेद हो ही नहीं सकता । गुणमय भक्ति योग में फल लाभ में अनुराग होता है । किन्तु श्रीविष्णु में अनुराग नहीं होता है । कारण, फल लाभ करने में अक्षम होने पर भक्ति को वर्जन कर देता है ।

श्रीगोपाल तापनी श्रुति में भी लिखित है—"भक्तिरस्य भजनं तदिहामुत्रोपाधिनैरास्येनामुष्मिन् मनः कल्पनमेतदेव च नैष्कर्म्म्यम् " यह श्रीकृष्णभजन ही भक्ति है, यह भजन भी ऐहिक पारलौकिक सुख भोग में लालसा शून्य होकर श्रीकृष्ण में ही सङ्कल्प स्थापन करना है । इस का ही अपर नाम नैष्कर्म्म्य है । शतपथ श्रुति में उक्त है—"स होवाच,—याज्ञवल्क्य स्तत् पुमानात्महिताय प्रेम्णा हरिं भजेत् ।।" मानव आत्म कल्याणार्थ प्रीति लाभ हेतु श्रीहरि का भजन करे । अर्थात् श्रीहरि में प्रीति मात्र कामना

"भक्तिरस्य भजनं तदिहामुत्रोपाधिनैरास्येनामुष्मिन् मनःकल्पनमेतदेव च नैष्कर्म्यम्" इति, शतपथश्रुतौ—"स होवाच याज्ञवल्क्यस्तत् पुमानात्महिताय प्रेम्णा हरिं भजेत्" इति, प्रेम्णा प्रीतिमात्रकामनया यदात्महितं तस्मै इत्यर्थः ॥ श्रीकपिलदेवः ॥

२३५। तदेवं बहुधा साधितैषा अकिञ्चना आत्यन्तिकीत्यादिसंज्ञा भक्तिर्द्विविधा–वैधी, रागानुगा चेति। तत्र वैधी शास्त्रोक्तविधिना प्रवर्त्तिता, स च विधिर्द्विविधः, तत्र प्रथमः प्रवृत्तिहेतुः, तदनुक्रम-कर्त्तव्याकर्त्तव्यानां ज्ञानहेतुश्च। प्रथमस्तूदाहृतः, (भा० १।२।१४)—

"तस्मादेकेन मनसा भगवान् सात्वतां पतिः।
श्रोतव्यः कीर्त्तितव्यश्च ध्येयः पूज्यश्च नित्यदा॥"६८४॥

इत्यादिना। द्वितीयश्चार्चनव्रतादिगतः, तमाह, (भा० ११।२७।५३)—

(२३५) "मामेव नैरपेक्ष्येण भक्तियोगेन विन्दति।
भक्तियोगं स लभते एवं यः पूजयेत माम्॥"६८५॥

---

करने से जो निज हित साधित होता है। तज्जन्य ही श्रीहरि का भजन करे।

श्रीकपिल देव कहे थे॥२३४॥

२३५। अकिञ्चना, आत्यन्तिकी प्रभृति नामों से अभिहिता भक्ति का विचार अनेक प्रकारों से करके स्थिर सिद्धान्त किया गया है। उक्त भक्ति,—वैधी रागानुगा भेद से द्विविधा हैं। तन्मध्ये रुचिविहीन केवल मात्र शास्त्रोक्त विधि के अनुसार जो अनुष्ठित होती है, उसका नाम वैधी भक्ति है। उक्त शास्त्रोत्थ विधि भी दो प्रकार हैं। जिस में भजन अनुष्ठान के अनुक्रम से कर्त्तव्य एवं अकर्त्तव्य का बोध का हेतु विधि है। अर्थात्, शास्त्रीय विधि के अनुसार भजन करने की प्रवृत्ति का उद्गम होने पर, उस अनुष्ठेय भजनाङ्ग के मध्य में किस अङ्ग का अनुष्ठान पहले करना होगा।, किस का अनुष्ठान बाद में करना होगा, एवं उसका प्रकार भी किस प्रकार है, इस प्रकार बोध हेतु विधि की अपेक्षा है। उस के मध्य में प्रथम प्रवृत्ति हेतु विधि का उदाहरण भा० १।२।१४ में है—

"तस्मादेकेन मनसा भगवान् सात्वतां पतिः।
श्रोतव्यः कीर्त्तितव्यश्च ध्येयः पूज्यश्च नित्यदा॥"६८४॥

श्रीसूत कहे थे—हे शौनक ! धर्म्मानुष्ठान का मुख्य फल श्रीहरि सन्तोष है। श्रीहरि सन्तोष के बिना समस्त साधनानुष्ठान विफल होते हैं। अतएव परम्परा रूप से श्रीहरि सन्तोष का पथ को अवलम्बन न करके जिसे भक्ति योग के द्वारा श्रीहरि सन्तुष्ट होते हैं, उस भक्ति योग को अवलम्बन करना एकान्त कर्त्तव्य है। उस भक्ति योग का अनुष्ठेय प्रकार यह है। श्रीभगवन्निष्ठ सङ्कल्प से भक्त जन प्रिय श्रीभगवान् कथा का नित्य श्रवण करना, कीर्त्तन करना, एवं उनका ध्यान करना, एवं पूजा करना अवश्य कर्त्तव्य है। इस प्रकार श्लोकों के द्वारा अवश्य कर्त्तव्य विधि का उल्लेख हुआ है। द्वितीय प्रकार में—भजन की क्रम परिपाटी बोध के हेतुरूप विषय—अर्चन एवं व्रतादि भजनाङ्ग पर है। उस का वर्णन भा० ११।२७।५७ में है—

(२३५) "मामेव नैरपेक्ष्येण भक्तियोगेन विन्दति।
भक्तियोगं स लभते एवं यः पूजयेत माम्॥"६८५॥

नैरपेक्ष्य—शब्द से अहैतुक को जानना होगा, अहैतुक भक्ति योग—कैसे होगा ? उत्तर में कहते हैं।

नैरपेक्ष्येण अहैतुकेन। अहैतुक-भक्तियोग एव कथं स्यात् ? तत्राह—भक्तियोगमिति। एवं (भा० ११।२७।८-९) —

"यदा स्वनिगमेनोक्तं द्विजत्वं प्राप्य पुरुषः।
यथा यजेत मां भक्त्या श्रद्धया तन्निबोध मे ॥६८६॥
अर्च्चायां स्थण्डिलेऽग्नौ वा सूर्य्ये वाप्सु हृदि द्विजे।
द्रव्येण भक्तियुक्तोऽर्च्चेत् स्वगुरुं माममायया ॥" ६८७॥

इत्याद्युक्त--विधिना ॥ श्रीभगवान् ॥

२३६। एवमेकादशी--जन्माष्टम्यादिगतोऽपि ज्ञेयः। अथ वैधीभेदाः शरणापत्ति-श्रीगुर्वादिसत्सेवा-श्रवणकीर्त्तनादयः। एते च प्रत्येकमपि द्वित्रादयः समुदित्यापि कारणानि

---

पूर्वोक्त प्रकार से जो मेरी पूजा करता है, वह अहैतुक भक्ति योग प्राप्त करता है। उस विधि का वर्णन भी भा० ११।२७।८-९ में किया है।

"यदा स्वनिगमेनोक्तं द्विजत्वं प्राप्य पुरुषः।
यथा यजेत मां भक्त्या श्रद्धया तन्निबोध मे ॥६८६॥
अर्चायां स्थण्डिलेऽग्नौ वा सूर्य्ये वाप्सु हृदि द्विजे।
द्रव्येण भक्तियुक्तोऽर्चेत् स्वगुरुं माममायया ।" ६८७॥

टीका– यदा त्रैवर्णिकोयजेत तदा विशेष माह। यदागर्भाष्टमेवाद्दश द्वादशाब्दादि काले स्वनिगमेन स्वाधिकार प्रवृत्तेन वेदेनोक्तं द्विजत्वमुपनयनम्। (८) अर्चायां—प्रतिमादौ।(९)

जिस समय त्रैवर्णिक मानव—अर्थात् ब्राह्मण, क्षत्रिय, वैश्य– निज अधिकार के अनुरूप शास्त्रोक्त विधि से द्विजत्व अर्थात् उपनयन संस्कार प्राप्त कर विश्वास पूर्वक भक्ति युक्त हृदय में जिस प्रकार मेरा अर्च्चन करेगा, उसकी रीति को कहता हूँ: अवहित चित्त से श्रवण करो, अर्च्चा विग्रह में स्थण्डिल में अग्नि में सूर्य्य, जल, हृदय, द्विज, निज गुरु में निष्कपट भाव से भक्ति युक्त अन्तः करण से पूजोपयोगि विहित द्रव्य के द्वारा मेरी पूजा करे। इत्यादि प्रकरणोक्त विधि के द्वारा जो मानव मेरी पूजा करता है। वह अहैतुकी भक्ति योग को प्राप्त कर सकता है।

प्रकरण प्रवक्ता श्रीभगवान् हैं॥२३५॥

२३६। जिस प्रकार अर्च्चन विषयक विधि का कथन हुआ है, उस प्रकार एकादशी, जन्माष्टमी प्रभृति भी विहित है। अर्थात् श्रीभगवदर्च्चन जिस प्रकार कर्त्तव्य है, उस प्रकार एकादशी जन्माष्टमी प्रभृति श्रीभगवद् व्रतादि भी अवश्य पालनीय है।

अनन्तर वैधी के भेद निरूपण करते हैं। श्रीभगवत् शरणापत्ति, श्रीगुरु प्रभृति साधु वृन्द की सेवा एवं श्रवण कीर्त्तन प्रभृति को जानना होगा। यह शरणापत्ति प्रभृति भक्त्यङ्ग समूह—एकक-अथवा दो वा तीन अङ्ग एकत्र मिलित होकर भाव प्राप्ति के प्रति कारण होते हैं। इस का वर्णन शास्त्र में है। उक्त भक्त्यङ्ग समूह के मध्य में प्रथमउक्त शरणापत्ति का लक्षण वर्णन करते हैं। काम क्रोध लोभ, मोह, मद, मात्सर्य्य—यह षड् वर्ग रिपुकृत संसार भय से बाध्यमान मानव अनन्योपाय होकर श्रीभगवच्चरणार विन्द में शरण ग्रहण करता है। भक्ति में जिस की कामना है वे भी काम क्रोधादि कृत भगवद् वैमुख्य दोष के द्वारा बाधित होकर श्रीभगवच्चरणों में शरण ग्रहण करते हैं। अर्थात् साधारण

भवन्ति, तथा श्रवणात् । तत्र प्रथमतः शरणापत्तिः,–षड्‌वर्गाद्यरिकृत-संसारभयबाध्यमान एव हि शरणं प्रविशत्यनन्यगतिः । भक्तिमात्रकामोऽपि तत्कृत-भगवद्वैमुख्यबाध्यमानः । अनन्यगतित्वञ्च द्विधा दर्श्यते,--आश्रयान्तरस्याभाव-कथनेन, नातिप्रज्ञया कथञ्चिदाश्रितस्यान्यस्य त्याजनेन च । पूर्वेण यथा (भा० १०।३।२७) —

"मर्त्यो मृत्युव्यालभीतः पलायन्, लोकान् सर्वान् निर्भयं नाध्यगच्छत् ।
त्वत्पादाब्जं प्राप्य यदृच्छयाद्य, स्वस्थः शेते मृत्युरस्मादपैति ।।" ५८८ ।। इति ।

उत्तरेण यथा (भा० ११।१२।१४--१५) —

"तस्मात्त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनाम् ।
प्रवृत्तञ्च निवृत्तञ्च श्रोतव्यं श्रुतमेव च ।।६८६।।
मामेकमेव शरणमात्मानं सर्वदेहिनाम् ।
याहि सर्वात्मभावेन मया स्या ह्यकुतोभयः ।।" ६६०।। इति ।

---

व्यक्ति, संसार भय से भीत होकर श्रीभगवान् की शरण ग्रहण करता है, और भक्ति कामी व्यक्ति श्रीभगवद् विमुखता निवारण हेतु उन के चरणों में शरण ग्रहण करते हैं । इस प्रकार शरण ग्रहण कारी को अनन्य गति कहते हैं । यह अनन्य गति—दो प्रकार हैं । उस के मध्य में श्रीहरि भिन्न आश्रयान्तर का अभाव कथन के द्वारा प्रथम प्रकार है । अतिशय ज्ञानाभाव के कारण—अर्थात् श्रीहरि ही एकमात्र आश्रय तत्त्व हैं, और सब आश्रित तत्त्व हैं । यह न जानकर अन्य देवता का आश्रय ग्रहण के पश्चात् शास्त्रादि श्रवण जनित ज्ञान से हो, अथवा महत् के उपदेश से ही हो, आश्रित देवतान्तर को परित्याग करके श्रीभगवान् का आश्रय ग्रहण करना द्वितीय अनन्य गति है । उस के मध्य में पूर्व अनन्य गति अर्थात् अन्य आश्रय का अभाव कथन के द्वारा शरणा गति का दृष्टान्त भा० १०।३।२७ में है—

"मर्त्यो मृत्युव्यालभीतः पलायन्, लोकान् सर्वान् निर्भयं नाध्यगच्छत् ।
त्वत्पादाब्जं प्राप्य यदृच्छयाद्य, स्वस्थः शेते मृत्युरस्मादपैति ।।" ६८८ ।

टीका—क्षेमधामत्वमेवाह मर्त्य इति । लोकान् प्रति यदृच्छया केनापि भाग्योदयेन । हे आद्य ।

श्रीदेवकी देवी स्तव करके श्रीकृष्ण को कंस कारागार में बोली थीं । हे आद्य ! मरण धर्म परायण मानव मृत्यु रूप काल सर्पभय से भीत होकर सर्वत्र पलायन करके कहीं पर निर्भय स्थान प्राप्त नहीं किया, कारण, आब्रह्म स्तम्ब पर्य्यन्त समस्त लोक ही काल कवलित हैं । सुतरां कहीं पर मृत्यु भय निवारित नहीं होता है । किसी अनिर्वचनीय भाग्योदय के कारण महत् सङ्ग वा महत् कृपा से सौभाग्योदय होने से तुम्हारे चरणारविन्द में आश्रय प्राप्तकर निश्चिन्त होकर शयन करता है एवं मृत्यु उस मानव को देखकर पलायन करती है । आश्रयान्तर त्याग पूर्वक श्रीकृष्ण को आश्रय रूप में ग्रहण करने का प्रमाण अर्थात् अनन्यगति के द्वितीय कल्प का प्रमाण भा० ११।१२।१४--१५ में है—

"तस्मात्त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनाम् ।
प्रवृत्तञ्च निवृत्तञ्च श्रोतव्यं श्रुतमेव च ।।६८६।।
मामेकमेव शरणमात्मानं सर्वदेहिनाम् ।
याहि सर्वात्मभावेन मया स्या ह्यकुतोभयः ।।" ६६०।।

"चोदनां श्रुतिम्, प्रतिचोदनां स्मृतिम्" इति टीका च। श्रीगीतासु च (१८।६६) "सर्व-धर्मान् परित्यज्य" इत्यादि। तस्याः शरणापत्तेर्लक्षणं वैष्णवतन्त्रे–

"आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यविवर्जनम्। रक्षिष्यतीति विश्वासो गोप्तृत्वे वरणं तथा ॥६६१॥
आत्मनिक्षेप--कार्पण्ये षड्विधा शरणागतिः ॥"६६२॥ इति।

अङ्गाङ्गि-भेदेन षड्विधा, तत्र गोप्तृत्वे वरणमेवाङ्गि,–शरणागति--शब्देनैकार्थ्यात्, अन्यानि त्वङ्गानि, तत्परिकरत्वात्, आनुकूल्य-प्रातिकूल्ये तद्भक्तादीनाम्, शरणागतस्य भावस्य वा, रक्षिष्यतीति विश्वासः (भा० ३।१६।३७) –"क्षेमं विधास्यति स नो भगवांस्त्र्यधीशः" इत्यादि

---

टीका—यस्मादेवम्भूतो मद् भजनप्रभावस्तस्मात् त्वं चोदनां श्रुतिं प्रति चोदनां स्मृतिञ्च, यद्वा, विधिञ्च निषेधञ्च उत्सृज्य मां शरणं याहि मयैव अकुतोभयः स्याः भव ॥१४–१५॥

श्रीकृष्ण उद्धव को कहे थे—हे उद्धव! श्रौत विधि एवं स्मार्त्तविधि अथवा, विधिनिषेध, प्रवृत्ति निवृत्ति, एवं श्रोतव्य—श्रुत विषय परित्याग पूर्वक सर्वदेहिवृन्द का आत्मा एकमात्र मेरी सर्वान्तः करण से तुम शरण लो। मेरेद्वारा तुम अकुतोभय हो जाओगे। अर्थात् भय शून्य हो जाओगे। श्रीमद् भगवद् गीता के १८।३६ में भी उक्त है—

"सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥

हे अर्जुन! तुम समस्त धर्मो को परित्याग करके अर्थात् समस्त धर्मानुष्ठान के प्रति आवेश को छोड़कर एवं मात्र मेरी शरण लो। मैं तुम को निखिल अन्तराय से रक्षा करूँगा। ज्ञातिबध हेतु शोक मत करो। उस शरणापत्ति के लक्षण, वैष्णव तन्त्र में उक्त है।

"आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यविवर्जनम्।
रक्षिष्यतीति विश्वासो गोप्तृत्वे वरणं तथा ॥६६१॥
आत्मनिक्षेप-कार्पण्ये षड्विधा शरणागतिः ॥"६६२॥

इन षट् लक्षणों के मध्य में गोप्तृत्व में वरण अर्थात् श्रीभगवान् को रक्षक रूप में वरण करना, भगवान् ही रक्षा करेंगे। इस प्रकार निर्भरता ही शरणा गति का अङ्गी है, एवं अपर पाँच अङ्ग हैं। शरणा गति शब्द के सहित 'गोप्तृत्वेवरणं' गोप्तारूप में वरण, की एकार्थता है, अतः यह अङ्गी है। और अन्य पञ्चाङ्ग उस के परिकर होने के कारण अङ्ग स्थानीय हैं। आनुकूल्य का ग्रहण, अर्थात् जो करने से श्रीभगवान् सन्तुष्ट होते हैं, काय, वाक्य मन के द्वारा उस प्रकार आचरण करना, अथवा शरणागत भाव के जो जो प्रतिकूल हैं, उस को काय वाक्य मन के द्वारा परित्याग करना। 'रक्षिष्यतीति विश्वासः' अर्थात् वही रक्षा कर्त्ता हैं, मेरी रक्षा करेंगे, इस प्रकार दृढ़ विश्वास करना। "क्षेमं विधास्यति स नो भगवांस्त्र्यधीशः" निर्गुण माया नियन्ता भगवान् मङ्गल विधान करेंगे- इस प्रकार विश्वास करना। आत्मनिक्षेप—अर्थात् श्रीभगवान् में आत्मसमर्पण करना। इस का प्रकार गौतमीय तन्त्र में लिखित है—'केनापि देवेन हृदिस्थितेन यथा नियुक्तोऽस्मि तथा करोमि। मेरे हृदय में अवस्थित किसी देवता के द्वारा में जिस प्रकार नियुक्त हो रहा हूँ। इस प्रकार ही कार्य्य कर रहा हूँ। इस विषय में मेरा कुछ भी स्वातन्त्र्य नहीं है। इस प्रकार भावना का नाम आत्मनिक्षेप वा आत्मसमर्पण है। उस का संक्षेप यह है—

(१) श्रीभगवद् भजनानुकूल्य करने का सङ्कल्प, अर्थात भगवद् भजन ही कर्त्तव्य है—इस प्रकार नियम करना। (२) भगवद् भजन के प्रतिकूल आचरण न करना। (३) श्रीभगवान् मेरी रक्षा करेंगे–

प्रकारः, आत्मनिक्षेपः—"केनापि देवेन हृदि स्थितेन, यथा नियुक्तोऽस्मि तथा करोमि" इति गौतमीयतन्त्रोक्त-प्रकारः, यथोक्तं पाद्मोत्तरखण्डे चाष्टाक्षरस्य नमः-शब्द-व्याख्याने,—

"अहङ्कृतिर्मकारः स्यान्नकारस्तन्निषेधकः। तस्मात्तु मनसा क्षेत्रि-स्वातन्त्र्यं प्रतिषिध्यते ॥६९३॥
भगवत्परतन्त्रोऽसौ तदायत्तात्मजीवनः। तस्मात् स्वसामर्थ्यविधिं त्यजेत् सर्वमशेषतः। ६९४॥
ईश्वरस्य तु सामर्थ्यान्नालभ्यं तस्य विद्यते। तस्मिन् न्यस्तभरः शेते तत्कर्मैव समाचरेत् ॥६९५॥ इति।

अतएव ब्रह्मवैवर्त्ते—

"अहङ्कारनिवृत्तानां केशवो न हि दूरगः। अहङ्कारयुतानां हि मध्ये पर्वतराशयः॥" ६९६॥ इति।

अतएव तृतीये ब्रह्मस्तवे स्वातन्त्र्याभिमानिनः संसारः श्रूयते, (भा० ३।९।९) —

"यावत् पृथक्त्वमिदमात्मन इन्द्रियार्थ-
मायाबलं भगवतो जन ईश पश्येत्।
तावन्न संसृतिरसौ प्रतिसंक्रमेत
व्यर्थापि दुःखनिवहं वहती क्रियार्था ॥६९७॥ इति।

---

इस प्रकार सुदृढ़ विश्वास (४) रक्षक रूप में उन को स्वीकार करना वा उन के निकट प्रार्थना करना। (५) श्रीभगवान् में आत्म समर्पण' (६) कार्पण्य दैन्य—प्रकटन—अर्थात् हे भगवन्! 'मेरी रक्षा करो, कहकर कातरता प्रकटन। पाद्मोत्तर पुराण के अष्टाक्षर मन्त्र व्याख्यान प्रसङ्ग में लिखित है—

"अहङ्कृतिर्मकारः स्यान्नकारस्तन्निषेधकः।
तस्मात्तु मनसा क्षेत्रि-स्वातन्त्र्यं प्रतिषिध्यते ॥६९३॥
भगवत्परतन्त्रोऽसौ तदायत्तात्मजीवनः।
तस्मात् स्वसामर्थ्यविधिं त्यजेत् सर्वमशेषतः ॥६९४॥
ईश्वरस्य तु सामर्थ्यान्नालभ्यं तस्य विद्यते।
तस्मिन् न्यस्तभरः शेते तत्कर्मैव समाचरेत् ॥"६९५॥

"नमस्' जो 'मकार' है उस का अर्थ है—अहङ्कार. 'नकार' का अर्थ है उस का निषेध। अर्थात् अहङ्कार शून्यता। अतएव 'नमस्' शब्द के द्वारा जीव का स्वातन्त्र्य निषिद्ध हुआ है। जीव--नित्य ही परतन्त्र है, जीव का जीवन, सर्वदा ही भगवान् के अधीन है। अतएव अशेष प्रकार से निज समस्त सामर्थ्य विधि को परित्याग करे। अर्थात् मैं ही सब कुछ करूँगा, मेरी सामर्थ्य सब कुछ करने की ही—इस प्रकार चिन्ता न करे। ईश्वर की सामर्थ्य से जीव का कुछ अलभ्य नहीं रह जाता है। श्रीभगवान् में निर्भरता रखकर चले एवं श्रीभगवान् का ही कर्म्म करे। अतएव ब्रह्मवैवर्त्त में उक्त है—

"अहङ्कारनिवृत्तानां केशवो न हि दूरगः।
अहङ्कारयुतानां हि मध्ये पर्वतराशयः॥"६९६

अहङ्कार शून्य व्यक्ति वृन्द के पक्ष में केशव दूर गामी नहीं हैं। अहङ्कार युक्त व्यक्ति वृन्द के मध्य में राशि राशि पर्वत विद्यमान हैं। अर्थात् श्रीहरि उन से बहुदूर में विद्यमान हैं। श्रीहरि सान्निध्य लाभ करना उन के पक्ष में बहु काल साध्य है। अतएव भा० ३।९।९ के ब्रह्मस्तव में स्वातन्त्र्याभिमानी का संसार वर्णित है।

"यावत् पृथक्त्वमिदमात्मन इन्द्रियार्थ--
मायाबलं भगवतो जन ईश पश्येत्।

कार्पण्यम् (पद्यावली ६६),--"परमकारुणिको न भवत्परः, परमशोच्यतमो न च मत् परः" इत्यादि--प्रकारम्, गोप्तृत्वे वरणञ्च, यथा नारसिंहे—

त्वां प्रपन्नोऽस्मि शरणं देवदेवं जनार्द्दनम् । इति यः शरणं प्राप्तस्तं क्लेशादुद्धराम्यहम् ॥"६९८॥

इति-प्रकारम्, तदपि त्रिप्रकारं कायिकत्वादि-भेदेन, यथोक्तं ब्रह्मपुराणे—

"कर्मणा मनसा वाचा येऽच्युतं शरणं गताः । न समर्थो यमस्तेषां ते मुक्तिफलभागिनः ॥"६९९॥ इति ।

व्याख्यातं श्रीहरिभक्तिविलासे (११।६७७)—

"तवास्मीति वदन् वाचा तथैव मनसा विदन् । तत्स्थानमाश्रितस्तन्वा मोदते शरणागतः ॥७००॥ इति ।

---

तावन्न संसृतिरसौ प्रतिसंक्रमेत
व्यर्थापि दुःखनिवहं वहती क्रियार्था ॥"६९७॥

टीका—ननु एवम्भूतायाः संसृतेरपरमार्थत्वात् किमर्थं विबाधः क्रियते ? तत्राह । यावदिति । आत्मन इदं पृथक्त्वं देहादि भावम् भगवत स्तव इन्द्रियार्थ रूपा या माया तया बलम्—आधिक्यं यस्य तत् । न प्रति संक्रमेत् नोपरमेत । दुःख समूहं प्रापयन्ती । क्रिय.र्थामर्थः फलं यस्याम् ।

हे भगवन् ! जब तक ऐन्द्रियक भोग विषय में माया ने जो निज सामर्थ्य प्रकाश कर रखा है, जो मानव, मायाकृत उस देहादि धर्म को श्रीभगवान् से पृथक् मानता है, अर्थात् इस में निज स्वतन्त्रता है, इस प्रकार अभिमान करता है, उस के सम्बन्ध में संसार वृथा होने पर भी निवृत्त नहीं होता है, वह संसार निवृत्ति हेतु जो कुछ करता रहता है—उस के द्वारा वह भूरि भूरि दुःख भोग ही करता है । कार्पण्य शब्द से कातरता वा दैन्य निवेदन को जानना होगा । पद्यावली ६६ में कार्पण्य प्रकटन प्रकार का उल्लेख है— "परम कारुणिको न भवत् परः, परम शोच्यतमो न च मत्परः ॥"

हे नाथ ! आप के समान परम कारुणिक कोई भी नहीं हैं, और मुझ से—अधिक शोच्यतम भी कोई नहीं है । इत्यादि प्रकार निज हृदय की कातरता प्रकटन का नाम कार्पण्य है । गोप्तृत्वेवरणञ्च-श्रीभगवान् को रक्षक रूप में वरण करना नरसिंह पुराण में उक्त है—

"त्वां प्रपन्नोऽस्मि शरणं देवदेवं जनार्द्दनम् ।
इति यः शरणं प्राप्तस्तं क्लेशादुद्धराम्यहम् ॥"६९८॥

जो वाक्य से भी प्रकाश करता है—"हे देव देव जनार्द्दन ! मैंने आप की शरण ग्रहण किया" इस प्रकार से जो मेरी शरण ग्रहण करता है । मैं उस को क्लेश से उद्धार करता हूँ । इस प्रकार भाव प्रकाश का नाम गोप्तृत्वे वरणम्--अर्थात् रक्षक रूप में वरण करना है । यह 'गोप्तृत्वेवरणम्' कायिक, वाचिक, मानस भेद से तीन प्रकार हैं । ब्रह्म वैवर्त्त पुराण में लिखित है—

"कर्मणा मनसा वाचा येऽच्युतं शरणं गताः ।
न समर्थो यमस्तेषां ते मुक्तिफलभागिनः ॥"६९९॥

जिन्होंने काय, वाक्य एवं मन के द्वारा श्रीहरि की शरण ली है । उनके प्रति दण्ड धारण करने में यम भी सक्षम नहीं हैं, एवं वे मुक्ति प्राप्त करने के अधिकारी हैं ।

श्रीहरिभक्ति विलास के ११।६७७ में शरणागति की व्याख्या हुई है ।

"तवास्मीति वदन् वाचा तथैव मनसा विदन् ।
तत्स्थानमाश्रितस्तन्वा मोदते शरणागतः ॥"७००॥

तदेवं यस्य सर्व्वाङ्गसम्पन्ना शरणापत्तिस्तस्य झटित्येव सम्पूर्णफला, अन्येषान्तु यथासम्पत्ति यथाक्रमञ्चेति ज्ञेयम् । तामेतां शरणापत्तिं श्लाघते, (भा० ११।१९।९) –

(२३६) "तापत्रयेणाभिहतस्य घोरे, सन्तप्यमानस्य भवाध्वनीश ।
पश्यामि नान्यच्छरणं तवाङ्घ्रि-,द्वन्द्वातपत्रादमृताभिवर्षात् ॥"७०१॥

शरणागतानां सर्व्वदुःखदुरीकरणं निजमाधुरीणां सर्व्वतोवर्षञ्चात्राभिहितम् । उद्धवः श्रीभगवन्तम् ॥

२३७ । तदेवं शरणापत्तिर्विवृता । अस्याश्च पूर्व्वत्वम्–तां विना तदीयत्वासिद्धेः । तत्र यद्यपि शरणापत्त्यैव सर्व्वं सिध्यति—

"शरणं तं प्रपन्ना ये ध्यानयोगविवर्ज्जिताः ते वै मृत्युमतिक्रम्य यान्ति तद्वैष्णवं पदम् ॥"७०२॥

---

"हे नाथ ! मैं तुम्हारा हूँ" इस प्रकार उक्ति–वाक्य के द्वारा, मन में भी उसी प्रकार भावना करना, शरीर के द्वारा निज अभीष्ट प्रिय के स्थान को आश्रय करने से शरणागत जन सुखी हो सकता है । ऐसा होने पर पूर्वोक्त प्रकार से जिस की शरणागति परिपूर्णाङ्ग होती है । उस को फल लाभ अतिसत्वर ही होता है । और जिस की सर्वाङ्ग पूर्ण शरणागति नहीं हुई है,अंश विशेष में त्रुटि रह गई है । उस की शरणागति की तरतमता के अनुसार फल प्राप्ति की तरतमता भी होती है । इस प्रकार समझना होगा ।

श्रीमद्भागवत के ११।१९।९ में श्रीभगवान् के निकट श्रीउद्धव ने इस प्रकार शरणागति की प्रशंसा की है—

(२३६) "तापत्रयेणाभिहतस्य घोरे, सन्तप्यमानस्य भवाध्वनीश ।
पश्यामि नान्यच्छरणं तवाङ्घ्रि,-द्वन्द्वातपत्रादमृताभिवर्षात् ॥"७०१॥

टीका—महद्विमृग्यत्वमभिनयेनाह । तापत्रयेणेति । तापत्रयेणाभितो हतस्य अतःसन्तप्यमानस्य अङ्घ्रिद्वन्द्वमेवातपत्रं तस्मात् ।

हे ईश ! इस संसार पथ में त्रितापसन्तप्त मानव के पक्ष में अमृत वर्षण कारी तुम्हारे चरण युगल रूप आतपत्र (छत्र) को छोड़कर और कोई रक्षक नहीं है । शरणागत जन के समस्त दुःख विदूरित करना एवं शरणागत जन को सर्वतो भावेन अमृत वर्षण द्वारा अभिषिक्त करना ही तुम्हारे चरण युगल का अवदान है । अतः अमृताभिवर्षुक का उल्लेख श्रीचरणों का विशेषण रूप में हुआ है ।

उद्धव श्रीभगवान् को कहे थे ॥२३६॥

२३७ । पूर्वोक्त प्रकार से शरणापत्ति का वर्णन विस्तृत रूप से हुआ । सर्व प्रथम शरणापत्ति का ही प्रयोजन है, कारण, शरणापत्ति के बिना तदीयत्व की सिद्धि नहीं होती है । अर्थात् जो श्रीभगवान् का होना चाहता है—उस के पक्ष में भगवत् शरणापत्ति परम आवश्यक है । यद्यपि शरणापत्ति के द्वारा ही समस्त भजन निष्पन्न होते हैं—इस का वर्णन गरुड़ पुराण में हैं—

"शरणं तं प्रपन्ना ये ध्यानयोगविवर्ज्जिताः ।
ते वै मृत्युमतिक्रम्य यान्ति तद्वैष्णवं परम् ॥"७०२॥

जिन्होंने श्रीभगवान् की शरण ग्रहण किया है, उन के द्वारा ध्यान योग के बिना भी मृत्यु ग्रस्त संसार का अतिक्रम हो जाता है । एवं विष्णु पद लाभ भी होता है । इस में कोई संशय नहीं है । तथापि—भजनानुष्ठान का आस्वादन वैशिष्ट्य लाभ हेतु यदि समर्थ हो तो, श्रीभगवत् प्रति पादक शास्त्रोपदेष्टा

इति गारुड़ात्,तथापि वैशिष्ट्यलिप्सुः शक्तश्चेत्ततो भगवच्छास्त्रोपदेष्टॄणां भगवन्मन्त्रोपदेष्टॄणां वा श्रीगुरुचरणानां नित्यमेव विशेषतः सेवां कुर्य्यात् । तत्प्रसादो हि स्व-स्व-नानाप्रतीकार-दुस्त्यजानर्थ-हानौ परमभगवत्प्रसादसिद्धौ च मूलम् । पूर्व्वत्र यथा सप्तमे श्रीनारदवाक्यम् (भा० ७।१५।२२--२५) —

असङ्कल्पाज्जयेत् कामं क्रोधं कामविवर्जनात् ।
अर्थानर्थेक्षया लोभं भयं तत्त्वावमर्शनात् ।।७०३।।
आन्विक्षिक्या शोक-मोहौ दम्भं महदुपासया ।
योगान्तरायान् मौनेन हिंसां कामाद्यनीहया ।।७०४।।
कृपया भूतजं दुःखं दैवं जह्यात् समाधिना ।
आत्मजं योगवीर्य्येण निद्रां सत्त्वनिषेवया ।।७०५।।
रजस्तमश्च सत्त्वेन सत्त्वञ्चोपशमेन च ।
एतत् सर्वं गुरौ भक्त्या पुरुषो ह्यञ्जसा जयेत् ।।"७०६।।

---

अथवा भगवन्मन्त्रोपदेष्टा श्रीगुरु चरण की विशेष सेवा नित्य करे । कारण, श्रीगुरु कृपा से ही विभिन्न प्रतीकार के उपायों के द्वारा जो सब अनर्थ निवृत्त नहीं होते हैं, वह सब अनर्थ अनायास निवृत्त हो जाते हैं । एवं श्रीभगवान् के परम अनुग्रह लाभ का भी एक मात्र उपाय, श्रीगुरु कृपा ही है । शास्त्रोपदेष्टा गुरु की अनुकम्पा से जो सर्वानर्थ विदूरित होते हैं, उस का वर्णन भा० ७।१५।२२--२५ में हैं—

"असङ्कल्पाज्जयेत् कामं क्रोधं कामविवर्जनात् ।
अर्थानर्थेक्षया लोभं भयं तत्त्वावमर्शनात् ।।७०३।।
आन्विक्षिक्या शोक--मोहौ दम्भं महदुपासया ।
योगान्तरायान् मौनेन हिंसां कामाद्यनीहया ।।७०४।।
कृपया भूतजं दुःखं दैवं जह्यात् समाधिना ।
आत्मजं योगवीर्य्येण निद्रां सत्त्वनिषेवया ।।७०५।।
रजस्तमश्च सत्त्वेन सत्त्वञ्चोपशमेन च ।
एतत् सर्वं गुरौ भक्त्या पुरुषो ह्यञ्जसा जयेत् ।।"७०६।।

टीका—इदानीं कामादि जयोपायानाह असंकल्पादिति चतुर्भिः । जयेदिति यथापेक्षमन्वेति । अर्थेऽनर्थ दर्शनेन । तत्त्वावमर्षणात् अद्वैतानुसन्धानेन ।२२। आन्वीक्षिक्या आत्मानात्मविवेकेन । महतां सात्त्विकानां सेवया । योगस्यान्तरायान् लोकवार्त्तादीन् ।।२३।। येभ्यो भूतेभ्यो भयं जायते तेष्वेव कृपया हिताचरणेन दैवं दैवोपसर्ग निमित्तं वृथा मनः पीड़ादि । तदुक्तं याज्ञवल्क्येन, विमला विफलारम्भः संसीदत्यनिमित्तत इति । आत्मजं--देहजं योग वीर्य्येण प्राणायामादि बलेन सत्त्व निषेवया सात्त्विकाहारादिना ।।२४ २५ ।

श्रीयुधिष्ठिर महाराज के प्रति देवर्षि नारद कहे थे—हे राजन् ! सङ्कल्प परित्याग के द्वारा कामजय करे । काम त्याग के द्वारा क्रोध को, विदूरित करे । अर्थ में अनर्थ दृष्टि के द्वारा लोभ को जय करे । दुःख के हेतु है, इस बुद्धि से अथवा सर्वथा अद्वैत अनुसन्धान द्वारा, किंवा लोभनीय वस्तु में भविष्यत् काल में अनर्थ दृष्टि रखकर लोभ को विदूरित करे । आन्वीक्षिकी विद्या द्वारा अर्थात् आत्मानात्म जड़ चेतन विचार

उत्तरत्र वामनकल्पे ब्रह्मवाक्यम्—

'यो मन्त्रः स गुरुः साक्षाद् यो गुरुः स हरिः स्वयम् । गुरुर्यस्य भवेत्तुष्टस्तस्य तुष्टो हरिः स्वयम् ।।"७०७।।

अन्यत्र—

"हरौ रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन । तस्मात् सर्वप्रयत्नेन गुरुमेव प्रसादयेत् ।।७०८।। इति ।

अतएव सेवामात्रन्तु नित्यमेव, यथा-चान्यत्र परमेश्वरवाक्यम्—

"प्रथमन्तु गुरुं पूज्य ततश्चैव ममार्चनम् । कुर्वन् सिद्धिमवाप्नोति ह्यन्यथा निष्फलं भवेत् ।।"७०९।। इति ।

अतएव नारदपञ्चरात्रे—

"वैष्णवं ज्ञानवक्तारं यो विद्याद्विष्णुवद्गुरुम् । पूजयेद्वाङ् मनः कायैः स शास्त्रज्ञः स वैष्णवः ।।७१०।।

---

के द्वारा शोक मोह को अतिक्रम करे । महापुरुष की सेवा के द्वारा दम्भ को जय करे । मौनावलम्बन के द्वारा साधन का अन्तराय लोकवार्त्तादि को जय करे । विषय भोगादि के प्रति चेष्टा को परित्याग करके हिंसा को जय करे । जिस प्राणी से दुःख उपस्थित होता है, उस के प्रति कृपा करके दुःख जय करे । श्रीभगवान् में चित्त की एकाग्रता रूप समाधि द्वारा दैव दुःख को विदूरित करे । प्राणायामादि योग बल से दैहिक दुःख विदूरित करे । सात्त्विक भोजनादि के द्वारा निद्राजय करे । सत्त्व गुण के द्वारा रजस्तमो गुण को जय करे । उपशमात्मक सत्त्व गुण के द्वारा विक्षेपात्मक सत्त्व गुण को जय करे । श्रीगुरुचरणों में अचला भक्ति के प्रभाव से उल्लिखित अन्तराय समूह को मानव, सुख पूर्वक विदूरित कर सकता है । श्रीभगवान् की परमानुग्रह प्राप्ति का परम उपाय एकमात्र श्रीगुरुचरण कृपा ही है । मन्त्रोपदेष्टा गुरु सेवा के विषय में वामन कल्प में श्रीब्रह्माने कहा है—

"यो मन्त्रः स गुरुः साक्षाद् यो गुरुः स हरिः स्वयम् ।
गुरुर्यस्य भवेत्तुष्टस्तस्य तुष्टो हरिः स्वयम् ।।"७०७।।

मन्त्र ही साक्षात् श्रीगुरु हैं, जो गुरु वही स्वयं श्रीहरि हैं, जिस के प्रति श्रीगुरु सन्तुष्ट होते हैं, स्वयं श्रीहरि--उस के प्रति सन्तुष्ट होते हैं । अन्यत्र भी वर्णित है—

"हरौ रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन ।
तस्मात् सर्वप्रयत्नेन गुरुमेव प्रसादयेत् ।।"७०८।।

श्रीहरि रुष्ट होने पर श्रीगुरुदेव रक्षा कर सकते हैं । किन्तु श्रीगुरुदेव रुष्ट होने से कोई भी रक्षा करने से समर्थ नहीं हैं । अतएव कायिक् वाचिक, मानसिक प्रयत्न के द्वारा श्रीगुरु चरण की सेवा करनी चाहिये । एकमात्र श्रीगुरु चरण की सेवा के द्वारा साधक पूर्णता एवं प्रकृष्ट शान्ति को प्राप्त कर सकता है । अन्यत्र श्रीपरमेश्वर जो कुछ कहे हैं—उस में भी सुस्पष्ट है कि—श्रीगुरु चरण की सेवा के द्वारा ही जीव सर्वार्थ लाभ कर सकता है—

"प्रथमन्तु गुरुं पूज्य ततश्चैव ममार्चनम् ।
कुर्वन् सिद्धिमवाप्नोति ह्यन्यथा निष्फलं भवेत् ।।"७०९।।

प्रथमतः श्रीगुरुदेव की पूजा करके, अनन्तर मेरी पूजा करने से ही साधक सिद्धि लाभ कर सकता है । ऐसा न करने पर अर्च्चन निष्फल होता है । अतएव नारद पञ्चरात्र में उक्त है—

"वैष्णवं ज्ञानवक्तारं यो विद्याद्विष्णुवद्गुरुम् ।
पूजयेद्वाङ्मनःकायैः स शास्त्रज्ञः स वैष्णवः ।।७१०।।

श्लोकपादस्य वक्तापि यः पूज्यः स सदैव हि ।
किं पुनर्भगवद्विष्णोः स्वरूपं वितनोति यः ॥''७११॥ इत्यादि ।

पाद्मे देवद्युति--स्तुतौ–

''भक्तिर्यथा हरौ मेऽस्ति तद्वरिष्ठा गुरौ यदि । ममास्ति तेन सत्येन सन्दर्शयतु मे हरिः ॥''७१२॥ इति ।

तस्मादन्यद्भगवद्भजनमपि नापेक्षते, यथोक्तमागमे पुरश्चरणफलप्रसङ्गे–

''यथा सिद्धरसस्पर्शात् ताम्रं भवति काञ्चनम् । सन्निधानाद्गुरोरेवं शिष्यो विष्णुमयो भवेत् ॥''७१३॥

तदेतदाह (भा० १०।८०।३४)—

(२३७) ''नाहमिज्या--प्रजातिभ्यां तपसोपशमेन वा ।
तुष्येयं सर्वभूतात्मा गुरुशुश्रूषया यथा ॥''७१४॥

टीका च–ज्ञानप्रदाद् गुरोरधिकः सेव्यो नास्तीत्युक्तम् । अतएव तद्भजनादधिको धर्मश्च

---

श्लोकपादस्य वक्तापि यः पूज्यः स सदैव हि ।
किं पुनर्भगवद्विष्णोः स्वरूपं वितनोति यः ॥''७११॥

जो ज्ञानोपदेष्टा वैष्णव गुरु को विष्णु तुल्य जानता है, एवं कायवाक्य मन से श्रीगुरु देव की पूजा करता है । वही शास्त्रज्ञ एवं वैष्णव है । जो भागवतीय श्लोक के एकपाद का भी उपदेश करते हैं, वह जो सर्वथा पूज्य हैं, इस में संशय क्या है ?

पद्म पुराण की देवद्युति स्तुति में वर्णित है—

''भक्तिर्यथा हरौ मेऽस्ति तद्वरिष्ठा गुरौ यदि ।
ममास्ति तेन सत्येन सन्दर्शयतु मे हरिः ॥''७१२॥

श्रीहरि में मेरी जिस प्रकार निष्ठा है श्रीगुरुदेव में यदि उस से अधिक परिमाण में निष्ठा हो तो उस सत्य से श्रीहरि मुझ को दर्शन दान करें । अतएव श्रीगुरुचरणों में एकान्त अनुरागी की उक्ति से प्रतीत होता है कि श्रीगुरुचरणानुरागी के पक्ष में अन्य भगवद् भजन की अपेक्षा नहीं है ।

जिस प्रकार आगम में पुरश्चरण फल प्रसङ्ग में उक्त है—

''यथा सिद्ध रसस्पर्शात् ताम्रं भवति काञ्चनम् ।
सन्निधानाद्गुरोरेवं शिष्यो विष्णुमयो भवेत् ॥''७१३॥

जिस प्रकार सिद्धरस–पारद– स्पर्श से ताम्र सुवर्ण होता है । उस प्रकार श्रीगुरु के सन्निधान में स्थित शिष्य भी विष्णुमय होता है ।

उस विषय का वर्णन भा० १०।८७।३४ में इस प्रकार है—

(२३७) ''नाहमिज्या--प्रजातिभ्यां तपसोपशमेन वा ।
तुष्येयं सर्वभूतात्मा गुरुशुश्रूषया यथा ॥''७१४॥

श्रीकृष्ण भी श्रीदाम विप्र को कहे थे—मैं इज्या—गृहस्थधर्म प्रजाति—प्रकृष्ट जन्म उपनयन, अर्थात् ब्रह्मचारिधर्म, तपस्या–अर्थात् वनस्थ धर्म, उपशम--सन्न्यासधर्म, अथवा यतिधर्म द्वारा परमेश्वर मैं उस प्रकार सन्तुष्ट नहीं होता हूँ, जिस प्रकार सर्व भूतात्मा होकर भी मैं गुरु सेवा से सन्तुष्ट होता हूँ । स्वामिपाद कृत टीका का मर्म्मार्थ यह है-ज्ञान प्रद श्रीगुरुदेव से अधिक सेव्य और नहीं है । इसका वर्णन पहले हुआ है। अतएव श्रीगुरुचरण के सेवा से अधिक धर्म नहीं है । उक्त टीका का सारार्थ यह है । ज्ञान प्रद गुरु से अधिक सेव्य नहीं है—यहाँ ज्ञान शब्द से द्विविध अर्थ बोध होते हैं, एक ब्रह्म ज्ञान निष्ठ, अपर भगवन्निष्ठ

नास्तीत्याह,--नाहमिति । इज्या गृहस्थधर्मः, प्रजातिः प्रकृष्टं जन्मोपनयनम्, तेन ब्रह्मचारि-धर्म उपलक्ष्यते, ताभ्याम्, तथा तपसा वनस्थधर्मेण, उपशमेन यतिधर्मेण वा । अहं परमेश्वर-स्तथा न तुष्येयम्, यथा सर्वभूतात्मापि गुरुशुश्रूषया ।" इत्येषा । अत्र ज्ञानं ब्रह्मनिष्ठं भगवन्निष्ठञ्चेति द्विविधम् । अत्र पूर्वत्र तथैव व्याख्या, उत्तरत्र त्वेवम्,-इज्या पूजा, प्रजाति-र्वैष्णवदीक्षा, तपः समाधिः, उपशमो भगवन्निष्ठेति ।। श्रीभगवान् श्रीदामविप्रम् ।।

२३८ । श्रीगुर्वाज्ञया तत्सेवनाविरोधेन चान्येषामपि वैष्णवानां सेवनं श्रेयः । अन्यथा दोषः स्यात्, यथा श्रीनारदोक्तौ—

"गुरौ सन्निहिते यस्तु पूजयेदन्यमग्रतः । स दुर्गतिमवाप्नोति पूजनं तस्य निष्फलम् ।।"७१५।। इति ।

यः प्रथमं (भा० ११।३।२१) "शाब्दे परे च निष्णातम्" इत्याद्युक्त-लक्षणं गुरुं नाश्रितवान्, तादृशगुरोश्च मत्सरादितो महाभागवत-सत्कारादावनुमतिं न लभते, स प्रथमत एव त्यक्तशास्त्रो न विचार्य्यते । उभयसङ्कटपातो हि तस्मिन् भवत्येव । एवमादिकाभिप्रायेणैव—

"यो वक्ति न्यायरहितमन्यायेन शृणोति यः । तावुभौ नरकं घोरं व्रजतः कालमक्षयम् ।।"७१६।।

---

ज्ञान, उस के मध्य में श्रीधर स्वामि पादने ब्रह्म निष्ठ ज्ञान को लक्ष्य करके उस प्रकार व्याख्या की है । भगवनिष्ठ ज्ञान की व्याख्या को निम्नोक्त रूप से जानना होगा । इज्या-पूजा, प्रजाति--वैष्णव दीक्षा, तपस्या—समाधि, उपशम—भगवन्निष्ठा ।

श्रीभगवान् श्रीदाम विप्र को कहे थे ।।२३७।।

२३८ । श्री गुरुदेव की आज्ञा से एवं श्रीगुरु देव की सेवा के अविरोध से ही अन्य वैष्णव वृन्द की सेवा करना मङ्गलकर है । उस प्रकार आचरण न करने से दोष होता है । इस विषय में देवर्षि नारद की उक्ति इस प्रकार है—

"गुरौ सन्निहिते यस्तु पूजयेदन्यमग्रतः । स दुर्गतिमवाप्नोति पूजनं तस्य निष्फलम् ।।"७१५।।

श्रीगुरुदेव निकट में विद्यमान होने पर जो पहले अपर व्यक्ति की पूजा करता है, वह दुर्गति को प्राप्त करता है, एवं उस के द्वारा अनुष्ठित श्रीहरि की पूजा निष्फल होती है ।

जो व्यक्ति, प्रथमतः शब्द ब्रह्म वेद में विचार निपुण, एवं परब्रह्म भगवदनुभव में निपुण—भा० ११।३।२१ "शाब्दे परे च निष्णातम्" इस प्रकार लक्षणाक्रान्त सद् गुरु चरणाश्रय ग्रहण जिस ने नहीं किया है, सुतरां वह अशास्त्रीय असत् गुरुचरणाश्रय ग्रहण किया है । उक्त लक्षण हीन गुरु अर्थात् अशास्त्रीय गुरु शास्त्रज्ञ महत् व्यक्ति के प्रति स्वाभाविक द्वेष करता है, अतएव वह गुरु परश्रीकातरता--मात्सर्य्यादि दोषाक्रान्त होने के कारण शिष्य को महाभागवत की सेवानुकूल्य करने में अनुमति प्रदान नहीं करता है । अतः शिष्य नहीं जान सकता कि शास्त्रीय महाभागवत वृन्द की सेवा करना परम कर्त्तव्य है । इस प्रकार शिष्य के सम्बन्ध में विचार शास्त्र नहीं करेगा । कारण, जो व्यक्ति, पहले शास्त्र विधि लङ्घन पूर्वक लौकिक गुरु चरणाश्रय किया है—उस के पक्ष में इस प्रकार सङ्कट उपस्थित होना स्वाभाविक ही है । एक ओर गुरुचरण की आज्ञा लङ्घन, एक सङ्कट, दूसरी ओर महदनादर वा महत् सेवा न करने से सङ्कट । इस प्रकार अभिप्राय को सुस्पष्ट करने के निमित्त नारद पञ्चरात्र में उक्त है—

"यो वक्ति न्यायरहितमन्यायेन शृणोति यः ।
तावुभौ नरकं घोरं व्रजतः कालमक्षयम् ।।"७१६।।

इति श्रीनारदपञ्चरात्रे । अतएव दूरत एवाराध्यस्तादृशो गुरुः, वैष्णवविद्वेषी चेत् परित्याज्य एव-

'गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः। उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥''७१७॥

इति स्मरणात्, तस्य वैष्णवभावराहित्येनावैष्णवतया "अवैष्णवोपदिष्टेन" इत्यादिवचन-विषयत्वाच्च । यथोक्त-लक्षणस्य श्रीगुरोरविद्यमानतायान्तु तस्यैव महाभागवतस्यैकस्य नित्य सेवनं परमं श्रेयः । स च श्रीगुरुवत् समवासनः स्वस्मिन् कृपालुचित्तश्च ग्राह्यः-

"यस्य यत्सङ्गतिः पुंसो मणिवत् स्यात् स तद्गुणः । स्वकुलदर्ध्यैव ततो धीमान् स्वयूथ्यानेव संश्रयेत् ।'७१८

इति श्रीहरिभक्तिसुधोदयदृष्ट्या, कृपां विना तस्मिन् चित्तारत्या च ।

अथ सर्वस्यैव भागवतचिह्नधारिमात्रस्य तु यथायोग्यं सेवाविधानम् तत्र महाभागवतसेवा द्विविधा-प्रसङ्गरूपा, परिचर्य्यारूपा च । तत्र प्रसङ्गरूपा यथा (भा० ११।१२।१--२) -

---

जो नीति विरुद्ध कहता है, एवं जो नीति रहित कथा सुनता है, उभय ही अक्षय काल पर्य्यन्त घोर नरक में निवास करते हैं । अतएव तादृश अन्याय वक्ता अर्थात अशास्त्रीय उपदेष्टा गुरु की आराधना दूर से ही करनी चाहिये । अर्थात् अन्याय वक्ता गुरु के निकट उपस्थित होकर उपदेशादि ग्रहण न करे । दूर से प्रणाम वन्दनादि द्वारा सम्मान करे। यदि गुरु, वैष्णव विद्वेषी हो तो, उस को परित्याग ही करे । कारण,-उक्त है— "गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः।
उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥''७१७।

अवलिप्त--कुकार्य्यरत विषयासक्त कार्य्याकार्य्य में कर्त्तव्याकर्त्तव्य में अनभिज्ञ, उत्पथ प्रतिपन्न--शास्त्र गर्हित पथावलम्बी गुरु को परित्याग ही करे । गुरु वैष्णव भावापन्न न होने से अवैष्णव होता है, अतएव अवैष्णवता निबन्धन "अवैष्णवोपदिष्टेन मन्त्रेण निरयं व्रजेद् ।
तस्माच्च विधिना सम्यग् ग्राहयेद् वैष्णवाद् गुरोः ॥

अवैष्णव के निकट मन्त्र ग्रहण करने से नरक गमन होता है, अतएव शास्त्र विधि के अनुसार पुनर्वार वैष्णव गुरु के निकट से मन्त्र ग्रहण करे। इत्यादि प्रमाण के द्वारा वैष्णव द्वेषी गुरु को परित्याग करना चाहिये । यथा कथित लक्षणयुक्त अर्थात् शास्त्रीय लक्षणाक्रान्त गुरु विद्यमान न होने पर किसी परम भागवत की नित्य सेवा परम कल्याण दायिनी है । किन्तु उक्त महाभागवत में श्रीगुरु देवकी समान वासना एवं साधक के प्रति कृपालुचित्त गुण विद्यमान होना आवश्यक है । कारण, श्रीहरि भक्ति सुधोदय में लिखित है—

"यस्य यत्सङ्गति, पुंसो मणिवत् स्यात् स तद्गुणः ।
स्वकुलर्द्ध्यैव ततो धीमान् स्वयूथ्यानेव संश्रयेत् ॥''७१८॥

जिस का जिस जिस जातीय व्यक्ति का सङ्ग होता है । मणि के समान वह सङ्गकारी व्यक्ति, उस के गुणों से निज को रञ्जित कर लेता है। अतएव बुद्धिमान् व्यक्ति, निज निज कुल वृद्धि हेतु निज यूथस्थित वैष्णव को ही अवलम्बन करे । साधक के प्रति महाभागवत की कृपा एवं चित्त की प्रीति व्यतीत सत्वर सिद्धि लाभ की सम्भावना नहीं हो सकती है । अनन्तर समस्त भागवत चिह्नधारी व्यक्ति को ही यथा योग्य सेवा करनी चाहिये । इस का वर्णन करते हैं । उस के मध्य में महाभागवत की सेवा प्रसङ्ग रूपा एवं परिचर्य्या रूपा भेद से द्विविधा हैं। प्रथम प्रसङ्ग रूपा सेवा का वर्णन भा० ११।१२।१--२ में

(२३८) "न रोधयति मां योगो न साङ्ख्यं धर्म्म एव च।
न स्वाध्यायस्तपस्त्यागो नेष्टापूर्त्तं न दक्षिणा ॥७१९॥
व्रतानि यज्ञश्छन्दांसि तीर्थानि नियमा यमाः।
यथावरुन्धे सत्सङ्गः सर्वसङ्गापहो हि माम् ॥"७२०॥

पूर्वाध्याये (भा० ११।१२।४७)—
"इष्टापूर्त्तेन मामेवं यो यजेत समाहितः।
लभते मयि सद्भक्तिं मत्स्मृतिः साधुसेवया ॥"७२१॥

इत्यनेन साधुसेवया भक्तिनिष्ठा-जनने साधनान्तर-सव्यपेक्षत्वमिवोक्तम्। तत्रेष्ट-शब्देन

---

इस प्रकार है—

(२३८) "न रोधयति मां योगोन सांख्यं धर्म एव च।
न स्वाध्यायस्तपस्त्यागो नेष्टापूर्त्तं न दक्षिणा ॥७१९।
व्रतानि यज्ञश्छन्दांसि तीर्थानि नियमा यमाः।
यथावरुन्धे सत्सङ्गः सर्वसङ्गापहो हि माम् ॥"७२०॥

टीका— न रोधयति। न वशीकरोति। योग—आसन प्राणायामादिः। सांख्यं सत्त्वानां विवेकः। धर्मः, सामान्यतोऽहिंसादिः" स्वाध्यायो वेदजपः। तपः कृच्छादि, त्यागः—सन्यासः। इष्टापूर्त्तम् इष्ट पूर्त्तञ्च। तत्रेष्टम् अग्निहोत्रादि। पूर्त्तं कूपारामादि निर्म्माणम्। दक्षिणाशब्देन सामान्यतो दानं लक्ष्यते।(१) व्रतानि—एकादश्युपवासादीनि। यज्ञो देव पूजा। छन्दांसि—रहस्यमन्त्राः, अवरुन्धे—वशी करोति।(२)

उद्धव के प्रति श्रीभगवान् कहे थे—आसन प्राणायामादि योग, तत्त्व विवेक, अहिंसादि धर्म, वेद पाठ, तपस्या, सन्न्यास, अग्निहोत्रादि यज्ञ, वापी कूपतड़ागादि निर्म्माण, एकादश्यादि व्रत, यज्ञ, छन्द, तीर्थ, नियम, यम,—यह सब मुझ को उस प्रकार वशीभूत कर नहीं सकते हैं, जिस प्रकार सर्वासक्ति विनाशक सत् सङ्ग मुझ को वशी भूत करता है। पूर्वाध्याय के अन्तिम भा० ११। १४७ में उक्त है—

"इष्टापूर्त्तेन मामेवं यो यजेत समाहितः।
लभते मयि सद्भक्तिं मत्स्मृतिः साधुसेवया ॥"७२१।

टीका—भक्ताय। भक्ते फलमाह। इष्टापूर्त्तेनेति। सद् भक्तिं—दृढ़ां भक्तिम्। अस्या भक्तेरन्तरङ्ग साधनमाह। इत्थं मत्स्मृतिः साधु सेवया भवति। यद्वा स्मृतिर्ज्ञानम्। ततश्च दृढ़भक्ति मतः पुंसः साधु सेवया यज्ज्ञानं भवतीत्यर्थः।

जो संयत चित्त से इष्ट पूर्त्त द्वारा मेरी पूजा करता है, वह मुझ में सद् भक्ति प्राप्त करता है। साधु सेवा के द्वारा मेरी स्मृति लाभ होती है। इस में साधु सेवा द्वारा अन्तरङ्ग भक्त के प्रति निष्ठा उत्पन्न होने का विधान करने के समय अन्य साधन की अपेक्षा की कथा भी कही गई है। अर्थात् केवल साधु सेवा के द्वारा ही भगवत् स्मृति नहीं होती है, इस के सहित--इष्टापूर्त्त की सहायता का भी उल्लेख है। यहाँपर प्रयुक्त इष्ट शब्द के द्वारा श्रीमद् भागवतीय सप्तम स्कन्ध के पञ्चदशोऽध्याय में कथित रीति का अनुस्मरण करना कर्त्तव्य है। अतएव उस के अनुसार इष्ट शब्द से अग्निहोत्र, दर्श पौर्णमास्य, चातुर्मास्य याग, वैश्व देव बलि हरण रूप अर्थ को जानना होगा। 'पूर्त्त' शब्द से देवालय, फलोद्यान, कूप, वापी, तड़ाग, जल पानसत्र को समझना पड़ेगा। एवं यहाँपर अर्थात्---'नेष्टा पूर्त्तं न दक्षिणा' यह भा० ११।१२।४३ में उक्त

सप्तम-स्कन्धोक्त-रीत्याग्निहोत्र-दर्शपौर्णमास-चातुर्म्मास्ययाग-पशुयाग-वैश्वदेवबलिहरणान्युच्यन्ते। पूर्त्त-शब्देन सुरालयाराम-कूपवापीतड़ाग-प्रपान्नसत्राण्युच्यन्ते। अत्र तु इष्टम् (भा० ११।१२।३) "हविषाग्नौ यजेत मा१" इत्यादावग्नि-होत्राद्युपलक्षितम्, पूर्त्तम् (भा० ११।११।३८) "उद्यानोपवनाक्रीड़-" इत्याद्युपलक्षितं ज्ञेयम्। एवं पूर्वोक्तप्रकारेणेष्टापूर्त्तेन यो मां यजेत्, स मत्-स्मृतिस्तत्र साधुसेवया सतां प्रसङ्गेन सद्भक्ति-मन्तरङ्ग-भक्तिनिष्ठां प्राप्नोतीत्यर्थः। तत्राग्नि-होत्रादीनां भक्तौ प्रवेशोऽन्यन्तर्यामिरूप-भगवदधिष्ठानत्वेनाग्न्यादि-सन्तर्पणात्। कूपारामादीनाञ्च तत्परिचर्य्यार्थं क्रियमाणत्वात्तत्र प्रवेशः। तदेवं सत्सङ्गस्य सव्यपेक्षत्वमुक्तम्, पुनश्च तत्रैव तस्य स्वातन्त्र्येण यथेष्टफलदातृत्वं सर्वापेक्षया। परमसामर्थ्यञ्च वक्तुं परम-गुह्यत्वमुपदिष्टम् (भा० ११।११।४९।—

"अथैतत् परमं गुह्यं श्रृण्वतो यदुनन्दन।
सुगोप्यमपि वक्ष्यामि त्वं मे भृत्यः सुहृत् सखा॥"७२२॥

एतादृशमहिमत्वेनानुक्तत्वात्तदेतत् परमगुह्यत्वमाह, (भा० ११।१२।१) "न रोधयति"

---

'इष्ट' शब्द का अर्थ—"हविषाग्नौ यजेत मां" अग्नि में घृताहुति के द्वारा मेरी पूजा करे। यह अग्नि होत्रादि शब्दोपलक्षित यज्ञ रूप अर्थ को जानना होगा। एवं 'पूर्त्त' शब्द से "उद्यानोपवनाक्रीड़ापुर मन्दिर कर्म्मणि" भा० ११।११।३८ में उक्त भगवत् सेवोपयोगी पुष्प प्रधान, फल प्रधान, श्रीविग्रह का विहार स्थान, पुर 'चक्रवेष्टन' मन्दिरादि कर्म उपलक्षित अनुष्ठान को जानना चाहिये। इस प्रकार इष्ट एवं पूर्त्त द्वारा जो मेरी पूजा करता है, वह मेरी स्मृति को प्राप्त करता है। उस के मध्य में अग्निहोत्र प्रभृति याग के द्वारा भक्ति में प्रविष्ट होने कारण—अन्तर्यामी भगवान् के अधिष्ठान रूप अग्नि प्रभृति में समर्पण करना है। यदि अग्नि प्रभृति में श्रीभगवान् अधिष्ठित हैं, इस प्रकार बुद्धि न करके केवल घृत के द्वारा आहुति प्रदान करने से भगवद् भक्ति में प्रवेश नहीं हो सकता है। और यदि भगवत् परिचर्य्या के उद्देश्य से कूप आराम प्रभृति का निर्म्माण होता है तो, 'पूर्त्त' कर्म के द्वारा ही भगवद् भक्ति में प्रवेश होगा। तद्भिन्न पुण्यादि उद्देश्य से कूपारामादि कर्मानुष्ठान से भगवत् भक्ति प्राप्ति नहीं हो सकती है। ऐसा होने पर पूर्व वर्णित प्रकारानुसार सत् सङ्ग का सर्व साधन सापेक्षत्व वर्णित हुआ पुनर्वार साधु सङ्ग का स्वतन्त्र रूप से यथेष्ट फल दातृत्व एवं सर्व साधन की अपेक्षा से परम सामर्थ्य युक्तत्व कहने के निमित्त परम गोपनीय विषय को कहते हैं—भा० ११।११।४९ में उक्त है—

"अथैतत् परमं गुह्यं शृण्वतो यदुनन्दन।
सुगोप्यमपि वक्ष्यामि त्वं मे भृत्यः सुहृत् सखा॥"१२२॥ इति।

टीका—इदानीं साङ्ख्य योगादीनि साधनान्तर सापेक्षाणि सव्यभिचाराणि च सत् सङ्गस्तु स्वतन्त्र एव समर्थः फलाव्यभिचारी चेति वर्णयितुमाह अथेति। एतद्वक्ष्यमाणं परमं गुह्यम् अतः श्रृण्वित्यर्थः॥

श्रीकृष्ण उद्धव को कहे हैं—हे यदुनन्दन उद्धव! अनन्तर परम गोपनीय वृत्तान्त का वर्णन तुम्हारे निकट करता हूँ। श्रवण करो, कारण, तुम मेरा भृत्य हो, सुहृत एवं सखा हो, भा० ११।१२ में इस प्रकार साधु सङ्ग की महिमा का कथन नहीं हुआ है। किन्तु सम्प्रति भा० ११।१२ -१-२ श्लोक द्वारा परम गोपनीय तत्त्व का वर्णन करता हूँ। अर्थात् साधु सङ्ग जो अति सु गोप्य है, उसका वर्णन कर रहा हूँ।

इति । त्यागः सन्न्यासः, दक्षिणा दानमात्रम्, यज्ञो देवपूजा, छन्दांसि रहस्यमन्त्राः, यथा सत् सङ्गो मामवरुन्धे वशीकरोति, तथा योगो न वशीकरोति, न च साङ्ख्यमित्यादिकोऽन्वयः । ततस्तेऽपि किञ्चिद्वशीकुर्वन्तीत्यर्थ-लब्धेर्भगवत्परा एव ज्ञेयाः, न च साधारणाः । अतएव च "वृतान्येकादश्यादीनि" इति टीकाकाराः । न चैतावता तेषां नित्यानां वैष्णववृतादीनाम-कर्त्तव्यत्वं प्राप्तमेकस्य फलातिशयसामर्थ्य-प्रशंसयेतरस्य नित्यत्वनिराकरणायोगात् । यथा कर्म्माधिकारिणः (भा० ७।१४।१७) —

"न ह्यग्निमुखतोऽयं वै भगवान् सर्वयज्ञभुक् ।
इज्येत हविषा राजन् यथा विप्रमुखे हुतैः ॥"७२३॥

---

"न रोधयति मां योगो न सांख्यं धर्म एव च ।
न स्वाध्यायस्तपस्त्यागो नेष्टा पूर्त्तं न दक्षिणा ॥(१)
व्रतानि यज्ञश्चन्दांसि तीर्थानि नियमा यमाः ।
यथावरुन्धे सत् सङ्गः सर्व सङ्गापहो हि माम् ॥(२)

टीका—न रोधयति न वशीकरोति । योग आसन प्राणायामादिः साङ्ख्यं तत्त्वानां विवेकः । धर्मः सामान्यतोऽहिंसादिः । स्वाध्यायो वेदजपः । तपः कृच्छ्रादि । त्यागः सन्न्यासः । इष्टापूर्त्तम्--इष्टञ्च पूर्त्तञ्च । तत्रेष्टम्, अग्नि होत्रादि, पूर्त्तं कूपारामादि निर्म्माणम् । दक्षिणा शब्देन सामान्यतो दानं लक्ष्यते (१)

व्रतानि एकादश्युपवासादीनि । यज्ञो देव पूजा । छन्दांसि रहस्यमन्त्राः । अवरुन्धे वशीकरोति । (२)

त्याग--सन्न्यास, दक्षिणा--सत्पात्र में दान,यज्ञ—देवपूजा, छन्द---रहस्य मन्त्र, सत्सङ्ग, जिस प्रकार मुझ को वशीभूत करता है, योग प्रभृतिउस प्रकार वशीभूत करने में सक्षम नहीं हैं । अधिक कहना क्या है, आत्मानात्म विवेक रूप साङ्ख्य प्रभृति भी मुझ को वशीभूत करने में समर्थ नहीं है । उक्त श्लोकद्वय का अन्वय इस प्रकार ही जानना होगा । यहाँ ज्ञातव्य यह है कि—"उस प्रकार वशीभूत करने में सक्षम नहीं हैं" इस प्रकार उल्लेख होने के कारण—तात्पर्य्य यह निकलता है कि–उक्त साधन समूह किञ्चित् वशीभूत करने में सक्षम हैं । अर्थात् जो साधन भगवद् उद्देश्य में अनुष्ठित होते हैं, वह सब साधनों में भगवद् वशीकरण शक्ति किञ्चित् परिमाण में है, किन्तु तद्भिन्न साधारण योगादि साधन भगवान् को वशीभूत नहीं कर सकते हैं । इस अभिप्राय से ही श्रीधर स्वामि पाद ने व्रत शब्द का अर्थ—एकादशी प्रभृति किया है ।

यहाँ प्रश्न हो सकता है कि—यदि एकादशी प्रभृति वृत में साधुसङ्ग के समान भगवद् वशी कारिणी शक्ति नहीं है, तो एकादशी प्रभृति वृतानुष्ठान की आवश्यकता ही क्या है । उत्तर में कहते हैं---"एकादशी प्रभृति वृत सत् सङ्ग के समान् वशीभूत करने में सक्षम नहीं हैं ।" इस प्रकार उल्लेख होने के कारण, एकादशी प्रभृति नित्य वैष्णव वृतों की अकर्त्तव्यता नहीं आती है । कारण, एकादश्यादि वृत न करने से वैष्णवता की रक्षा नहीं होती है । जिस का अनुष्ठान न करने से प्रत्यवाय होता है, वही नित्य है । एकादशी प्रभृति व्रत न करने से प्रत्यवाय होता है । यहाँ साधुसङ्ग की प्रशंसा एवं शक्ति का आधिक्य प्रदर्शित हुआ है । भक्ति के किसी एक अङ्ग की प्रशंसा करने पर अन्य अङ्ग का नित्यत्व का निषेध नहीं होता है । जिस प्रकार कर्माधिकारी वृन्द के प्रसङ्ग में (भा० ७।१४।१७ में) कहा गया है—

"न ह्यग्निमुखतोऽयं वै भगवान् सर्वयज्ञभुक् ।
इज्येत हविषा राजन् यथा विप्रमुखे हुतैः ॥"७२३॥

नातिदीर्घेणण स्वल्पेनैव, विशते स्फुरति ।। श्रीपरीक्षित् ।।

२६६ । तथा (भा० १२।१२।४९-५०)—

(२६९) "मृषा गिरस्ता ह्यसतीरसत्कथा, न कथ्यते यद्भगवानधोक्षजः ।
तदेव सत्यं तदु हैव मङ्गलं, तदेव पुण्यं भगवद्गुणोदयम् ।।"८२२।।

इत्यादि, "यदुत्तमश्लोकयशोऽनुगीयते" इत्यन्तम् ।

असतीरसत्यः, असतां भगवतस्तद्भक्तेभ्यश्चान्येषां कथा यासु ताः, यद्यासु गीर्षु न कथ्यते, उत्तमश्लोकस्य यशोऽनुगीयत इति तु यत् तत् तदीयलीलामयानुगानमेव सत्यमित्यादि । कथं सत्यत्वं मङ्गलत्वञ्च ? तत्राह—भववद्गुणानामुदयो गायकहृदि स्फूर्त्तिर्यस्मात्तत्, तदीयरतिप्रदमित्यर्थः । स्कान्दे—

"यत्र यत्र महीपाल वैष्णवी वर्त्तते कथा । तत्र तत्र हरिर्याति गौर्यथा सुतवत्सला ।।"८२३।।

---

महाराज परीक्षित् श्रीशुकदेव को कहे थे—हे प्रभो ! श्रद्धा पूर्वक नित्य श्रीभगवान् के लीला कीर्त्तन श्रवण कारी के हृदय में भगवान् श्रीहरि अत्यल्प काल में ही श्रीहृदय में स्फुरित होते हैं ।

टीका---सोऽपि श्रद्धया शृण्वतो नात्रश्यक इत्याह-शृण्वत इति । स्व प्रयत्नं विनापि भगवान् स्वयमेव हृदि विशति ।।

श्लोकस्थ नाति दीर्घ शब्द का अल्प काल में ही, 'विशते' का अर्थ हैं—स्फुरति-स्फूर्त्ति प्राप्त होते हैं । श्रीपरीक्षित् कहे थे ।।२६८।।

२६९ । उस प्रकार भा० १२।१२।४९-५० में उक्त है—

(२६९) "मृषा गिरस्ता ह्यसतीरसत्कथा, न कथ्यते यद्भगवानधोक्षजः ।
तदेव सत्यं तदु हैव मङ्गलं, तदेव पुण्यं भगवद्गुणोदयम् ।।८२२।।

टीका—हरि सङ्कीर्त्तनमेव महाफलं तद्व्यतिरिक्तं सर्वं मिथ्यालापमात्रमिति प्रपञ्चयति मृषागिरः चतुर्भिः । मृषागिरो मिथ्यावाचः । असती रसत्यः । असतां कथा यासु ताः । यद् यासु उत्तम श्लोकस्य यशोऽनुगीयते इति यत् तदेव सत्यं हि मङ्गलम् । उह इति-हर्षे । भगवद् गुणानामभ्युदयो यस्मात् तत् । नवं नवं यथा भवति तथा रुचिरं रुचि प्रदम् । महानुत्सवो यस्मात् ।।४९।५०।

श्रीसूत, शौनकादि ऋषि वृन्द को कहे थे—श्रीभगवान् एवं उनके भक्त व्यतीत अन्य कथा असती है—अर्थात् मिथ्यालाप तुल्य है । एवं उस प्रकार कथा से सुख लाभ नहीं होता है, कारण, उस कथा से भगवान् अधोक्षज कीर्त्तित नहीं होते हैं, वही कथा सत्य है, एवं मङ्गल स्वरूप है, जिस कथा में भगवान् की लीला कथा है, वह सत्य एवं मङ्गल रूप क्यों है ? उत्तर में कहते हैं, जिस लीला कथा का कीर्त्तन करने से, गायक के हृदय में वात्सलादि गुण की स्फूर्त्ति होती है । अर्थात् भगवत् चरण युगल में प्रीति होती है । स्कन्द पुराण में भी उक्त है—

"यत्र यत्र महीपाल वैष्णवी वर्त्तते कथा ।
तत्र तत्र हरिर्याति गौर्यथा सुतवत्सला ।।"८२३।।

हे महाराज ! जहाँ जहाँ श्रीविष्णु वा उनके भक्त वृन्द की कथा कीर्त्तित होती है, सुत वत्सला धेनु जिस प्रकार वत्स के पश्चात् धावित होती है, श्रीहरि भी उस प्रकार वहाँ वहाँ धावित होते हैं ।

विष्णु धर्म एवं स्कन्द पुराण में भगवदुक्ति यह है—

विष्णुधर्म्मे स्कान्दे च श्रीभगवदुक्तौ—

"मत्कथावाचकं नित्यं मत्कथाश्रवणे रतम् । मत्कथाप्रीतिमनसं नाहं त्यक्ष्यामि तं नरम् ।।"८२४।। इति ।

अत्र च 'अनुगोयते' इत्यनेन सुकण्ठता चेद्गानमेव कर्त्तव्यम्, तच्च प्रशस्तमित्यायातम् । एवं नामादीनामपि, उक्तञ्च (भा० ११।२।३९) --"गीतानि नामानि तदर्थकानि, गायन् बिलज्जो विचरेदसङ्गः" इति, अन्यत्र च (भा० १०।६९।४५)—

"यानीह विश्वविलयोद्भववृत्तिहेतुः, कर्माण्यनन्यविषयाणि हरिश्चकार ।
यस्त्वङ्ग गायति शृणोत्यनुमोदते वा, भक्तिर्भवेद्भगवति ह्यपवर्गमार्गे ।।"८२५।।

गानशक्त्यभावे स्वस्मादुत्कृष्टतरस्य प्राप्तौ वा तच्छृणोति, तदासक्त्यभावे तदनुमोदतेऽपीत्यर्थः । श्रीविष्णुधर्म्मे श्रीविष्णूक्तौ--

"रागेणाकृष्यते चेतो गान्धर्वाभिमुखं यदि । मयि बुद्धिं समास्थाय गायेथा मम सत्कथाः ।।"८२६।।

---

"मत्कथावाचकं नित्यं मत्कथाश्रवणे रतम् ।
मत्कथाप्रीतिमनसं नाहं त्यक्ष्यामि तं नरम् ।।"८२४।।

जो मेरी कथा का कीर्त्तन करता है, जो मेरी कथा में प्रीति युक्त है, एवं मेरी कथा में सन्तुष्ट चित्त है, मैं उस मनुष्य को कभी भी परि त्याग नहीं करता हूँ। "यदुत्तमः श्लोक यशोऽनुगीयते" यहाँ 'अनुगीयते' पद के द्वारा सूचित हुआ है कि—यदि सुकण्ठ हो तो गान ही करना चाहिये । गान ही श्रवण कीर्त्तन से प्रशस्त है । इस प्रकार रीति का अनुसरण नामादि भक्तिअङ्ग अनुशीलन में भी करना चाहिये ।

भा० ११।२।३९ में कथित है--"गीतानि नामानि तदर्थ कानि, गायन् विलज्जो विचरेदसङ्गः ।।'

कवि योगीन्द्र निमि महाराज को कहे थे—जो श्रीहरि नाम गान करता है, अथवा अपभ्रंश भाषानिबद्ध शब्द का गान करते हैं, वह व्यक्ति क्रमशः लोकापेक्षा एवं विषयासक्ति को परित्याग कर विचरण करता है । भा० १०।६९।४५ में उक्त है—

"यानीह विश्वविलयोद्भववृत्तिहेतुः, कर्माण्यनन्यविषयाणि हरिश्चकार ।
यस्त्वङ्ग गायति शृणोत्यनुमोदते वा, भक्तिर्भवेद्भगवति ह्यपवर्गमार्गे ।।"८२५।।

श्रीशुकमुनि महाराज परीक्षित् को कहे थे—हे राजन् ! विश्वसृष्टिस्थिति नाश हेतु भगवान् श्रीहरि जो सब अलोक सामान्य कार्य्य किये हैं, जो व्यक्ति, उस कर्म्म समूह का गान करता है, श्रवण करता है एवं अनुमोदन करता है, वह मुक्ति प्रद श्रीभगवान् के चरणों में भक्ति प्राप्त करता है । गान करने की सामर्थ्य न होने पर, उत्कृष्ट योग्य व्यक्ति प्राप्त होने पर उन से गान श्रवण करना चाहिये, सङ्गीत में आसक्ति न होने पर, उस को अनुमोदन करना चाहिये । ऐसा होने पर भक्ति लाभ होगा, श्रीविष्णु धर्म ग्रन्थ की श्रीभगवदुक्ति में प्रकाशित है—

"रागेणाकृष्यते चेतो गान्धर्वाभिमुखं यदि ।
मयि बुद्धिं समास्थाय गायेथा मम सत्कथाः ।।"८२६।।

गान विद्या में अभिमुखचित्त यदि भैरवादि राग में आकृष्ट होता है तो मुझ में मन एकाग्र करके मेरी लीला कथा गान करे, किन्तु निज गर्व प्रकटन हेतु गान न करे । पद्म पुराण के कार्त्तिक माहात्म्य में श्रीभगवदुक्ति यह है ।

पाद्मे च कार्त्तिक-माहात्म्ये श्रीभगवदुक्तौ—

"नाहं वसामि वैकुण्ठे योगिनां हृदये न च । मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारद ॥८२७॥
तेषां पूजादिकं गन्धधूपाद्यैः क्रियते नरैः । तेन प्रीतिं परां यामि न तथा मम पूजनात् ॥"८२८॥

ते च प्राणिमात्राणामेव परमोपकर्त्तारः, किमुत स्वेषाम्, यथोक्तं नारसिंहे श्रीप्रह्लादेन—

"ते सन्तः सर्व्वभूतानां निरुपाधिकबान्धवाः । ये नृसिंह भवन्नाम गायन्त्युच्चैर्मुदान्विताः ॥"८२९॥

अत्र च बहुभिर्मिलित्वा कीर्त्तनं सङ्कीर्त्तनमित्युच्यते । तत्तु चमत्कारविशेषपोषात् पूर्वतोऽप्यधिकमिति ज्ञेयम् । अत्र च नामसङ्कीर्त्तने यथोपदिष्टं कलियुगपावनावतारेण श्रीभगवता-

"तृणादपि सुनीचेन तरोरपि सहिष्णुना । अमानिना मानदेन कीर्त्तनीयः सदा हरिः ॥"८३०॥

श्रीसूतः ॥

२७० । इयञ्च कीर्त्तनाख्या भक्तिर्भगवतो द्रव्य-जाति-गुण-क्रियाभिर्दीनजनैकविषयापार

---

"नाहं वसामि वैकुण्ठे योगिनां हृदये न च ।
मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारद ॥८२७॥
तेषां पूजादिकं गन्ध धूपाद्यैः क्रियते नरैः ।
तेन प्रीतिं परां यामि न तथा मम पूजनात् ॥८२८॥

हे नारद ! मैं वैकुण्ठ में निवास नहीं करता हूँ, अथवा योगि वृन्द के हृदय में भी नहीं रहता हूँ, मेरे भक्त गण जहाँपर मेरी कथा का गान करते हैं, मैं वहीं रहता हूँ । उन सब भक्त को जो गन्ध पुष्प धूपादि द्वारा पूजा करते हैं, मैं उन सब के प्रति जितना सन्तुष्ट होता हूँ, उतना मेरी पूजा में सन्तुष्ट नहीं होता हूँ । जो लोक मेरी लीला का गान करते हैं, वे प्राणी मात्र को उपकृत करते हैं, कारण, उच्चैःस्वर से गान करने से दूरस्थ प्राणी भी सुनते हैं, एवं जो सुनने में अक्षम हैं, इस प्रकार तृण लता प्रभृति में नाम की प्रतिध्वनि होने से उन का कल्याण होता है । अपना कल्याण तो अर्थात् ही होता है । नरसिंह पुराण में श्रीप्रह्लाद ने कहा है— "ते सन्तः सर्वभूतानां निरुपाधिक बान्धवाः ।
ये नृसिंह भवन्नाम गायन्त्युच्चै र्मुदान्विताः ॥८२९॥

हे नृसिंह ! वे वह सब साधु-प्राणि वृन्द के निरुपाधि बान्धव हैं, जो उच्चैः स्वर से परमानन्द से आप का नाम कीर्त्तन करते हैं । बहु जन मिलित होकर जो गान अनुष्ठित होता है— उस को कीर्त्तन कहते हैं, यह सङ्कीर्त्तन चमत् कार विशेष का पोषक होने के कारण गान से भी अधिक माहात्म्य पूर्ण एवं माधुर्य्य मण्डित है । इस नाम सङ्कीर्त्तन के विषय में कलियुग पावनावतार श्रीभगवान् श्रीकृष्ण चैतन्य महाप्रभु जो उपदेश प्रदान किये हैं, वह यह है—

"तृणादपि सुनीचेन तरोरपि सहिष्णुना । अमानिना मानदेन कीर्त्तनीय सदा हरिः ॥८३०॥

तृण से सुनीच होकर अर्थात् निरभिमानी विनीत होकर--किसी भी अवस्था में अहन्ता मस्तकोत्तलन न करे, इस प्रकार सत्य आचरण परायण होकर, एवं वृक्ष से भी सहिष्णु तथा परोपकारी होकर निजमाना काङ्क्षा शून्य होकर अपर को सम्मान दान कर सर्वदा श्रीहरि कीर्त्तन करना कर्त्तव्य है । अर्थात् श्रीहरि नाम कीर्त्तन कारी के पक्ष में सत्य निरभिमानी, सहिष्णु परोपकारी, योग्य होकर मानाकाङ्क्षा रहित-- एवं अपर को मान दान कारी होना परम आवश्यक है ।                    प्रवक्ता श्रीसूत हैं ॥२६९॥

२७० । यह कीर्त्तनाङ्ग भक्ति,— द्रव्य, जाति, गुण एवं क्रिया द्वारा जो सब प्रकारों से दीन हैं,

करुणामयीति श्रुतिपुराणादि-विश्रुतिः । कलौ च दीनत्वं यथा ब्रह्मवैवर्त्ते—

"अतः कलौ तपोयोग-विद्यायज्ञादिकाः क्रियाः । साङ्गा भवन्ति न कृताः कुशलैरपि देहिभिः ॥"८३१॥

अतएव कलौ स्वभावत एवातिदीनेषु लोकेष्वाविर्भूयताननायासेनैव तत्तद्युगगत-महासाधनानां सर्वमेव फलं ददाना सा कृतार्थयति । यत एव तयैव कलौ भगवतो विशेषतश्च सन्तोषो भवति,—

"तथा चैवोत्तमं लोके तपः श्रीहरिकीर्त्तनम् । कलौ युगे विशेषेण विष्णुप्रीत्यै समाचरेत् ॥"८३२॥

इति स्कान्दचातुर्मास्य-माहात्म्यवचनानुसारेण । तदेवमाह (भा० १२।३।५२) —

(२७०) "कृते यद्ध्यायतो विष्णुं त्रेतायां यजतो मखैः ।
द्वापरे परिचर्य्यायां कलौ तद्धरिकीर्त्तनात् ॥"८३३॥

यद् यत् कृतादिषु तेन तेन साधनेन स्यात्, तत् सर्व्वं कलौ हरिकीर्त्तनाद्भवतीति । अन्यत्र

---

अर्थात् अयोग्य हैं, उन के प्रति श्रीभगवान् की अपार करुणामयी है । अर्थात् द्रव्य जाति गुण क्रिया प्रभृति की योग्यता जिस में नहीं है, इस प्रकार व्यक्ति के प्रति भी श्रीभगवान् की करुणा सम्पादन कारिणी यह भक्ति है । यह विषय--श्रुति पुराणादि में सु प्रसिद्ध है । अथच कलियुग में मानव मात्र का दीनत्व स्वाभाविक है । ब्रह्म वैवर्त्त पुराण में लिखित है—

"अतः कलौ तपोयोग-विद्यायज्ञादिकाः क्रियाः ।
साङ्गा भवन्ति न कृताः कुशलैरपि देहिभिः ॥"८३१॥

अतएव कलियुग में तपस्या, योग, विद्या एवं यज्ञ प्रभृति — क्रिया कर्म सुनिपुण मानव गण कर्त्तृक अनुष्ठित होने पर भी पूर्णाङ्ग नहीं होते हैं । अतएव कलियुग के मानव गण स्वभावतः ही अतिशय दीन हैं । यह सब दीन जन के मध्य में श्रीकीर्त्तनाङ्ग भक्ति, आविर्भूत होकर सत्यादि युग के जो सब महासाधन उल्लिखित हैं, वह सब साधनों का महाफल को अनायास प्रदान करके श्रीनाम सङ्कीर्त्तन कारी व्यक्ति की कृतार्थ करती है । कारण—कीर्त्तनाङ्ग भक्ति के द्वारा ही श्रीभगवान् परम सन्तुष्ट होते हैं, अतएव सत्यादि-युगगत निखिल साधनों का फल लाभ, एकमात्र श्रीहरि नाम सङ्कीर्त्तन के द्वारा ही होता है । कारण, श्रीभगवत् सन्तोष ही निखिल सन्तोष का मूल हेतु है । स्कन्द पुराण के चातुर्म्मास्य माहात्म्य प्रकरण में लिखित है —

'तथा चैवोत्तमं लोके तपः श्रीहरि कीर्त्तनम् ।
कलौ युगे विशेषेण विष्णु प्रीत्यै समाचरेत् ॥"८३२॥

इस जगत में श्रीभगवत् सङ्कीर्त्तन ही सर्व श्रेष्ठ तपस्या है, विशेषतः इस कलियुग में श्रीहरि के प्रीति निमित्त ही कीर्त्तन करना कर्त्तव्य है । भा० १२।३।५२ में उस विषय का कथन हुआ है —

(२७०) "कृते यद्ध्यायतो विष्णुं त्रेतायां यजतो मखैः ।
द्वापरे परिचर्य्यायां कलौ तद्धरिकीर्त्तनात् ॥"८३३॥

टीका—ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्च्चना यदाप्नोति तदाप्नोति कलौ संङ्कीर्त्य केशवमिति ।

श्रीशुक,—श्रीपरीक्षित् को कहे थे—सत्य युग में विष्णु ध्यान करके त्रेता युग में यज्ञानुष्ठान करके एवं द्वापर युगमें परिचर्य्या करके जो फल लाभ होता है, कलियुग में श्रीहरि सङ्कीर्त्तन के द्वारा ही मानवगण उस फल को प्राप्त कर सकते हैं । युगोचित उन उन साधनों के द्वारा जो जो फल होते हैं, उन सब फल लाभ--कलि में श्रीहरि नाम सङ्कीर्त्तन से ही होते हैं । विष्णु पुराण के ६।२।२७ में भी लिखित है—

च वि० पु० ६।२।१७)—

"ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्च्चयन् । यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम् ।"८३४।

इति ॥ श्रीशुकः ॥

२७१ । अतएव (भा० ११।५।३६) —

(२७१) "कलिं सभाजयन्त्यार्य्या गुणज्ञाः सारभागिनः ।
यत्र सङ्कीर्त्तनेनैव सर्वः स्वार्थोऽभिलभ्यते ॥"८३५॥

गुणज्ञाः कीर्त्तनप्रचाररूपं तद्गुणं जानन्तः, अतएव तद्दोषाग्रहणात् सारभागिनः सारमात्र-ग्रहणाः कलिं सभाजयन्ति । गुणमेव दर्शयति,--यत्र प्रचारितेन सङ्कीर्त्तनेनैव साधनान्तर-निरपेक्षेण तेनेत्यर्थः । सर्वः ध्यानादिभिः कृतादिषु साधनसहस्रैः साध्यः ॥

२७२ । कीर्त्तनस्यैव महिमानमाह (भा० ११।५।३७) —

(२७२) "न ह्यतः परमो लाभो देहिनां भ्राम्यतामिह ।
यतो विन्देत परमां शान्तिं नश्यति संसृतिः ॥"८३६॥

---

"ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्च्चयन् ।
यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम् ॥"८३४॥

सत्य युग में ध्यान करके, त्रेतायुग में यज्ञ करके एवं द्वापर युग में भगवदर्च्चन करके साधक गण जो फल लाभ करते हैं, कलियुग में श्रीकेशव के नामादि सङ्कीर्त्तन के द्वारा वे सब फल लाभ होते हैं ।
प्रवक्ता श्रीशुक है—२७०॥

२७१ । अतएव भा० ११।५।३६ में उक्त है—

(२७१) "कलिं सभाजयन्त्यार्य्या गुणज्ञाः सारभागिनः ।
यत्र सङ्कीर्त्तनेनैव सर्वः स्वार्थोऽभिलभ्यते ॥"८३५॥

टीका—एतेषु चतुर्युगेषु कलिरेव श्रेष्ठ इत्याह कलिमिति । गुणज्ञाः कलेर्गुणं जानन्ति ये ते । ननु दोषाणां बहुत्वात् कथं सभाजयन्ति तत्राह । सारभागिनो गुणांशग्राहिणः । कोऽसौ गुणस्तमाह--यत्रेति तदुक्तम् । ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्च्चयन् । यदाप्नोति तदाप्नोति कलौ सङ्कीर्त्य केशवमिति ।

निमि महाराज को करभाजन योगीन्द्र कहे थे—हे राजन् ! जो कलियुग के श्रीकृष्ण सङ्कीर्त्तन प्रचार रूप धर्म को जानते हैं, वह सब गुणज्ञ ऋषिगण कलियुग के अन्य समूह को ग्रहण नहीं करते हैं, कीर्त्तन प्रचार रूप सार ग्रहण करके कलियुग का आदर करते हैं । उस कलियुग का गुण वर्णन करते हैं--- जिस कलियुग में प्रचारित अन्य साधन निरपेक्ष सङ्कीर्त्तन के द्वारा ही सत्यादि युग में अनुष्ठित ध्यान प्रभृति साधनों से जो फल लाभ होते हैं, अनायास वह सब फल मिल जाते हैं ॥२७१॥

२७२ । कीर्त्तन की महिमा का वर्णन करते हैं । भा० ११।५।३७

(२७२) "न ह्यतः परमो लाभो देहिनां भ्राम्यतामिह ।
यतो विन्देत परमां शान्ति नश्यति संसृतिः ॥८३६॥

टीका—तस्मात् कलौ अतोऽस्मात् सङ्कीर्त्तनात् परमो लाभो नास्ति । यतः सङ्कीर्त्तनात् ।

हे राजन् ! श्रीहरि नाम सङ्कीर्त्तन व्यतीत संसार पथ के पथिक जीव को अपर कोई भी परम लाभ

अतः कीर्त्तनात्, यतो यस्मात् कीर्त्तनात्, परमां शान्ति (भा० ११।१६।३६) "शमो मन्निष्ठता बुद्धेः" इति भगवद्वाक्यानुसारेण ध्यानादिभिरप्यसाध्यां सर्वोत्कृष्टां भगवन्निष्ठां प्राप्नोत्यनुषङ्गेण संसारश्च नश्यति। अतएव ध्याननिष्ठा अपि कृतादि-प्रजा एतादृशीं भगवन्निष्ठां न प्राप्तवत्यः "महाभागवता नित्यं कलौ कुर्वन्ति कीर्त्तनम्" इति स्कान्दाद्यनुसारेण तादृशनिष्ठा--कारणं कीर्त्तनं--माहात्म्यञ्च दीनैक--कृपातिशयशालिना भगवता तदानीं तत्तत्-सामर्थ्यावसरे यस्मान्न प्रकाशितम्, तस्माद्ध्यानादि-समर्थास्ताः प्रजा जिह्वौष्ठस्पन्दनमात्रस्य नातिसाधनत्वं भवेदिति मत्वा तन्न श्रद्धितवत्यश्च ॥

२७३। ततः कलिप्रजानां परमभगवन्निष्ठतां श्रुत्वा तदर्थं कलावेव केवलं निजजन्म प्रार्थयन्त इत्याह, (भा० ११।५।३८) —

(२७३) "कृतादिषु प्रजा राजन् कलाविच्छन्ति सम्भवम्।
कलौ खलु भविष्यन्ति नारायणपरायणाः॥"८३७॥

तत्परायणत्वमत्र तदीयप्रेमातिशयवत्त्वम्। एतदेव "परमां शान्तिम्" इत्यनेन कार्य्यद्वारा

---

नहीं हैं। श्रीभगवान् उद्धव को कहे थे—"शमो मन्निष्ठता बुद्धेः" मुझ में निष्ठा प्राप्त बुद्धि का नाम ही शम है, अर्थात् शान्ति है। जिस शान्ति अर्थात् भगवन्निष्ठा को ध्यानादि साधनों से प्राप्त करना सम्भव नहीं है। श्रीहरि कीर्त्तन के द्वारा ही उस को अनायास प्राप्त कर सकते हैं। एवं आनुषङ्गिक भाव से संसार क्षयभी होता है, यह सङ्कीर्त्तन, केवल कलियुग में ही प्रचारित होता है, अतः ध्याननिष्ठ सत्य युगीय प्रजागण, कलियुग के प्रजागण के समान भगवन्निष्ठ को प्राप्त करने में सक्षम नहीं हैं। महाभागवत गण कलियुग में नित्य ही श्रीभगवन्नाम कीर्त्तन करते हैं। "महाभागवता नित्यं कलौ कुर्वन्ति कीर्त्तनम्" स्कन्द पुराण के कथनानुसार प्रतीत होता है कि—भगवच्चरणों में तादृशी परमोत्कृष्ट निष्ठा लाभ का कारण, श्रीनाम सङ्कीर्त्तन माहात्म्य को, दीन जन के प्रति परम कृपाशाली भगवान्,—ध्यान यज्ञ प्रभृति अति कठोर साधन शक्ति सम्पन्न सत्यादि युग में प्रकाश नहीं किये हैं। तज्जन्य ध्यानादि करने की सामर्थ्य विशिष्ट उस उस युग के प्रजागण, केवल मात्र जिह्वा एवं ओष्ठ स्पन्दन मात्र से जो साधन निष्पन्न होता है, उस उस श्रीहरि कीर्त्तन को श्रेष्ठ नहीं मानते हैं। तज्जन्य ही कीर्त्तन रूप साधन में इष्ट लाभ हेतु श्रद्धालु नहीं हो सकते हैं। वस्तुतः केवल ओष्ठ धर स्पन्दन मात्र साध्य कीर्त्तनाङ्ग भक्ति को बहु अभ्यास साध्य ध्यानादि अनुष्ठान समर्थ व्यक्ति गण महत्त्व प्रदान करने में असमर्थ हैं ॥२७२॥

७२३। अतएव कलियुगोत्पन्न प्रजावृन्द की श्रीभगवन्निष्ठा को सुनकर उस प्रकार निष्ठा लाभ हेतु सत्य युग के प्रजावृन्द केवल कलियुग में जन्म प्रार्थना करते हैं। भा० ११।५।३८ में उक्त है—

(२७३) "कृतादिषु प्रजा राजन् कलाविच्छन्ति सम्भवम्।
कलौ खलु भविष्यन्ति नारायणपरायणाः॥"८३७॥

श्रीकर भाजन निमि महाराज को कहे थे—हे राजन्! सत्यादि युग के प्रजावृन्द कलियुग में जन्म प्रार्थना करते हैं, कारण, कलियुग के प्रजागण—नारायण परायण होंगे। मूल श्लोक में 'भविष्यति' भविष्यत् काल की क्रिया प्रयुक्त हुई है। इस से बोध होता है कि—निमि महाराज के सहित नव योगीन्द्र का यह प्रसङ्ग त्रेता युग में हुआ था। कारण उक्त प्रसङ्ग में लिखित है—"सीतापति र्जयति लोकमलघ्न

व्यञ्जितम्। (भा० ६।१४।५) "मुक्तानामपि सिद्धानां नारायणपरायणः। सुदुर्लभः प्रशान्तात्मा' इत्यत्र यद्वत्। अत्र कलिसङ्गेन कीर्त्तनस्य गुणोत्कर्ष इति न वक्तव्यम्, भक्तिमात्रे कालदेश-नियमस्य निषिद्धत्वाद्विशेषतो नामोपलक्ष्य च विष्णुधर्मे क्षत्रबन्धूपाख्याने—

"न देशनियमस्तत्र न कालनियमस्तथा। नोच्छिष्टादौ निषेधश्च हरेर्नामनि लुब्धक।।" ८३८।। इति।

स्कान्दे पाद्मवैशाख-माहात्म्ये विष्णुधर्मे च--"चक्रायुधस्य नामानि सदा सर्वत्र कीर्त्तयेत्" इति, स्कान्द एव च—

"न देशकालावस्थात्मशुद्ध्यादिकमपेक्षते।। किन्तु स्वतन्त्रमेवैतन्नामकामित--कामदम्।।" ८३९।।

विष्णुधर्मे च—

"कलौ कृतयुगं तस्य कलिस्तस्य कृते युगे। यस्य चेतसि गोविन्दो हृदये यस्य नाच्युतः।।" ८४०।।

---

कीर्त्तिः" (भा० ११।४।२१) इस में 'जयति' क्रिया के द्वारा वर्त्तमान काल सूचित हुआ है। अतएव उस से उक्त प्रसङ्ग का समय निर्णय में त्रेतायुग ही आता है। मूल श्लोक में "नारायणपरायणाः" शब्द से श्रीनारायण विषयक प्रेमवान्" इस प्रकार अर्थ जानना होगा। कारण, श्रीनारायण में प्रेम होना ही परम शान्ति है। कार्य्य के द्वारा यह प्रकाशित हुआ है। अर्थात् भा० ११।५।३६ श्लोक में जो 'परमाशान्ति' की कथा कही गई है, वह नारायण निष्ठता का ही परिचायक है। श्रीमद् भागवत के ६।१४।५ में नारायण परायण जन को परम शान्त कहा गया है।

"मुक्तानामपि सिद्धानां नारायण परायणः।
सुदुर्ल्लभः प्रशान्तात्मा कोटिष्वपि महामुने।।

कोटि कोटि जीवन्मुक्त महापुरुष वृन्द के मध्य में एक व्यक्ति मुक्त होता है। कोटि कोटि सिद्ध महा पुरुषों के मध्य में प्रशान्तात्मा नारायण परायण भक्त सुदुर्ल्लभ है। अतएव नारायण परायण व्यक्ति जो प्रशान्त चित्त होता है, उक्त प्रमाण से यह सुस्थिर हुआ। कलियुग में ही श्रीहरिनाम सङ्कीर्त्तन गुणोत्कर्ष मण्डित होता है, इस प्रकार धारण करनी नहीं चाहिये। कारण, भक्ति मात्र में काल देश का नियम नहीं है। विशेष कर ही नाम को उपलक्ष्य करके विष्णु धर्म के क्षत्रबन्धुपाख्यान में उक्त है।

"न देशनियमस्तत्र न कालनियमस्तथा।
नोच्छिष्टादौ निषेधश्च हरेर्नामनि लुब्धक।।" ८३८।।

हे लुब्धक! व्याध! श्रीहरिनाम ग्रहण में देश का नियम नहीं है, काल का नियम नहीं है। यहाँतक कि उच्छिष्ट प्रभृति अवस्था में भी नाम ग्रहण करने में निषेध नहीं है।

स्कन्द पुराण के वैशाख माहात्म्य में एवं विष्णु धर्म में लिखित है—

"चक्रायुधस्य नामानि सदा सर्वत्र कीर्त्तयेत्"

चक्रायुध श्रीहरि का नाम कीर्त्तन सर्वदेश एवं सर्व काल में करना कर्त्तव्य है। स्कन्द पुराण में लिखित है—

'न देशकालावस्थात्मशुद्ध्यादिकमपेक्षते।
किन्तु स्वतन्त्रमेवैतन्नामकामित--कामदम्।।" ८३९।।

श्रीहरि नाम ग्रहण में देश काल अथवा अवस्था वा चित्त शुद्ध की अपेक्षा नहीं है। श्रीहरि नाम परम स्वतन्त्र है, एवं कामित को अभीष्ट प्रदान कारी है। विष्णु धर्म में भी उक्त है—

"कलौ कृतयुगं तस्य कलिस्तस्य कृते युगे।

न च कलावन्यसाधनासमर्थत्वादेव तेनाल्पेनापि महत् फलं भवति, न तु तस्य गरीयस्त्वेनेति मन्तव्यम् । (वि० पु० ६।८।५५)--

"यस्मिन् न्यस्तमतिर्न याति नरकं स्वर्गोऽपि यच्चिन्तने ।
विघ्नो यत्र निवेशितात्ममनसां ब्राह्मोऽपि लोकोऽल्पकः ।
मुक्तिं चेतसि यः स्थितोऽमलधियां पुंसां ददात्यव्ययः ।
किं चित्रं यदघं प्रयाति विलयं तत्राच्युते कीर्त्तिते ॥"८४१॥

इति समाधिपर्य्यन्तादपि स्मरणात् कैमुत्येन कीर्त्तनस्यैव गरीयस्त्वं श्रीविष्णुपुराणे दर्शितम् । अतएवोक्तम् (भा० २।१।११)-"एतन्निर्विद्यमानानाम्" इत्यादि, तथा च—

"अघच्छित् स्मरणं विष्णोर्बह्वायासेन साध्यते । ओष्ठस्पन्दनमात्रेण कीर्त्तनन्तु ततो वरम् ॥"८४२॥

---

यस्य चेतसि गोविन्दो हृदये यस्य नाच्युतः ॥"८४०॥

जिस के हृदय में श्रीगोविन्द विद्यमान हैं, उस के पक्ष में कलियुग ही सत्य युग है । एवं जिस के चित्तमें श्रीअच्युताख्य गोविन्द की स्मृति नहीं है । उसके पक्षमें सत्ययुग भी कलियुग है । इस प्रकार कथन समीचीन नहीं है कि—कलियुग में जीवों की अन्य साधन सामर्थ्य है ही नहीं, तज्जन्य अल्प साधन के द्वारा महाफल होता है, किन्तु श्रीहरि नाम साधन का किसी प्रकार गुरुत्व नहीं है । कारण, विष्णु पुराण के ६।८।५५ में लिखित है ।

"यस्मिन् न्यस्तमतिर्न याति नरकं स्वर्गोऽपि यच्चिन्तने ।
विघ्नो यत्र निवेशितात्ममनसां ब्राह्मोऽपि लोकोऽल्पकः ।
मुक्तिं चेतसि यः स्थितोऽमलधियां पुंसां ददात्यव्ययः ।
किं चित्रं यदघं प्रयाति विलयं तत्राच्युते कीर्त्तिते ॥"८४१॥

श्रीकृष्ण को मन अर्पण करने से नरक में जाना नहीं पड़ता है । जिन की चिन्ता करने से स्वर्ग सुख भी विघ्न रूप से अनुभूत होता है । जिस में मनोनिवेश करने से सत्य लोक भी तुच्छ प्रतीत होता है । निर्म्मल चित्त मानव के हृदय में अवस्थित होकर जो अव्यय श्रीहरि मुक्ति प्रदान करते हैं, उन अच्युताख्य श्रीकृष्ण का कीर्त्तन करने से जो पाप विनष्ट होगा—इस में आश्चर्य्य होने का क्या है ? इस श्लोक में स्मरण की समाधि अवस्था में भी श्रीकृष्ण स्मरण का वर्णन हुआ है, अतः कैमुतिक न्याय से नाम कीर्त्तन का ही श्रेष्ठत्व दर्शित हुआ है । अतएव भा० २।१।११ में विहित है—

"एतन्निर्विद्यमानानामिच्छतामकुतोभयम् ।
योगिनां नृप निर्णीतं हरेर्नामानुकीर्त्तनम् ॥

इस श्लोक द्वारा श्रीशुक मुनिने विषयी मुक्त मुमुक्षु-महापुरुष वृन्द के पक्ष में श्रीहरिनाम कीर्त्तन को ही अकुतोभय रूप से निर्देश किया है । वैष्णव चिन्तामणि नामक ग्रन्थ में लिखित है—

"अघच्छित् स्मरणं विष्णोर्बह्वायासेन साध्यते ।
ओष्ठस्पन्दनमात्रेण कीर्त्तनन्तु ततो वरम् ॥"८४२॥

अघारि श्रीविष्णु का स्मरण बहु आयास साध्य है, अर्थात् विविध विषयों से चित्त संहरण करके श्रीविष्णु में स्थापन करना पड़ता है । किन्तु ओष्ठ स्पन्दन मात्र साध्य श्रीनाम कीर्त्तन, स्मरण से भी श्रेष्ठ प्रभाव शाली है । अन्यत्र भी उक्त है—

इति वैष्णवचिन्तामणौ,

"येन जन्मशतैः पूर्वं वासुदेवः समर्च्चितः । तन्मुखे हरिनामानि सदा तिष्ठन्ति भारत ॥"८४३॥

इत्यन्यत्र, "सर्वापराधकृदपि" इत्यादि-नामापराधभञ्जनस्तोत्रे च । तस्मात् सर्व्वत्रैव युगे श्रीमत्कीर्त्तनस्य समानमेव सामर्थ्यम् । कलौ च श्रीभगवता कृपया तद्ग्राह्यत इत्यपेक्ष्यैव तत्र तत्प्रशंसेति स्थितम् । अतएव, यदन्यापि भक्तिः कलौ कर्त्तव्या, तदा तत्संयोगेनैवेत्युक्तम् (भा० ११।५।३२) —"यज्ञैः सङ्कीर्त्तनप्रायैर्यजन्ति हि सुमेधसः" इति । अत्र च स्वतन्त्रमेव नामकीर्त्तनमत्यन्तप्रशस्तम् ।

"हरेर्नाम हरेर्नाम हरेर्नामैव केवलम् । कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ॥"८४४॥

इत्यादौ, तस्मात् साधूक्तम् (भा० ११।४।३६) -"कलिं सभाजयन्त्यार्य्या गुणज्ञाः" इत्यादित्रयम् । श्रीकरभाजनो निमिम् ॥

---

"येन जन्मशतैः पूर्वं वासुदेवः समर्च्चितः ।
तन्मुखे हरिनामानि सदा तिष्ठन्ति भारत ॥"८४३॥

जिसने पूर्वशत शत जन्म में श्रीवासुदेवार्च्चन किया है । उस के ही मुख में सर्वदा श्रीहरिनाम समूह विद्यमान होते हैं । श्रीहरि चरणों में आश्रय ग्रहण करने से सर्व विध अपराध कारी व्यक्ति भी मुक्त होता है । "सर्वापराधकृदपि" नामापराधस्तोत्र में श्रीहरि नाम कीर्त्तन की महिमा वर्णित है । अतएव समस्त युगों में ही श्रीहरिनाम सङ्कीर्त्तन की समान सामर्थ्य है । यह जानना होगा । तब जो कलियुग में कीर्त्तन की अत्यधिक प्रशंसा की गई है—उस का कारण है – अन्यान्य युग में श्रीभगवान् ध्यानादि का प्रचार स्वयं आचरण करके जिस प्रकार करते हैं, उस प्रकार श्रीहरि नाम सङ्कीर्त्तन की शिक्षा प्रदान स्वयं आचरण करके नहीं करते हैं । किन्तु कलियुग में श्रीभगवान् जीव दुर्गति को देखकर स्वयं श्रीनाम सङ्कीर्त्तन करके जीव वृन्द को शिक्षा प्रदान करते हैं । इस को अपेक्षा से ही कलियुगमें श्रीहरिनाम सङ्कीर्त्तन भूयसी प्रशंसा की गई है । अतएव कलियुग में यदि अन्य भक्त्यङ्ग का अनुष्ठान करना कर्त्तव्य हो तो—श्रीहरिनाम के सहित ही अर्थात् नाम सङ्कीर्त्तन को परित्याग न करके ही अन्य भक्त्यङ्ग का अनुष्ठान करना चाहिये । अतएव भा० ११।५।३२ में उक्त है—

"यज्ञैः सङ्कीर्त्तन प्रायैर्यजन्तिहि सुमेधसः ॥'

सुमेधा व्यक्ति गण, सङ्कीर्त्तन प्रधान यज्ञ के द्वारा कलियुग में श्रीभगवान् की आराधना करते रहते हैं । इस कीर्त्तनाङ्ग भक्ति में श्रीहरिनाम सङ्कीर्त्तन ही स्वतन्त्र रूपसे अत्यन्त प्रशस्त है । अर्थात् श्रीनारदीय पुराण में उक्त है—

"हरेर्नाम हरेर्नाम हरेर्नामैव केवलम् ।
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ॥८४४॥

सत्य युग में ध्यानानुष्ठान से जो फल होता है, कलियुग में श्रीहरिनाम सङ्कीर्त्तन से ही वह फल होता है । यह छोड़ कर अन्य उपाय नहीं है । एवं त्रेता युग में यज्ञ के द्वारा जो फल लाभ होता है, कलि युग में श्रीनाम सङ्कीर्त्तन के द्वारा वह फल लाभ होता है, एतद्व्यतीत अन्य उपाय नहीं है । द्वापर युग में श्रीभगवत् परिचर्य्या के द्वारा जो फल होता है, कलियुग में एकमात्र श्रीहरिनाम ग्रहण से ही वह फल लाभ होता है, इस को छोड़कर उपायान्तर नहीं है । सुतरां भा० ११।५।३६ में उक्त है—

२७४। तदेवं कलौ नामकीर्त्तन प्रचारप्रभावेनैव परमभगवत्परायणत्वसिद्धिर्दर्शिता। तत्र पाषण्ड-प्रवेशेन नामापराधिनो ये, तेषान्तु तद्बहिर्मुखत्वमेव स्यादिति व्यतिरेकेण तद्-द्रढ़यति (भा० १२।३।४३-४४)—

(२७४) "कलौ न राजन् जगतां परं गुरुं, त्रिलोकनाथानत-पादपङ्कजम्।
प्रायेण मर्त्या भगवन्तमच्युतं, यक्ष्यन्ति पाषण्डविभिन्नचेतसः ॥८४५॥
यन्नामधेयं म्रियमाण आतुरः, पतन् स्खलन् वा विवशो गृणन् पुमान्।
विमुक्तकर्मार्गल उत्तमां गतिं, प्राप्नोति यक्ष्यन्ति न तं कलौ जनाः ॥"८४६।

स्पष्टम् ॥श्रीशुकः ॥

---

"कलिं सभाजयन्त्यार्य्या गुणज्ञाः सार भागिनः।
यत्र सङ्कीर्त्तनेनैव सर्वः स्वार्थोऽभिलभ्यते ॥"

टीका—एतेषु चतुर्युगेषु कलिरेव श्रेष्ठ इत्याह कलिमिति। गुणज्ञाः, कलेर्गुणं जानन्ति ये ते। ननु दोषाणां बहुत्वात् कथं समाजयन्ति तत्राह यत्रेति तदुक्तम्। "ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्च्चयन्। यदाप्नोति तदाप्नोति कलौ सङ्कीर्त्य केशवमिति।"

'नह्यतः परमो लाभो देहिनां भ्राम्यतामिह।
यतोविन्देत परमां शान्तिं नश्यति संसृतिः ॥" (३७)

टीका—तस्मात् कलौ अतोऽस्मात् सङ्कीर्त्तनात् परमो लाभो नास्ति। यतः सङ्कीर्त्तनात् ॥
कीर्त्तन सम्बन्ध में तीन श्लोकों के द्वारा जो कुछ कहा गया है, वह उत्तम है।
श्रीकर भाजन निमिमहाराज को कहे थे ॥२७३॥

२७४। भा० ११।५।३८ में उक्त है—

"कृतादिषु प्रजा राजन् कलाविच्छन्ति सम्भवम्।
कलौ खलु भविष्यन्ति नारायण परायणः ॥"

श्रीचमस योगीन्द्र की उक्ति के अनुसार कलियुग में नारायण परायण मान का संवाद ज्ञात होता है। वह भी कलि में श्री भगवन्नाम सङ्कीर्त्तन के प्रभाव से ही सम्भव है। अर्थात् सर्वत्र श्रीहरिनाम सङ्कीर्तन प्रचार होने के कारण ही, जीवगण नारायण परायण हुये हैं। उस के मध्य में पाषण्ड भावाक्रान्त होने के कारण अधिकांश मनुष्य नामापराधी होते हैं, एवं श्रीभगवान् का भजन नहीं करते हैं। किन्तु जो लोक निरपराधी होते हैं, वे श्रीभगवान् का भजन करते हैं। इस रीति से उक्त विरुद्ध भावाक्रान्त श्लोक द्वय की सङ्गति होती है। पाषण्ड भावाक्रान्त होने से ही नामापराध होता है। एवं नामापराध होने से ही भगवद् वहिर्मुखता होती है, व्यतिरेकमुख से उसका वर्णन भा० १२।३।४३-४३ में है।

(२७४) "कलौ न राजन् जगतां परं गुरुं, त्रिलोकनाथानत- पादपङ्कजम्।
प्रायेण मर्त्या भगवन्तमच्युतं, यक्ष्यन्ति पाषण्डविभिन्नचेतसः ॥८४५॥
यन्नामधेयं म्रियमाण आतुरः पतन् स्खलन् वा विवशो गृणन् पुमान्।
विमुक्तकर्मार्गल उत्तमां गतिं, प्राप्नोति यक्ष्यन्ति न तं कलौ जनाः ॥"८४६॥

श्रीशुक-श्रीपरीक्षित् को कहे थे—हे राजन्! त्रिलोक के प्रभु गण, जिन के चरणों में सतत नत

२७५। तदेवं कीर्त्तनं व्याख्यातम्। तत्रास्मिन् कीर्त्तने निजदैन्य-निजाभीष्टविज्ञप्ति-स्तवपाठावप्यन्तर्भाव्यौ। तथा तत्र श्रीभागवतस्थित-नामादिकीर्त्तनन्तु पूर्ववदन्यदीय-नामादि-कीर्त्तनादधिकं ज्ञेयम्, कलौ तु प्रशस्तं तत् (भा० १।३।४३)—

"कृष्णे स्वधामोपगते धर्मज्ञानादिभिः सह।
कलौ नष्टदृशामेष पुराणार्कोऽधुनोदितः॥"८४७॥ इति।

अथ शरणापत्त्यादिभिः शुद्धान्तःकरणश्चेत् (भा० २।१।११)—"एतन्निर्विद्यमानानामिच्छताम-कुतोभयम्" इत्याद्युक्त्वान्नामकीर्त्तनापरित्यागेन स्मरणं कुर्य्यात्, तच्च मनसानुसन्धानम्, यदेव नामादि-सम्बन्धित्वेन बहुविधं भवति। तत्र स्मरण-सामान्यम् (भा० ११।१३।१४)—

---

होते हैं। पाषण्ड भाव से विभिन्न चित्त कलियुग के मनुष्यगण जगत् प्रभु अच्युत रूप भगवान् की पूजा नहीं करेंगे। म्रियमाण, एवं आतुर अवस्था में गिरते गिरते, स्खलन अवस्था में जिन का नाम ग्रहण करने से मानव निखिल कर्म बन्धन से मुक्त हो जाता है, कलियुग के मानववृन्द उन श्रीहरि की पूजा नहीं करते हैं। श्रीशुक कहे थे॥२७४॥

२७५। उक्त रीति से कीर्त्तनाङ्ग भक्ति का वर्णन हुआ। इस कीर्त्तनाङ्ग भक्ति में निज दैन्य मिश्रित निजाभीष्ट विज्ञप्ति एवं स्तव पाठ भी अन्तर्भुक्त है। उस के मध्य में भी श्रीमद् भागवतोक्त श्रीभगवान् के नाम, रूप, गुण एवं लीला प्रभृति का कीर्त्तन अन्य पुराण में वर्णित नाम रूपादि से प्रशस्त है। इस प्रकार जानना होगा। किन्तु कलिकाल में श्रीमद् भागवत कीर्त्तन ही समस्त श्रवण कीर्त्तन से श्रेष्ठ है। कारण, यह श्रीमद् भागवत—श्रीकृष्ण के प्रतिनिधि रूप में कलिकलुष हत जीव गण के साध्य साधन तत्त्व निरूपण के निमित्त इस कलियुग में आविर्भूत हुए हैं। भा० १।३।४५ में उक्त है—

"कृष्णे स्वधामोपगते धर्मज्ञानादिभिः सह।
कलौ नष्टदृशामेष पुराणार्कोऽधुनोदितः॥"८४७॥

श्रीसूत—शौनकादि ऋषि गण को कहे थे—श्रीकृष्ण, धर्म ज्ञान वैराग्य एवं ऐश्वर्य्य के सहित निज धाम में प्रविष्ट होने पर कलियुग में नष्ट दृष्टि मानव को साध्य साधन तत्त्व दर्शाने के निमित्त यह श्रीमद् भागवत शास्त्र सूर्य्य रूप में उदित हुये हैं।

अनन्तर शरणापत्ति प्रभृति के द्वारा अन्तः करण शुद्ध यदि होता है तो, भा० २।१।११ में वर्णित—"एतन्निर्विद्यमानानामिच्छतामकुतोऽभयम्" विषयी, मुमुक्षु, मुक्त महापुरुष वृन्द के पक्ष में एकमात्र अकुतोभय श्रीहरिनाम सङ्कीर्त्तन ही है। इस प्रमाण के अनुसार श्रीनाम सङ्कीर्त्तन को परित्याग न करके स्मरण करना कर्त्तव्य है, मनसा भगवद्विषयक अनुसन्धान का नाम स्मरण है। यह स्मरण—नाम, रूप, गुण, लीला, परिकर भेद से पञ्चविध हैं। उक्त स्मरण भी साधक की मानस अवस्था के भेद से—स्मरण, धारणा, ध्यान, ध्रुवानुस्मृति एवं समाधि—पञ्चविध हैं, यह स्मरणाङ्ग भक्ति—समष्टि गत रूप पञ्चविंशति प्रकार हैं। वह भक्ति सगुणा निर्गुणा भेद से द्विविध हैं, उस के मध्य में सगुणा भक्ति, तामसी, राजसी, सात्त्विकी भेद से त्रिविध हैं। एवं उत्तम, मध्यम, कनिष्ठ भेदसे उक्त भक्ति प्रत्येक त्रिविध हैं। अर्थात् उत्तमा तामसी, मध्यमा तामसी, कनिष्ठा तामसी—इस रीति से प्रत्येक तीन प्रकार होने से सगुणा भक्ति नव विध होती हैं। एवं निर्गुणा भक्ति—एक प्रकार है। इस प्रकार स्मरणाङ्ग भक्ति के बहु प्रकार भेद हैं। उस में से स्मरण सामान्य का वर्णन भा० ११।१३।१४ में है—

(२७५) "एतावान् योग आदिष्टो मच्छिष्यैः सनकादिभिः।
सर्वतो मन आकृष्य मय्यद्धावेश्यते यथा ॥" ८४८॥

यथा यथावत्, मय्यावेश्यत इत्येतावानित्यर्थः। तथा च स्कान्दे ब्रह्मोक्तौ-"आलोड्य सर्वशास्त्राणि विचार्य्य च पुनः पुनः" इत्यादि॥ श्रीभगवान्॥

२७६। तत्र नाम-स्मरणम्—

"हरेर्नाम परं जप्यं ध्येयं गेयं निरन्तरम्। कीर्त्तनीयञ्च बहुधा निर्वृतीर्बहुधेच्छता॥" ८४९॥

इति जाबालिसंहिताद्यनुसारेण ज्ञेयम्। नाम स्मरणन्तु शुद्धान्तः करणतामपेक्षते। तत् कीर्त्तनाद्वावरमिति मूले तु नोदाहरण-स्पष्टता। रूप-स्मरणमाह, (भा० १२।१२।५५)—

(२७६) "अविस्मृतिः कृष्णपदारविन्दयोः, क्षिणोत्यभद्राणि च शं तनोति।
सत्त्वस्य शुद्धिं परमात्मभक्तिं, ज्ञानञ्च विज्ञान-विरागयुक्तम्॥" ८५०॥

---

(२७५) "एतावान् योग आदिष्टो मच्छिष्यैः सनकादिभिः।
सर्वतो मन आकृष्य मय्यद्धावेश्यते यथा॥" ८४८॥

टीका—विषयैः सुग्रथितस्य मनसस्तद्वियोगेन ईश्वरनिष्ठत्वमसम्भावितं मन्यमानं प्रति तन्निरूपणाय इतिहासमुपक्षिपति एतावानिति। यथा यथावन्मय्यावेश्यते एतावानित्यर्थः॥

भगवान् श्रीकृष्ण उद्धव को कहे थे। हे उद्धव! मेरे शिष्य सनकादि ऋषिगण इस प्रकार योग का प्रवर्त्तन किये हैं। समस्त विषयों से मनको आकर्षण करके जिस से सब प्रकार से मुझ में ही मन का आवेश हो। स्कन्द पुराण में ब्रह्मोक्ति है—

"आलोड्य सर्वशास्त्राणि विचार्य्यं च पुनः पुनः।
इदमेव सुनिष्पन्नं ध्येयो नारायणः सदा॥"

श्रीब्रह्मा, श्रीनारद को कहे थे—हे वत्स! समस्त शास्त्र को आलोड़न करके एवं पुनः पुनः विचार करके यही सनिष्पन्न हुआ है कि—भगवान् नारायण ही एक मात्र ध्येय हैं। श्रीभगवान् कहे थे—॥२७५॥

२७६। नाम स्मरण का वर्णन करते हैं—

'हरेर्नाम परं जप्यं ध्येयं गेयं निरन्तरम्।
कीर्त्तनीयञ्च बहुधा निर्वृतीर्बहुधेच्छता॥८४९॥

जो बहु प्रकार से आनन्द लाभेच्छु है, उस को एकमात्र श्रीहरि नाम का जप, ध्यान, गान एवं कीर्त्तन करना चाहिये। तात्पर्य्य यह है कि श्रीहरि नाम जप करने से जो आनन्द लाभ होता है, उस से अन्य प्रकार आस्वादन ध्यान करने से होता है। एवं गान से अन्य प्रकार आस्वादन होता है, और कीर्त्तन करने से अन्य प्रकार ही आस्वादन होता है। एक ही श्रीहरि नाम से विभिन्न प्रकार आस्वादन होते हैं। नाम, रूप, गुण, लीला परिकर प्रभृति के कीर्त्तन स्मरणादि से भी पृथक् पृथक् आस्वादन होते हैं। जाबालिसंहिता के अनुसार नाम स्मरण विधि को जानना कर्त्तव्य है। किन्तु नाम स्मरण में चित्त शुद्धि की अपेक्षा है। अर्थात् चित्त शुद्ध न होने से नाम स्मरण की योग्यता नहीं होती है। अतएव कीर्त्तनाङ्ग से स्मरणाङ्ग न्यून शक्ति सम्पन्न है, कारण, जिस को दूसरी की अपेक्षा रहती है, वह दुर्बल है। स्मरण, चित्त शुद्धि की अपेक्षा करता है, अतः वह दुर्बल है, कीर्त्तन में चित्त शुद्धि की अपेक्षा नहीं है, अतः वह सरल है। मूल में किन्तु इस विषयका स्पष्टीकरण नहीं है।

परमात्मनि श्रीकृष्णे प्रेमलक्षणां भक्तिमिति मुख्यं फलमन्यानि त्वानुषङ्गिकाणि ॥ श्रीसूतः ।

२७७ । किञ्च, (भा० १०।८०।११)—

(२७७) "स्मरतः पादकमलमात्मानमपि यच्छति ।
किं न्वर्थकामान् भजतो नात्यभीष्टान् जगद्गुरुः ॥"८५१॥

स्मरतः स्मरते, साक्षात् प्रादुर्भूय आत्मानं स्मर्त्तुर्वशीकरोतीत्यर्थः । अर्थकामानिति बहुवचनं मोक्षमप्यन्तर्भावयति लिङ्गसमवाय-न्यायेन । यस्मादेवं तन्माहात्म्यम्, तस्मादेव गारुड़ेऽपीदमुक्तम् —

"एकस्मिन्नप्यतिक्रान्ते मुहूर्त्ते ध्यानवर्जिते । दस्युभिर्मुषितेनेव युक्तमाक्रन्दितं भृशम् ॥"८५२॥ इति ।

श्रीदामविप्र-भार्य्या तम् ॥

---

सम्प्रति रूप स्मरण का वर्णन करते हैं—भा० १२।१२।५५ में उक्त है—

(२७६) "अविस्मृतिः कृष्णपदारविन्दयोः क्षिणोत्यभद्राणि च शं तनोति ।
सत्त्वस्य शुद्धिं परमात्मभक्तिं, ज्ञानञ्च विज्ञान-विरागयुक्तम् ।"

टीका—ततः किमतआह—अविस्मृतिरिति क्षिणोति—नाशयति ।

श्रीसूत—शौनक प्रभृति को कहे थे—श्रीकृष्ण पदारविन्द की स्मृति अर्थात् स्मरण--निखिल अमङ्गल को विनष्ट करता है । मङ्गल विस्तार करता है, चित्त शुद्ध करता है, एवं भगवच्चरणों में भक्ति प्रदान करता है । एवं विज्ञान विराग युक्त ज्ञान प्रदान करता है । यहाँ पर ज्ञातव्य यह है कि– प्रेम लक्षणा भक्ति लाभ ही भगवच्चरणारविन्द सेवा का मुख्य फल है—अपर--अमङ्गल नाश चित्त शुद्धि प्रभृति आनुषङ्गिक फल हैं ।

श्रीसूत कहे थे ॥२७६॥

२७७ । भा० १०।८०।११ में और भी लिखित है--

(२७७) "स्मरतः पादकमलमात्मानमपि यच्छति ।
किं न्वर्थकामान् भजतो नात्यभीष्टान् जगद्गुरुः ॥"८५१॥

श्रीदाम पत्नी श्रीदाम विप्र को कही थी– जगद् गुरु श्रीकृष्ण, निज चरण स्मरण कारी व्यक्ति के निकट आविर्भूत होकर आत्मदान करते हैं, अर्थात् वशीभूत होते हैं । आत्मदान शब्द से स्फूर्त्ति प्राप्त होते हैं, इस प्रकार अर्थ जानना होगा । मूल श्लोक में अर्थ कामान्-बहु वचन का प्रयोग है-उससे जानना होगा । कि—अर्थ एवं काम्य वस्तु दान तो करते ही हैं, मुक्ति प्रदान भी करते हैं । इस प्रकार अर्थ लिङ्ग समवाय न्यायानुसरण से होता है । समान लिङ्ग द्वारा जहाँ अनुक्त समानलिङ्ग गृहीत होता है, वहाँ लिङ्ग समवाय न्याय का प्रयोग होता है । यहाँ अर्थ एवं काम शब्द---पुंलिङ्ग है । एवं मोक्ष शब्द भी पुंलिङ्ग है, अतः अर्थ एवं काम शब्द से मोक्ष भी गृहीत हुआ ।

नाम स्मरण का माहात्म्य इस प्रकार होने के कारण ही गरुड़ पुराण में कथित है—

"एकस्मिन्नप्यतिक्रान्ते मुहूर्त्ते ध्यानवर्जिते ।
दस्युभिर्मुषितेनेव युक्तमाक्रन्दितुं भृशम् ॥"८५२॥

श्रीहरि ध्यान शून्य होकर एक मुहूर्त्तकाल भी गत होने से दस्यु गण कर्तृक महाधन हृत होने से लोक जिस प्रकार आर्त्तस्वर से कांदते हैं उस प्रकार ही कांदना चाहिये ।

श्रीदामविप्र की भार्य्या श्रीदाम विप्र को कही थी ॥२७७॥

२७८। अथ पूर्ववत् क्रमसोपान-रीत्या सुखलभ्यं गुण-परिकर-सेवा-लीला स्मरणञ्चानुसन्धेयम्। तदिदं स्मरणं पञ्चविधम्,—यत्किञ्चिदनुसन्धानं स्मरणम्, सर्वतश्चित्तमाकृष्य सामान्याकारेण मनोधारणं धारणा, विशेषतो रूपादिचिन्तनं ध्यानम्, अमृतधारावदनवच्छिन्नं तद्ध्रुवानुस्मृतिः, ध्येयमात्र-स्फुरणं समाधिरिति। तत्र स्मरणम्—

"येन केनाप्युपायेन स्मृतो नारायणोऽव्ययः।
अपि पातकयुक्तस्य प्रसन्नः स्यान्न संशयः ॥८५३॥" इति बृहन्नारदीयादौ,

धारणा (भा० ११।१४।२७)—

"विषयान् ध्यायतश्चित्तं विषयेषु विषज्जते।
मामनुस्मरतश्चित्तं मय्येव प्रविलीयते ॥"८५४॥ इत्यादौ,

"भगवच्चरणद्वन्द्व-ध्यानं निर्द्वन्द्वमीरितम्। पापिनोऽपि प्रसङ्गेन विहितं सुहितं परम् ॥"८५५॥

ध्यानम्—

---

२७८। अनन्तर पूर्ववत् क्रम सोपान रीति से अर्थात् नाम स्मरण के पश्चात् रूप स्मरण, इस के पश्चात् गुण स्मरण, इस प्रकार क्रम परिपाटी से सुख लभ्य श्रीहरि के गुण, परिकर, सेवा एवं लीला प्रभृति का स्मरण करना कर्त्तव्य है। यह स्मरण पञ्चविध हैं। यथा कथञ्चित् रूप से श्रीहरि के नाम रूपादि का अनुसन्धान करने का नाम स्मरण है। (१) समस्त विषयों से चित्त आकर्षण पूर्वक साधारण रूप से श्रीहरि के नामादि में चित्त धारण करने का नाम धारणा है। (२) विशेष रूप से नाम रूपादि चिन्ता का नाम ध्यान है। (३) अमृत धारावत् अविच्छिन्न भाव से स्मरण का नाम 'ध्रुवानुस्मृति है। (४) ध्यातृ ध्यान स्फूर्ति शून्य होकर केवल मात्र ध्येय आकार में चित्त वृत्ति का अवस्थान का नाम समाधि है। (५) तन्मध्ये स्मरण का उदाहरण यह है—बृहन्नारदीय में उक्त है—

'येन केनाप्युपायेन स्मृतो नारायणोऽव्ययः।
अपि पातकयुक्तस्य प्रसन्नः स्यान्न संशयः ॥"८५३॥

जिस किसी उपाय से नारायण का स्मरण करने से निखिल पाप युक्त हृदय भी प्रसन्न होता है। इस में संशय नहीं है। भा० ११।१४।२७ में धारणा का वर्णन है—

"विषयान् ध्यायत श्चित्तं विषयेषु विषज्जते।
मामनुस्मरतश्चित्तं मय्येव प्रविलीयते ॥"८५४॥

टीका—किञ्च ज्ञानं नाम चित्तस्य मदाकारपरिणामः। स च मां भजतः स्वभावत एव भवति न च यत्नान्तरमपेक्षते—इति सदृष्टान्तमाह—विषयानिति।

विविध विषय ध्यान कारी मानव का चित्त विषय में जिस प्रकार निमग्न होता है, उस प्रकार जो व्यक्ति मेरा ध्यान करता है। उस का चित्त भी मुझ में निमज्जित हो जाता है। जल में निमग्न व्यक्ति जिस प्रकार चारों ओर जल को ही देखता है। उस प्रकार मुझ में निमग्न चित्त व्यक्ति भी सब ओर मुझ को ही देखता है।

श्रीनरसिंह पुराण प्रभृति में ध्यान की महिमा वर्णित है—

"भगवच्चरणद्वन्द्व--ध्यानं निर्द्वन्द्वमीरितम्।
पापिनोऽपि प्रसङ्गेन विहितं सुहितं परम् ॥८५५॥

इति नारसिंहादौ। तत्र निर्द्वन्द्वं शीतोष्णादिमय-दुःखपरम्परातीतम्, ईरितं शास्त्रविहितम्, तच्च पापिनोऽपि प्रसङ्गेनापि परमुत्कृष्टं सुहितं विहितं तत्रैवेत्यर्थः। ध्रुवानुस्मृतिश्च (भा० ३।२९।११) "मद्गुणश्रुतिमात्रेण" इत्यादौ, (भा० ११।२।५३) "त्रिभुवनविभवहेतवेऽप्यकुण्ठ-स्मृतिः" इत्यादौ च। एषैव श्रीरामानुजभगवत्पादैः प्रथमसूत्रे दर्शितास्ति। समाधिमाह (भा० १२।१२।६)—

(२७८) "तयोरागमनं साक्षादीशयोर्जगदात्मनोः।
न वेद रुद्धधीवृत्तिरात्मानं विश्वमेव च॥"८५६॥

तयोः—रुद्र-तत्पत्न्योः, भगवदंश-तच्छक्तित्वात् जगदात्मनोरतत्प्रवर्त्तकयोरपि। तत्र हेतुः-

---

भगवच्चरणारविन्द युगल ध्यान ही निर्द्वन्द्व है। अर्थात् शीत, ग्रीष्म, सुख, दुःख, क्षुधा पिपासा प्रभृति का अतीत है। भगवच्चरण युगल का ध्यान करने से क्षुधा, पिपासा, जरा, मृत्यु, शीत, ग्रीष्म जनित किसी प्रकार उद्वेग उपस्थित नहीं होता है। पापी व्यक्ति भी यदि प्रसङ्ग क्रम से भगवच्चरणार विन्द का ध्यान करता है तो, उस का परमहित साधित होता है। निखिल शास्त्र की यही व्यवस्था है। ध्रुवानुस्मृति का प्रसङ्ग भा० ३।२९।११ में है—

"मद्गुणश्रुतिमात्रेण मयि सर्व गुहाशये।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ।

श्रीकपिल देव निज जननी को कहे थे-हे मातः! निर्गुण भक्ति लक्षण को करता हूँ। मदीय प्रसङ्ग श्रवण मात्र से ही गङ्गा जल की निर्बाधगति सिन्धु की ओर जिस प्रकार होती है, उस प्रकार मुझ में अविच्छिन्ना अर्थात् लयविक्षेपादि द्वारा अप्रतिहता मनोवृत्तिका नाम ही निर्गुण भक्तियोग वा ध्रुवानुस्मृति किंवा निष्ठाभक्ति है। भा० ११।२।५३ "त्रिभुवनविभवहेतवेऽप्यकुण्ठस्मृतिः" श्लोक में भी ध्रुवानुस्मृति का उल्लेख है। उक्त श्लोक का सारार्थ यह है कि--लव निमेषमात्र भगवद् विस्मृति से त्रिभुवन विभव प्राप्त होने का अवसर होता है, इस प्रकार सुन कर भी जो संयत चित्त देव गण कर्त्तृक अन्वेषणीय चरण ध्यान से विचलित नहीं होता है, वही वैष्णव श्रेष्ठ है।

श्रीरामानुज भगवद् पाद ने ब्रह्म सूत्र १।१।१ अथातो ब्रह्म जिज्ञासा सूत्र व्याख्या में ध्रुवानुस्मृति का उल्लेख किया है।

सम्प्रति समाधिका वर्णन करते हैं—भा० १२।१०।६ में उक्त है—

(२७८) "तयोरागमनं साक्षादीशयोर्जगदात्मनोः।
न वेद रुद्धधीवृत्तिरात्मानं विश्वमेव च।"८५६॥

क्रमसन्दर्भ—समाधिमाह तयोरिति। तयो रुद्रतत् पत्न्योः, भगवदंश तच्छक्तित्वाज्जगदात्मनोरतत् प्रवर्त्तकयोरपि। तत्र हेतुः—रुद्धधीवृत्तिर्भगवदाविष्ट चित्तः। (भा० १०।१०।६) "भक्ति पराम् इति पूर्वोक्तेः। तस्मादसंप्रज्ञातनाम्नो ब्रह्मसमाधितोभिन्न एवासौ॥

मार्कण्डेय ऋषि तपस्या रत थे, इस समय श्रीशङ्कर शङ्करी के सहित वृषारोहण पूर्वक वहाँ होकर जा रहे थे, शङ्करी मार्कण्डेय को देखकर शङ्कर को बोली थीं, इस बालक को देखकर हृदय स्नेहार्द्र हो रहा है, इस के पास चलें इस को सिद्धि देनी होगी। उत्तर में श्रीशङ्कर कहे थे—यह मार्कण्डेय--- श्रीभगवान् में समाधिस्थ है, निकट में जाने से भी उस के नयनोन्मीलन नहीं होगा। देवी के आग्रह से

रुद्धधीवृत्तिर्भगवदाविष्टचित्तः,-(भा० १२।१०।६) "भक्ति परां भगवति लब्धवान्" इति पूर्वोक्तेः। तस्मादसंप्रज्ञात-नाम्नो ब्रह्मसमाधितो भिन्न एवासौ ॥ श्रीसूतः ॥

२७९। क्वचिल्लीलादियुक्ते च तस्मिन्नन्यास्फूर्त्तिः समाधिः स्यात्, यथाह (भा० १।५।१३)

(२७९) "उरुक्रमस्याखिलबन्धमुक्तये, समाधिनानुस्मर तद्विचेष्टितम्" इति।

स्पष्टम्। एतद्रूपो दासादि-भक्तानाम्। पूर्वस्तु प्रायः शान्तभक्तानाम्, (भा० १२।१२।६९) स्वसुखनिभृतचेतास्तद्व्युदस्तान्यभावो-,ऽप्यजितरुचिरलीलाकृष्टसारः" इत्याद्युक्तिभ्यः ॥ श्रीनारदः श्रीव्यासम् ॥

२८०। अथ रुचिः शक्तिश्च चेत्तदपरित्यागेन पादसेवा च कर्त्तव्या। सेवास्मरणसिद्ध्यर्थञ्च सा कैश्चित् क्रियते। तथा च विष्णुरहस्ये परमेश्वर-वाक्यम्—

"न मे ध्यानरताः सम्यग् योगिनः परितुष्टये। तथा भवन्ति देवर्षे क्रियायोगरता यथा।
क्रियाक्रमेण योगोऽपि ध्यानिनः संप्रवर्त्तते ॥"८५७॥ इति।

---

शङ्कर मार्कण्डेय के समीप में उपस्थित होकर बुलाने लगे, किन्तु मार्कण्डेय ने नेत्रों को नहीं खोला, एवं पुकार भी नहीं सुना। उस समय सपत्नी रुद्र का आगमन को मार्कण्डेय जानने में सक्षम नहीं थे। यद्यपि श्रीरुद्र एव रुद्र पत्नी श्रीभगवान् की अंशशक्ति हैं, अतः जगदात्मा एवं नियामक है। तथापि उनका आगमन अवगत न होने का कारण "रुद्ध धी वृत्तिः" है, अर्थात् मार्कण्डेय श्रीभगवान् में अविष्ट चित्त होने के कारण अन्य अनुसन्धान रहित थे। यहाँपर असम्प्रज्ञात नामक ब्रह्म समाधि से इस समाधि का पार्थक्य जानना होगा। कारण इस श्लोक के पूर्व श्लोक में १२।१०।६ में उक्त है—"भक्ति परां भगवति लब्धवान् पुरुषेऽव्यये।" अर्थात् मार्कण्डेय, अव्यय पुरुष श्रीभगवान् में पराभक्ति प्राप्त किये थे। अतएव यहाँपर जानना होगा। कि—श्रीमान् मार्कण्डेय श्रीभगवान् में प्रेमसमाधि प्राप्त किये थे।

प्रवक्ता श्रीसूत हैं—२७८॥

२७९। किसी किसी अधिकारी व्यक्ति में लीलादि युक्त श्रीभगवान् में अन्य अस्फूर्त्ति लक्षण अर्थात् श्रीभगवान् एवं उनकी लीला भिन्न अपर कुछ स्फूर्त्ति रहित समाधि होती है। भा० १।५।१३ में लिखित है—

(२७९) "उरुक्रमस्याखिलबन्धमुक्तये, समाधिनानुस्मर तद्विचेष्टितम्"

देवर्षि नारद वेद व्यास को कहे थे—हे मुनिवर! प्रेम समाधि के द्वारा अखिल बन्ध मुक्ति हेतु श्रीभगवान् की विविध लीला का नियत स्मरण करो। दास सखा प्रभृति भक्त वृन्द की समाधि पूर्व वर्णित लीलायुक्त श्रीभगवान् में होती है। शान्त भक्त वृन्द की लीला शून्य भगवान् में जो समाधि होती है, उस का वर्णन १२।१२।६९ में इस प्रकार है—

"स्वसुख निभृत चेतास्तद् व्युदस्तान्य भावोऽप्यजित रुचिर लीलाकृष्टसारः"

श्रीशुक—आत्माराम थे। आत्मारामता के कारण पूर्ण काम भी थे, तथापि श्रीकृष्ण की मनोहर लीला कथा से आकृष्ट होकर ब्रह्म समाधि में मन स्थिर करने के अक्षम होकर श्रीकृष्ण की मनोहर लीला वर्णन प्रधान श्रीमद् भागवत कथा का प्रचार समस्त मुनि समाज में किये थे।

श्रीनारद—श्रीव्यास को कहे थे ॥२७९॥

२८०। अनन्तर यदि रुचि एवं सामर्थ्य हो तो श्रीनाम कीर्त्तन एवं स्मरण परित्याग न करके ही

योगोऽत्र समाधिः, पादसेवायां पाद-शब्दो भक्तेचव निर्दिष्टः । ततः सेवायाः सादरत्वं विधीयते । सेवा च काल-देशाद्युचिता परिचर्य्यादिपर्य्याया, सा यथा (भा० ४।२१।३१) —

(२८०) "यत् पादसेवाभिरुचिस्तपस्विना-,मशेष-जन्मोपचितं मलं धियः ।
सद्यः क्षिणोत्यन्वहमेधती सती, यथा पदाङ्गुष्ठविनिःसृता सरित् ॥"८५८॥

तपस्विनां संसारतप्तानां मलं तत्तद्वासनाम् । त्वत्पादस्यैवैष महिमेति दृष्टान्तेनाह,—यथेति ॥ पृथुः श्रीविष्णुम् ॥

२८१ । तथा (भा० १०।५१।५५)—

(२८१) "न कामयेऽन्यं तव पादसेवना,-दकिञ्चनप्रार्थ्यतमाद्वरं विभो ।
आराध्य कस्त्वां ह्यपवर्गदं हरे, वृणीत आर्य्यो वरमात्मबन्धनम् ।"८५९।

---

चरण सेवन करना भी कर्त्तव्य है । कतिपय व्यक्ति स्मरण सिद्धि के निमित्त ही सेवा करते हैं । अतएव विष्णु रहस्य में परमेश्वर का कथन यह है—

"न मे ध्यानरताः सम्यग् योगिनः परितुष्टये ।
तथा भवन्ति देवर्षे क्रिया योगरता यथा ।
क्रियाक्रमेण योगोऽपि ध्यानिनः सम्प्रवर्त्तते ॥"८५७॥

हे देवर्षे ! ध्यानरत योगिगण —मुझ को उस प्रकार सन्तुष्ट करने में सक्षम नहीं हैं, जिस प्रकार प्रेम समाधि युक्त भक्ति क्रिया से मैं जिस प्रकार सन्तुष्ट होता हूँ । यहाँ 'योग' शब्द का अथ है— समाधि । क्रियारूप भक्ति का अनुष्ठान करते करते ध्यान कारी का योग होता है, अर्थात् समाधि होती है । 'पाद सेवा" में प्रयुक्त पाद शब्द द्वारा भक्ति निर्दिष्ट हुई है । अर्थात् केवल चरण सेवा ही करनी होगी श्रीमुख प्रभृति अङ्ग समूह की सेवा नहीं— इस प्रकार अर्थ नहीं है । सर्वाङ्ग की परिचर्य्या हि विहित है । यहाँ "आदर" अर्थ में पाद शब्द का प्रयोग हुआ है । अर्थात् अतिशय आदर एवं मर्य्यादा के सहित श्रीचरण की सेवा करनी चाहिये । काल, देशोचित परिचर्य्या को ही सेवा कहते हैं - सेवा का ही अपर नाम-- परिचर्य्या है । उस सेवा का वर्णन भा० ४।२१।३१ में है--

(२८०) "यत्पादसेवाभिरुचिस्तपस्विना,-मशेष-जन्मोपचितं मलं धियः ।
सद्यः क्षिणोत्यन्वहमेधती सती, यथा पदाङ्गुष्ठविनिःसृता सरित् ॥"८५८॥

पृथु महाराज—श्रीविष्णु को कहे थे - हे नाथ ! आप के चरणारविन्द की सेवा करने का अभिलाष मात्र होने से ही अर्थात् सेवा में रुचि का उदय होने से ही संसार तापसंतप्त मानव वृन्द के अनेक जन्म द्वारा सञ्चित चित्त मालिन्य—अ त सत्वर विनष्ट हो जाता है, जितनी परिमाण में भगवत् चरण सेवा करने की रुचि होती है, उतनी परिमाण में संसार वासना विनष्ट होती है । यही आप के चरणारविन्द की अतुलनीय महिमा है । दृष्टान्त के द्वारा उस को प्रकाश करते हैं— जिस प्रकार आप के चरणाङ्गुष्ठ से नि सृता सरित् श्रीगङ्गा त्रिभुवन को पवित्र करती है ।

पृथु—श्रीविष्णु को कहे थे ॥२८०॥

२८१ । भा० १०।५१।५५ में भी उस प्रकार वर्णित है—

(२८१) "न कामयेऽन्यं तव पादसेवना,--दकिञ्चनप्रार्थ्यतमाद्वरं विभो ।

अकिञ्चना मोक्षपर्य्यन्त-कामनारहिताः । तत्र हेतुः—त्वामाराध्य कस्त्वामपवर्गदं सन्तं वृणीत, अपवर्गदतयाविर्भवन्तं समाश्रयेतेत्यर्थः । वरमित्यव्ययमीषत्प्रिये, वरमात्मनो बन्धनमेव वृणीत ॥

२८२ । अनन्तरञ्चास्य (भा० १०।५१।५६)—

(२८२) "तस्माद्विसृज्याशिषः" इत्यादि-वाक्ये "निरञ्जनम्" इत्यादि ।

अत्र सेव्यपादत्वेनैव प्राप्तस्य तस्य पुरुषोत्तमस्य सच्चिदानन्दघनत्वमेवाभिप्रेतम् ॥ मुचुकुन्दः श्रीभगवन्तम् ॥

२८३ । अत्र पादसेवायां श्रीमूर्त्तिदर्शन-स्पर्श-परिक्रमानुव्रजन-भगवन्मन्दिर-गङ्गा-पुरुषोत्तम-द्वारका-मथुरादि-तदीयतीर्थस्थान गमनादयोऽप्यन्तर्भाव्यास्तत्परिकरप्रायत्वात् । यावज्जीवं

---

आराध्य कस्त्वां ह्यपवर्गदं हरे, वृणीत आर्य्यो वरमात्मबन्धनम् ॥"८५६॥

श्रीमुचुकुन्द महाराज श्रीभगवान् को कहे थे— हे प्रभो ! जिन्होंने मोक्ष पर्य्यन्त समस्त कामना को परित्याग किया है, उन सब के द्वारा प्रार्थित– आप के चरणारविन्द की सेवा को छोड़ कर मैं कुछ भी वर प्रार्थना नहीं करता हूँ । हे हरे ! आप की आराधना करके कौन व्यक्ति आप से मुक्ति वर ग्रहण करेगा ? आप की आराधना करके बन्धन ग्रहण ही आधारक गण करते हैं, तथापि मुक्ति ग्रहण नहीं करते हैं । श्लोक में 'वरमात्मबन्धनम्" निखिल 'वर' शब्द का अर्थ वरणीय,--प्रार्थनीय नहीं है, कारण, श्लोक के पूर्व चरण में 'वरं' शब्द का एकबार प्रयोग हुआ है । अतएव द्वितीय 'वर' शब्द अव्यय है, एवं ईषत् प्रिय अर्थ में प्रयुक्त है । अर्थ यह है कि -- जिस आत्मबन्धन से मुक्त होकर आप के चरणार विन्द की सेवा करने का सौभाग्य लाभ नहीं होता है, उस मुक्ति की कामना आर्य्यगण नहीं करते हैं । इस प्रकार अर्थ न करने से परवर्त्ती श्लोक की सङ्गति नहीं होगी।।२८१।।

१८२ । इस के बाद—भा० १०।५१।५६ में मुचुकुन्द महाराज ने कहा है—

(२८२) "तस्माद्विसृज्याशिषईशसर्वतो रजस्तमः सत्त्व गुणानुबन्धनाः ।
निरञ्जनं निर्गुणमद्वयं परं त्वां ज्ञप्ति मात्रं पुरुषं व्रजाम्यहम् ॥"

टीका----रजस्तमः सत्त्व गुणैरनुबध्यन्ते इति तथा ता आशिष ऐश्वर्य्यादि शत्रु मारणादि धर्म्मादि रूपा विसृज्य परं पुरुषम्, ईश्वरं ज्ञप्तिमात्रं ज्ञानघनम् । कुतः---निरञ्जनम् । तत् कुतः--निर्गुणम्, तदपि कुतः ? अद्वयम् । अतएव अक्षरं त्वां शरणं व्रजामीति ॥

मैं सब प्रकार कामना को परित्याग करके निरञ्जन निर्गुण परम पुरुष आप की शरण ग्रहण कर रहा हूँ । इस से सुस्पष्ट बोध होता है कि---मुचुकुन्द महाराज ने मुक्ति कामना नहीं की है । यहाँ ज्ञातव्य यह है कि---जिन के चरणार विन्द ही मुख्य सेव्य है, इस रूप में निज गुहा में आविर्भूत पुरुषोत्तम सच्चिदानन्द घन स्वरूप है । ऐसा न होने से मुक्ति पर्य्यन्त कामना को परित्याग करके उनके श्रीचरणार विन्द की सेवा प्रार्थना क्यों करेंगे ?

श्रीमुचुकुन्द---श्रीभगवान् को कहे थे ।।२८२।।

२८३ । पाद सेवा रूप भक्त्यङ्ग के मध्य में श्रीमूर्त्ति दर्शन, श्रीमूर्त्ति स्पर्शन, श्रीमूर्त्ति की परिक्रमा, श्रीमूर्त्ति की अनुव्रज्या (पश्चात् पश्चात् गमन) भगवन्मन्दिर गमन, गङ्गा, पुरुषोत्तम क्षेत्र, द्वारका, मथुरा प्रभृति श्रीकृष्ण सम्बन्धान्वित जो सब तीर्थ हैं उन में स्नान, एवं गमन प्रभृति भक्त्यङ्ग अन्तर्भुक्त है ।

तन्मन्दिरादि-निवासस्तु शरणापत्तावन्तर्भवति। गङ्गादीनां तत्स्थ प्राणिवृन्दानाञ्च परम-भागवतत्वमेवेति, पक्षे तु तत्सेवादिकं महत्सेवायामेव पर्य्यवस्यति। ततो गङ्गादिष्वपि भक्तिनिदानत्वं भवेत्। अतएव (भा० १।२।१६)—

"शुश्रूषोः श्रद्दधानस्य वासुदेव-कथारुचिः।
स्यान्महत्सेवया विप्राः पुण्यतीर्थनिषेवणात्॥"८६०॥

इत्यत्र पुण्यतीर्थ-शब्दोक्तस्य गङ्गादेः पृथक्कारणत्वं व्याख्येयम्। यथा तृतीये (भा० ३।२८।२२) "यत्पादनिःसृत-सरित्प्रवरोदकेन, तीर्थेन मूर्द्ध्न्यधिकृतेन शिवः शिवोऽभूत्" इति। शिवत्वं नाम ह्यत्र परमसुखप्राप्तिरिति टीकाकृन्मतम्। तादृशसुखत्वञ्च भक्तावेव पर्य्यवसितम्,—तत ऊर्द्ध्वं सुखान्तराभावात्। ब्राह्मे पुरुषोत्तममुद्दिश्य—

---

कारण, यह सब भक्तयङ्ग पाद सेवा के ही प्राय परिकर हैं। जब तक जीवित रहना है, तब तक श्रीभगवन् मन्दिर में ही निवास करे। यह श्रीभगवन्मन्दिर में निवास रूप भक्तयङ्ग शरणापत्ति में अन्तर्भुक्त है, अतएव उस का उल्लेख पृथक् रूप से नहीं हुआ। श्रीगङ्गा, श्रीपुरुषोत्तम क्षेत्र प्रभृति श्रीभगवान् के तीर्थ समूह एवं उस उस स्थानों में जो सब प्राणी रहते हैं। वे भी परम भागवत हैं। इस पक्ष में उन सब की सेवा महत् सेवा में ही पर्य्यवसित है। कारण, वे सब परम भागवत हैं अतः गङ्गा प्रभृति में भक्ति लाभ का कारणत्व है अतएव भा० १।२।१६ में उक्त है।

"शुश्रूषोः श्रद्दधानस्य वासुदेव–कथारुचिः।
स्यान्महत्सेवया विप्राः पुण्यतीर्थनिषेवणात्॥"८६०॥

व्यवहारिक कार्य्य सम्पादन हेतु पवित्र तीर्थ में गमन करने से दर्शन, स्पर्श, एवं सम्भाषण रूप साधु सङ्ग की सम्भावना होती है। उस साधु सङ्ग से साधु मुखरित कथा श्रवण करने की इच्छा का उद्गम होता। अनन्तर श्रीवासुदेव की कथामें रुचि होती है। उस से महत् की सेवा करने का सौभाग्योदय होता है। एवं उस महत् सेवा से उनकी कथा में विश्वास उत्पन्न होता है। उस श्लोक में लिखित "पुण्यतीर्थ निषेवणात्" अर्थात् पवित्र तीर्थ निषेवण से—पवित्र तीर्थ गङ्गा प्रभृति को सूचित किया गया है। अर्थात् साधु सङ्ग जिस प्रकार भक्ति लाभ का कारण है, उस प्रकार गङ्गा प्रभृति भगवत् सम्बन्धान्वित तीर्थ भी भगवद् भक्ति लाभ के स्वतन्त्र कारण हैं। इस प्रकार व्याख्या करनी चाहिये। अर्थात् श्रीगङ्गा प्रभृति श्रीकृष्ण सम्बन्धीय तीर्थ समूह में साधु सङ्ग लाभ की सम्भावना रूप हेतुत्व विद्यमान है। तज्जन्य उन सब का भक्ति लाभ के प्रति पृथक् कारणत्व निर्द्देश किया गया है। भा० ३।२८।२२ में उक्त है—

"यत् पादनिःसृत-सरित्प्रवरोदकेन, तीर्थेन मूर्द्ध्न्यधिकृतेन शिवः शिवोऽभूत्"

जिन के श्रीचरण से निःसृत नदी श्रेष्ठ परम पवित्र श्रीगङ्गा जल मस्तक में धारण करके श्रीशिव शिव हुये हैं। यहाँ शिव शब्द से टीकाकार श्रीधर स्वामि पाद के मत में परम सुख प्राप्ति रूप अर्थ बोध ही होता है। यह परम सुख प्राप्ति भी भक्ति में ही पर्य्यवसित हुआ है। कारण, भक्ति व्यतीत अधिक अपर कोई सुख नहीं है।

श्रीगङ्गा प्रभृति तीर्थ जो परम भागवत एवं भगवद् भक्ति का उद्बोधक है, उस का उल्लेख, ब्रह्म पुराण में पुरुषोत्तम को लक्ष्य करके है।

"अहो क्षेत्रस्य माहात्म्यं समन्ताद्दशयोजनम् । दिविष्ठा यत्र पश्यन्ति सर्व्वानेव चतुर्भुजान् ॥"८६१॥

स्कान्दे—

"संवत्सरं वा षण्मासान्मासं मासार्द्धमेव वा। द्वारकावासिनः सर्वे नरा नार्य्यश्चतुर्भुजाः ॥"८६२॥

पाद्मपातालखण्डे—

"अहो मधुपुरी धन्या वैकुण्ठाच्च गरीयसी। दिनमेकं निवासेन हरौ भक्तिः प्रजायते ॥"८६३॥

आदिवाराहे तामुद्दिश्य—"जन्मभूमिः प्रिया मम" इति। एषु च स्वोपासनास्थानमधिकं सेव्यम् । श्रीकृष्णस्य पूर्णभगवत्त्वात् तत्स्थानन्तु सर्वेषामेव पूर्णपुरुषार्थदं भवेत् । अतएवादिवाराहे—

"मथुराञ्च परित्यज्य योऽन्यत्र कुरुते रतिम् । मूढ़ो भ्रमति संसारे मोहितो मम मायया ॥"८६४॥ इति।

तदेवं तुलसीसेवा च सत्सेवायामन्तर्भाव्या,—परमभगवत्प्रियत्व त्तस्याः, यथा अगस्त्य-संहितायां गारुड़-संहितायाञ्च—

---

"अहो क्षेत्रस्य माहात्म्यं समन्ताद्दशयोजनम् ।
दिविष्ठा यत्र पश्यन्ति सर्व्वानेव चतुर्भुजान् ॥"८६१॥

अहो ! श्रीक्षेत्र का कैसा अपूर्व माहात्म्य है ? चतुर्द्दिक में दश योजन पर्य्यन्त क्षेत्र वासी प्राणीवृन्द को देवगण, चतुर्बाहु रूप में दर्शन करते हैं। स्कन्द पुराण में भी उक्त है—

"संवत्सरं वा षण्मासान्मासं मासार्द्धमेव वा ।
द्वारकावासिनः सर्वे नरा नार्य्यश्चतुर्भुजाः ।।"८६२॥

श्रीद्वारका वासी को लक्ष्य करके कहा गया है—एक वत्सर हो, वा छैमास हों, वा एक मास हो, अथवा मासार्द्ध काल ही हो, जो द्वारका में वास करते हैं, वे सब नर नारीगण चतुर्भुज होते हैं।

पद्म पुराण के पाताल खण्ड में मथुरामण्डल के सम्बन्ध में लिखित है—

"अहो मधुपुरी धन्या वैकुण्ठाच्च गरीयसी।
दिनमेकं निवासेन हरौ भक्तिः प्रजायते ।।"८६३॥

अहो ! कैसा अद्भुत है ? वैकुण्ठ से भी मथुरा मण्डल धन्य वादार्ह है। कारण, इस मथुरा मण्डल में मात्र एकदिन वास करने से ही श्रीभगवत् चरणों में भक्ति का उदय होता है। आदि वाराह में मथुरा को उद्देश्य करके कहा गया है—"जन्मभूमिप्रियामम" मेरी जन्म भूमि मथुरा अतिशय प्रिय है। यह सब पवित्र तीर्थ के मध्य में निज उपासना स्थल अधिक सेव्य है। अर्थात् वैष्णव के पक्ष में विष्णु क्षेत्र, शैव के पक्ष में शिव क्षेत्र, एवं शाक्त के पक्ष में शक्ति क्षेत्र, श्रेष्ठ है। श्रीकृष्ण ही पूर्ण भगवान् होने के कारण, उनका स्थान अर्थात् मथुरा मण्डल, सकल साधक के पक्ष में ही पूर्ण पुरुषार्थ प्रद है। अतएव आदि वाराह पुराण में लिखित है—

"मथुराञ्च परित्यज्य योऽन्यत्र कुरुते रतिम् ।
मूढ़ो भ्रमति संसारे मोहितो मम मायया ।।"८६४॥

जो मथुरा को परित्याग करके अन्य स्थान बास हेतु आग्रह युक्त होता है, वह यथार्थ पारमार्थिक ज्ञान विमूढ़ है, एवं मेरी माया द्वारा विमोहित होकर संसार में भ्रमण करता रहता है।

अतएव पूर्व वर्णित श्रीतुलसी सेवा भी सत् सेवा में अर्थात् साधु सेवा में अन्तर्भुक्त है। कारण, तुलसी स्वयं भगवान् श्रीकृष्ण की परम प्रिया हैं। अगस्त्य संहिता एवं गरुड़ संहिता में उक्त है—

तत्र विष्णोर्दिवास्नानमपि निषिद्धत्वेनोक्तम् । पाद्मोत्तरखण्डे च वैष्णवधर्मकथने–"द्वादशी-व्रत-निष्ठता" इति । तथा स्कान्दे काशीखण्डे सौपर्णद्वारकामाहात्म्ये च चन्द्रशर्मणो भगवद्धर्म-प्रतिज्ञा—

"अद्य प्रभृति कर्त्तव्यं यन्मया कृष्ण तच्छृणु । एकादश्यां न भोक्तव्यं कर्त्तव्यो जागरः सदा ॥६५२॥
महाभक्त्याऽत्र कर्त्तव्यं प्रत्यहं पूजनं तव । पलार्द्धेनापि विद्धन्तु मोक्तव्यं वासरं तव ॥६५३॥
त्वत्प्रीत्याष्टौ मया कार्य्या द्वादश्यां व्रतसंयुताः ॥"६५४॥ इत्यादिका ।

अत उक्तमाग्नेये–

"एकादश्यां न भोक्तव्यं तद्व्रतं वैष्णवं महत् ॥"६५५॥ इति ।

गौतमीये–

"वैष्णवो यदि भुञ्जीत एकादश्यां प्रमादतः । विष्णवर्च्चनं वृथा तस्य नरकं घोरमाप्नुयात् ॥"६५६॥

मत्स्य-भविष्यपुराणयोः–

"एकादश्यां निराहारो यद्भुङ्क्ते द्वादशीदिने ।
शुक्ला वा यदि वा कृष्णा तद्व्रतं वैष्णवं महत् ॥"६५७॥ इति ।

---

दशमी विद्धा एकादशी को वर्जन करे । शुक्ला एकादशी व्रत करणीय है, कृष्णाएकादशी व्रत करणीय नहीं है, इस प्रकार विचार न करे । व्रतके दिन किसी प्रकार असत् कार्य्य न करे । व्रत करने में समर्थ होने पर फलादि भोजन न करे । एकादशी के दिन श्राद्ध कार्य्य न करे । द्वादशी तिथि में दिवानिद्रा एवं तुलसी चयन न करे । द्वादशी तिथि में श्रीविष्णु को दिवास्नान कराना निषिद्ध है । पद्म पुराण के उत्तर खण्ड के वैष्णव धर्म कथन प्रसङ्ग में लिखित है—"द्वादशी व्रत निष्ठता" द्वादशी व्रत में एकान्त निष्ठा होनी चाहिये । स्कन्द पुराणस्थ काशी खण्ड के सौपर्ण द्वारका माहात्म्य में चन्द्रशर्मा की भगवत् प्रतिज्ञा वर्णन प्रसङ्ग में लिखित है—

"अद्य प्रभृति कर्त्तव्यं यन्मया कृष्ण तच्छृणु ।
एकादश्यां न भोक्तव्यं कर्त्तव्यो जागरः सदा ॥६५२॥
महाभक्त्याऽत्र कर्त्तव्यं प्रत्यहं पूजनं तव ।
पलार्द्धेनापि विद्धन्तु मोक्तव्यं वासरं तव ॥६५३॥
त्वत्प्रीत्याष्टौ मया कार्य्या द्वादश्यां व्रतसंयुताः ॥"६५४॥

हे कृष्ण ! मैं आज से जो कुछ करूँगा, कहता हूँ, आप श्रवण करें ! समस्त एकादशी में भोजन नहीं करूँगा, एवं रात्रि जागरण करूँगा । एवं महाभक्ति पूर्वक प्रतिदिन आप की आराधना करूँगा । एकादशी तिथि—अर्द्धपल मात्र भी दशमी विद्धा होती है । तो उस एकादशी तिथि में व्रत नहीं करूँगा । एवं आप के सन्तोषार्थ—मैं अष्ट महाद्वादशी व्रत करूँगा । अतएव अग्नि पुराण में उक्त है—

"एकादश्यां न भोक्तव्यं तद्व्रतं वैष्णवं महत् ॥"६५५॥

एकादशी तिथि में भोजन न करे । कारण, यह एकादशी व्रत—श्रीविष्णु सम्बन्धान्वित है एवं अति महान् है । गौतमीय पुराण में लिखित हैं—

"वैष्णवो यदि भुञ्जीत एकादश्यां प्रमादतः ।
विष्णवर्च्चनं वृथा तस्य नरकं घोरमाप्नुयात् ॥"६५६॥

यदि कोई वैष्णव प्रमाद वशतः एकादशी में भोजन करे तो, उस के द्वारा अनुष्ठित श्रीविष्णु पूजा व्यर्थ होती है, एवं वह घोर नरक में निपतित होता है । मत्स्य एवं भविष्य पुराण में उक्त है—

**स्कान्दे—**

"मातृहा पितृहा चैव भ्रातृहा गुरुहा तथा। एकादश्यान्तु यो भुङ्क्ते विष्णुलोकच्युतो भवेत्।"९५८। इति।

**अत्र वैष्णवानां निराहारत्वं नाम महाप्रसादान्न-परित्याग एव,-तेषामन्यभोजनस्य नित्यमेव निषिद्धत्वात्। यथोक्तं नारदपञ्चरात्रे-**

"प्रसादान्नं सदा ग्राह्यमेकादश्यां न नारद। रमादि-सर्वभक्तानामितरेषाञ्च का कथा॥"९५९॥ इति।

**ब्रह्माण्डपुराणे—**

"पत्रं पुष्पं फलं तोयमन्नपानाद्यमौषधम्। अनिवेद्य न भुञ्जीत यदाहाराय कल्पितम्॥९६०॥
अनिवेद्य तु भुञ्जानः प्रायश्चित्तीभवेन्नरः। तस्मात् सर्वं निवेद्यैव विष्णोर्भुञ्जीत सर्वदा॥"९६१॥

**जागरस्यापि नित्यत्वं यथा स्कान्दे उमा-महेश्वर-संवादे-**

"सम्प्राप्ते वासरे विष्णोर्ये न कुर्वन्ति जागरम्। भ्रश्यते सुकृतं तेषां वैष्णवानाञ्च निन्दया॥९६२॥
मतिर्न जायते यस्य द्वादश्यां जागरं प्रति। न हि तस्याधिकारोऽस्ति पूजने केशवस्य हि॥"९६३॥ इति।

---

"एकादश्यां निराहारो यद् भुङ्क्ते द्वादशी दिने।
शुक्ला वा यदि वा कृष्णा तद्व्रतं वैष्णवं महत्॥"९५७॥

एकादशी में अनाहार रहकर द्वादशीमें भोजन करे। शुक्ल पक्ष की एकादशी, हो अथवा कृष्ण पक्ष की एकादशी ही—उभय पक्ष की एकादशी ही महत् वैष्णव व्रत है। स्कन्द पुराण में लिखित है—

"मातृहा पितृहा चैव भ्रातृहा गुरुहा तथा।
एकादश्यान्तु यो भुङ्क्ते विष्णुलोकच्युतो भवेत्॥९५८॥

जो व्यक्ति, एकादशी में भोजन करता है। वह मातृहत्या, पितृहत्या, गुरुहत्या, भ्रातृहत्या प्रभृति पापों से लिप्त होता है। एवं उस की विष्णु लोक प्राप्ति कभी भी नहीं होगी।। यहाँ ज्ञातव्य यह है कि—वैष्णवों का एकादशी में निराहार का अर्थ है—महा प्रसादान्न परित्याग। कारण, वैष्णव के पक्ष में महा प्रसादान्न व्यतीत अपर द्रव्य भोजन सर्वथा निषिद्ध है। नारद पुराण में उक्त है—

"प्रसादान्नं सदा ग्राह्यमेकादश्यां न नारद।
रमादि-सर्वभक्तानामितरेषाञ्च का कथा॥"९५९॥

हे नारद! एकादशी में महाप्रसादान्न ग्रहण सर्वथा निषिद्ध है। यह निषेध रमादि समस्त भक्तों के पक्ष में ही जब है, तब अपर के पक्ष में एकादशी में अन्न भोजन करना सुतरां निषिद्ध है। ब्रह्माण्ड पुराण में उक्त है—

"पत्रं पुष्पं फलं तोयमन्न पानाद्यमौषधम्।
अनिवेद्य न भुञ्जीत यदाहाराय कल्पितम्॥९६०॥
अनिवेद्य तु भुञ्जानः प्रायश्चित्तीभवेन्नरः।
तस्मात् सर्वं निवेद्यैव विष्णोर्भुञ्जीत सर्वदा॥"९६१॥

पत्र, पुष्प, फल, जल, अन्न, औषध पानीय एवं अन्यान्य भोज्य पदार्थ ग्रहण, श्रीविष्णु को निवेदन करके हि करे, विष्णु को निवेदन न करके भोजन करने से प्रायश्चित्त करना पड़ता है। सुतरां सर्वदा श्रीविष्णु को निवेदन करके ही भोजन करे। स्कन्द पुराण में एकादशी तिथि में रात्रि जागरण का वृत्तान्त लिखित है—उमा महेश्वर संवाद निम्नोक्त रूप है—

"सम्प्राप्ते वासरे विष्णोर्ये न कुर्वन्ति जागरम्।
भ्रश्यते सुकृतं तेषां वैष्णवानाञ्च निन्दया॥९६२॥

तद्व्रतस्य विष्णुप्रीतिदत्वञ्च श्रूयते पाद्मोत्तरखण्डे—

"शृणु देवि प्रवक्ष्यामि द्वादश्याश्च विधानकम् । तस्याः स्मरणमात्रेण सन्तुष्टोऽभूज्जनार्द्दनः ॥"६६४॥

भविष्ये—

"एकादशी महापुण्या सर्वंपापविनाशिनी । भक्तेस्तु दीपनी विष्णोः परमार्थगतिप्रदा ॥"६६५॥ इति ।

अतएव श्रीमदम्बरीषादीनां भक्त्येकनिष्ठानां महाप्रसादैकभुजां तद्व्रतं दर्शयता श्रीभागवतेनापि तदन्तरङ्गवैष्णवधर्मत्वेन सम्मतमिति दिक् । पाद्मे कार्त्तिक-माहात्म्ये च ब्राह्मणकन्यायाः कार्त्तिकव्रतैकादशीव्रत प्रभावात् श्रीसत्सत्यभामाख्य-भगवत्प्रेयसीपदप्राप्तिरपि श्रूयते, किं बहुना ? अथ माघः सौपर्णे—

"दुर्लभो माघमासस्तु वैष्णवानामतिप्रियः । देवतानामृषीणाञ्च मुनीनां सुरनायकः ।
विशेषेण शचीनाथ माधवस्यातिवल्लभः ॥"६६६। इति ।

---

मतिर्न जायते यस्य द्वादश्यां जागरं प्रति ।
न हि तस्याधिकारोऽस्ति पूजने केशवस्य हि ॥६५३॥

हरि वासर उपस्थित होने से जो मानव जागरण नहीं करता हैं, उसका पुण्य नष्ट होता है । एवं वैष्णव निन्दा से भी वही फल होता है । जिस की प्रवृत्ति द्वादशी जागरण में नहीं है । उस का अधिकार श्रीकेशव पूजा में कभी भी नहीं होगा । यह निश्चित है । यह द्वादशी व्रत जो श्रीविष्णु प्रीतिद है—उस का वर्णन पद्म पुराण के उत्तर खण्ड में है—

"शृणु देवि प्रवक्ष्यामि द्वादश्य श्च विधानकम् ।
तस्याः स्मरण मात्रेण सन्तुष्टोऽभूज्जनार्दनः ॥६६४॥

अयि देवि ! द्वादशी जो कर्त्तव्य है—उस को कहता हूँ, सुनो । द्वादशी का स्मरण होने से ही श्रीजनार्दन सन्तुष्ट होते हैं । भविष्य पुराण में लिखित है—

"एकादशी महापुण्या सर्वपापविनाशिनी ।
भक्तेस्तु दीपनी विष्णोः परमार्थगतिप्रदा ॥"६६५॥

एकादशी महापुण्यशालिनी एवं सर्व पाप विनाशिनी है । यह एकादशी विष्णु भक्ति को उद्दीप्त करती है, एवं यह परमार्थ गति प्रदान करती है ।

अतएव श्रीमद् भागवत शास्त्र भी भक्ति में एकमात्र निष्ठा प्राप्त एवं एक मात्र महाप्रसाद भोजन कारी श्रीमदम्बरीष महाराज प्रभृतिके महा प्रसाद त्याग रूप एकादशी व्रत प्रसङ्गको दिखाकर भगवान् के अन्तरङ्ग वैष्णव धर्म रूप में एकादशी व्रत को प्रतिपादन किये हैं । अर्थात् वैष्णव के पक्ष में जितने कर्त्तव्य हैं, उस के मध्य में श्रीएकादशी व्रत ही श्रीहरि का अत्यन्त प्रिय होने के कारण, वैष्णव के पक्ष में अनुष्ठेय भक्ति के अङ्गों के मध्य में परम आदर के सहित यह एकादशी व्रत अवश्य पालनीय है । पद्म पुराण के कार्त्तिक माहात्म्य में लिखित है—एक ब्राह्मण कन्या, कार्त्तिक व्रत एवं एकादशी व्रत अनुष्ठान के प्रभाव से श्रीकृष्ण प्रेयसी वृन्द के मध्य में सत्यभामा नाम्नी प्रेयसी हुई थी । इस से अधिक माहात्म्य और क्या हो सकता है ? ।

अनन्तर माघस्नान का वर्णन करते हैं—गरुड़ पुराण में लिखित है—

"दुर्लभो माघमासस्तु वैष्णवानामतिप्रियः ।
देवतानामृषीणाञ्च मुनीनां सुरनायक ।

स्कान्दे ब्रह्मनारद-संवादे—

"सर्वपापविनाशाय कृष्णसन्तोषणाय च । माघस्नानं सदा कार्य्यं वर्षे वर्षे च नारद ॥"६६७॥ इति ।

भविष्योत्तरे—

"एकविंशगणैः सार्द्धं भोगान् त्यक्त्वा यथेप्सितम् । माघमास्यूषसि स्नात्वा विष्णुलोकं स गच्छति ।"६६८।

एवं श्रीरामनवमी-वैशाखव्रतादयश्चात्र ज्ञेयाः । एतत् सर्वमपि सदाचारकथनद्वारा विधत्ते, (भा० ३।१।१९)—

(२९९) "गां पर्य्यटन्" इत्यादौ "व्रतानि चेरे हरितोषणानि" इति ।

व्रतानि एकादश्यादीनीति । विदुर इति प्रकरणलब्धम् ॥ श्रीशुकः ॥

३०० । एवं तादृशव्रतेष्वपि तत्तदुपासकानां स्वस्वेष्टदैवतव्रतं सुष्ठ्वेव विधेयमित्यागतम् । तथास्मिन् पादसेवार्चनमार्गे "यानैर्वा पादुकैर्वापि गमनं भगवद्गृहे" इत्यादिनागमोक्ता ये द्वात्रिंशदपराधास्तथा "राजान्नभक्षणं चैवम्" इत्यादिना वाराहोक्ता ये च तत्संख्यकास्तथा "मम शास्त्रं बहिष्कृत्य ह्यस्माकं यः प्रपद्यते" इत्यादिना तदुक्ता ये चान्ये बहवस्ते सर्वे,

---

विशेषेण शचीनाथ माधवस्यातिवल्लभः ॥"६६६।

माघमास अति दुर्लभ एवं वैष्णवों का अतिप्रिय है । हे देवराज ! हे शचीनाथ इन्द्र ! यह माघमास देवता वृन्द का, ऋषि वृन्द का मुनि वृन्द का एवं विशेष रूप से माधव का अतिशय प्रिय है । स्कन्द पुराण के ब्रह्मनारद संवाद में वर्णित है—

"सर्व पापविनाशाय कृष्णसन्तोषणाय च ।
माघस्नानं सदा कार्य्यं वर्षे वर्षे च नारद ! ॥"६६७॥

हे नारद ! सर्व प्रकार पाप नाश करने के निमित्त प्रतिवत्सर माघमासके प्रत्येक दिनमें प्रातः स्नान करना कर्त्तव्य है । भविष्योत्तर पुराण में लिखित है—

"एकविंशगणैः सार्द्धं भोगान् त्यक्त्वा यथेप्सितम् ।
माघमास्यूषसि स्नात्वा विष्णुलोकं स गच्छति ।।"६६८।

माघमास के ऊषाकाल में स्नान करके मानव अभीष्ट भोग त्याग करके एकविंशति कुल के सहित विष्णु लोक गमन की है । उस प्रकार श्रीराम नवमी एवं वैशाख व्रत प्रभृति जो अवश्य अनुष्ठेय है । यहाँ उस को भी जान लेना आवश्यक है । साधु वृन्द के आचरण को दिखाकर यह सब व्रत अवश्य पालनीय हैं, भा० ३।१।१९ के द्वारा उस को कहते हैं—

(२९९) "गां पर्य्यटन" श्रीशुकदेव श्रीपरीक्षित् को कहे थे—विदुर महाशय तीर्थ पर्य्यटन हेतु जब बहिर्गत हुए थे, उस समय—जिस व्रताचरण से श्रीहरि सन्तुष्ट होते हैं, वह सब एकादशी प्रभृति व्रतानुष्ठान किये थे । श्रीशुक, कहे थे ।।२९९।।

३०० । पूर्वोक्त व्रत समूह के मध्य में जिस व्रतानुष्ठान के द्वारा श्रीहरि सन्तुष्ट होते हैं—उस प्रकार व्रतानुष्ठान करना ही कर्त्तव्य है । तथापि, जो जिस भगवत् स्वरूप का उपासक है, उस के पक्ष में निजेष्ट देवता का व्रतानुष्ठान उत्तम रूप से करना कर्त्तव्य है । पूर्व सिद्धान्त के अनुसार यह निर्द्धारित हुआ । यहाँ विशेष ज्ञातव्य यह है कि—पाद सेवा वा अर्च्चन मार्ग अनुष्ठान में शास्त्रोक्त जो "यानैर्वा पादुकैर्वापि गमनं भगवद् गृहे" यान अथवा पादुका के द्वारा भगवद् गृह में गमन प्रभृति जो द्वात्रिंशत् 'बत्तीस' अपराध हैं,

'ममार्चनापराधा ये कीर्त्यन्ते वसुधे मया। वैष्णवेन सदा ते तु वर्जनीयाः प्रयत्नतः ॥'६६६॥

इति वाराहानुसारेण परित्याज्या इत्याशयेनाह (भा० ११।२७।१७-१८) –

(३००) "श्रद्धयोपाहृतं प्रेष्ठं भक्तेन मम वार्य्यपि"
"भूर्य्यप्यभक्तोपहृतं न मे तोषाय कल्पते ॥"६७०॥

श्रद्धा-भक्ति-शब्दाभ्यामत्रादर एव विधीयते। अपराधास्तु सर्वेऽनादरात्मका एव, प्रभुत्वात्रमानतश्च आज्ञावमानतश्च। तस्मादपराधनिदानमत्रानादर एव परित्याज्या इत्यर्थः ॥ श्रीभगवान् ॥

३०१। महतामनादरस्तु सर्वनाशक इत्याह (भा० ४।३१।२१)-

(३०१) "न भजति कुमनीषिणां स इज्यां, हरिरधनात्मधनप्रियो रसज्ञः।
श्रुत-धन-कुल-कर्मणां मदैर्ये, विदधति प पमकिञ्चनेषु सत्सु ॥"६७१॥

---

एवं "राजान्नभक्षणं चैवम्" राजान्न भक्षण प्रभृति जो सब अपराध का वर्णन वराह पुराण में हैं। और जो द्वात्रिंशत् प्रकार अपराध प्रमाणान्तर में उल्लेख हैं – "मम शास्त्रं बहिष्कृत्य अस्माकं यः प्रपद्यते" जो शास्त्र बहिर्भूत आचरण करके मेरी शरण ग्रहण करता है" इस अनेक अपराध का वर्णन है, एवं वराहदेव धरणी को सम्बोधन कर के जो कहे थे—

"ममार्चनापराधा ये कीर्त्यन्ते वसुधे मया।
वैष्णवेन सदा ते तु वर्जनीयाः प्रयत्नतः ॥"६६६॥

हे वसुधे! मदीय अर्च्चन अनुष्ठान के मध्य में जो सब अपराध का विवरण उक्त है, वैष्णव के पक्ष में यह सब अपराध यत्न पूर्वक वर्ज्जन करना कर्त्तव्य है। वराह पुराण के अनुसार यह सब अपराधाचरण वर्जनीय है। इस अभिप्राय से ही श्रीकृष्ण भा० ११।२७।१७--१८ में कहे हैं—

(३००) "श्रद्धयोपाहृतं प्रेष्ठं भक्तेन मम वार्य्यपि।
"भूर्य्यप्यभक्तोपहृतं न मे तोषाय कल्पते ॥"६७०॥

हे उद्धव! भक्त, श्रद्धा पूर्वक यदि जल भी अर्पण करता है तो, मैं उस को अतिप्रिय वस्तु मानता हूँ। किन्तु अभक्त जन के द्वारा भूरि परिमाण में उत्तम वस्तु अर्पण करने पर भी मेरा सन्तोष प्रद नहीं होता है। यहाँ श्रद्धा एवं भक्ति शब्द के द्वारा 'आदर' विहित हुआ है। किन्तु समस्त अपराध ही अर्थात् अर्च्चन मार्ग में उक्त अपराध समूह --अनादरात्मक है। श्रीभगवान् प्रभु हैं,—उन प्रभु को अवमानन करना एवं आज्ञा अवमानन करना होता है। अतएव अपराध का मूल कारण, भक्ति अङ्ग में भगवत् स्वरूप में एवं भक्त स्वरूप जो अनादर है। उस को सब प्रकार से परित्याग करे।

श्रीभगवान् कहे थे ॥३००॥

३०१। महत् का अनादर तो सर्वनाश कारी है। भा० ४।३१।२१ में उक्त है—

(३०१) "न भजति कुमनीषिणां स इज्यां, हरिरधनात्मधनप्रियो रसज्ञः।
श्रुत-धन-कुल--कर्मणां मदैर्ये, विदधति पापमकिञ्चनेषु सत्सु ॥"६७१॥

देवर्षि नारद, प्रचेतागण को कहे थे—श्रीहरि कुमनीषी अर्थात् कुमेधागण की पूजा ग्रहण नहीं करते हैं, निरभिमानी एवं हरिप्रिय व्यक्ति ही श्रीहरि के प्रिय है, कारण, श्रीहरि, भक्ति सुख ही अनुभव करते

अधनाश्च ते आत्मधना भगवदेकधनाश्च ते प्रिया यस्य सः, रसज्ञो भक्तिरसिको हरिः । के कुमनीषिण इत्यपेक्षायामाह,-श्रुतेति । पापमपराधम् ।। श्रीनारदः प्रचेतसः ।।

३०२ । किञ्च, (भा० ५।१०।२५) —

(३०२) "न विक्रिया विश्वसुहृत्सखस्य, साम्येन वीताभिमतेस्तवापि ।
महद्विमानात् स्वकृताद्धि मादृङ्-,नङ्क्ष्यत्यदूरादपि शूलपाणिः ।।"६७२।।

स्पष्टम् ।। रहूगणः श्रीभरतम् ।।

३०३ । अथ तथापि प्रामादिके भगवदपराधे पुनर्भगवत्प्रसादनानि कर्त्तव्यानि, तथा स्कान्दे अवन्तिखण्डे श्रीव्यासोक्तौ—

"अहन्यहनि यो मर्त्यो गीताध्यायं पठेत्तु वै । द्वात्रिंशदपराधांस्तु क्षमते तस्य केशवः ।।"६७३।। इति ।

तत्रैव द्वारकामाहात्म्ये—

"सहस्रनाममाहात्म्यं यः पठेच्छृणुयादपि । अपराधसहस्रेण न स लिप्येत् कदाचन ।।"६७४। इति ।

---

हैं । कुमेधा कौन है ? उस को कहते हैं जो विद्यामद से, धनमद से कुलमद से एवं सत् कर्ममद् से मत्तहोकर अकिञ्चन भक्त वृन्द की अवमानन करता है, इस प्रकार कुमेधा गण की पूजा श्रीहरि, ग्रहण नहीं करते हैं, अधन होकर भी वे आत्मधना हैं, अर्थात् श्रीभगवान् ही उन के एक मात्र धन हैं । रसज्ञ शब्द का अर्थ 'भक्ति रसज्ञ है । भक्ति रसज्ञ श्री हरि हैं, अध्ययन, धन, कुल, कर्म द्वारा अभिमान ग्रस्त व्यक्ति ही कुमनीषी होते हैं । पाप—शब्द का अर्थ है—अपराध । श्रीनारद प्रचेता गण को कहे थे ।।३०१।।

३०२ । भा० ५।१०।२५ में लिखित है—

(३०२) " न विक्रिया विश्वसुहृत्सखस्य, साम्येन वीताभिमतेस्तवापि ।
महद्विमानात् स्वकृताद्धि मादृङ्,--नङ्क्ष्यत्यदूरादपि शूलपाणिः ।।"६७२।

श्रीरहूगण—जड़ भरत को कहे थे—हे प्रभो ! आप के समान महापुराण वृन्द के चरणों में जो व्यक्ति, अवज्ञा रूप अपराध करता है, उस का सर्वनाश होता है । महापुरुष का स्वभाव है कि,—क्षोभ का विषय उपस्थित न होने पर भी क्षुब्ध न होना, तब अवज्ञा करने से महापुरुष क्षुब्ध क्यों होंगे, और उस से अमर्य्यादा कारी का अपराध क्यों होगा ? उत्तर में कहते हैं—यद्यपि आप सब विश्ववासी सब के हितकारी है एवं सखा है, अतएव सर्वत्र समबुद्धि हेतु निजदेह में अभिमान शून्य होने के कारण-अमर्य्यादा से आप सब क्षुब्ध नहीं होते हैं—यह सत्य हैं । तथापि महादेव के तुल्य अति समर्थ मादृश व्यक्ति भी महत् का अपमान करने से आशु विनष्ट होता है । रहूगण—श्रीभरत को कहे थे ।।३०२।।

३०३ । महापुरुष की अमर्य्यादा से सर्वनाश होता है, यह जानकर भी यदि अनवधान से श्रीभगवत् चरणों में अपराध उपस्थित होता है तो पुनर्वार भगवत् सन्तोष कर कार्य्य करना आवश्यक है भगवत् सन्तोष कर कार्य्य किस प्रकार है—उस का वर्णन करते हैं । स्कन्द पुराण के अवन्ती खण्ड में श्रीव्यास कहे हैं—

"अहन्यहनि यो मर्त्यो गीताध्यायं पठेत्तु वै ।
द्वात्रिंशदपराधांस्तु क्षमते तस्य केशवः ।।"६७३।

जो मानव, प्रतिदिन एक अध्याय गीता पाठ करता है, केशव, उस के द्वात्रिंशदपराधक्षमा करते हैं, स्कन्द पुराण के द्वारका माहात्म्य में लिखित है—

तत्रैव रेवाखण्डे —

"द्वादश्यां जागरे विष्णोर्यः पठेत्तुलसीस्तवम् । द्वात्रिंशदपराधानि क्षमते तस्य केशवः ॥"६७५॥ इति ।

तत्रैवान्यत्र—

"तुलस्या रोपणं कार्य्यं श्रवणेन विशेषतः । अपराधसहस्राणि क्षमते पुरुषोत्तमः ॥"६७६॥

तत्रैवान्यत्र कार्त्तिक माहात्म्ये—

"तुलस्या कुरुते यस्तु शालग्रामशिलार्च्चनम् । द्वात्रिंशदपराधांश्च क्षमते तस्य केशव ॥"६७७॥ इति,

अन्यत्र—

"यः करोति हरेः पूजां कृष्णशस्त्राङ्कितो नरः । अपराधसहस्राणि नित्यं हरति केशवः ॥"६७८॥ इति ।

आदिवाराहे—

"संवत्सरस्य मध्ये तु तीर्थे शौकरके मम । कृतोपवासः स्नानेन गङ्गायां शुद्धिमाप्नुयात् ॥६७९॥

मथुरायां तथाप्येवं सापराधः शुचिर्भवेत् । अनयोस्तीर्थयोरेकं यः सेवेत् सुकृती नरः ।
सहस्रजन्मजनितानपराधान् जहाति सः ॥"६८०॥ इति ।

---

"सहस्रनाममाहात्म्यं यः पठेच्छृणुयादपि ।
अपराधसहस्रेण न स लिप्येत् कदाचन ॥"६७४॥

जो प्रत्यह सहस्र नाम माहात्म्य पाठ करता है । अथवा श्रवण करता है । वह सहस्र सहस्र अपराध से भी कभी लिप्त नहीं होता है । स्कन्द पुराण के रेवाखण्ड में लिखित है

"द्वादश्यां जागरे विष्णोर्यः पठेत्तुलसीस्तवम् ।
द्वात्रिंशदपराधानि क्षमते तस्य केशवः ॥"६७५॥

द्वादशी व्रत में जो मानव जागरण करके तुलसी स्तव पाठ करता है — केशव, श्रीविष्णुचरणों में कृत उस के द्वात्रिंशदपराध क्षमा करते हैं । उक्त पुराण के अन्यत्र लिखित है—

"तुलस्या रोपणं कार्य्यं श्रवणेन विशेषतः ।
अपराधसहस्राणि क्षमते पुरुषोत्तमः ॥"६७६॥

तुलसी रोपन करना कर्त्तव्य है । श्रावण मास में रोपण से विशेष फल होता है । पुरुषोत्तम-रोपण कारी के सहस्र सहस्र अपराध क्षमा करते हैं । उस पुराण के अन्यत्र कार्त्तिक माहात्म्य में लिखित है—

"तुलस्या कुरुते यस्तु शालग्रामशिलार्च्चनम् ।
द्वात्रिंशदपराधांश्च क्षमते तस्य केशवः ॥"६७७॥

जो मानव, तुलसी द्वारा शालग्राम शिलार्च्चन करता है, केशव, उसके द्वात्रिंशत् अपराध क्षमा करते हैं । अन्यत्र भी इष्ट होता है—

"यः करोति हरेः पूजां कृष्णशस्त्राङ्कितो नरः ।
अपराधसहस्राणि नित्यं हरति केशवः ॥"६७८॥

जो व्यक्ति, श्रीकृष्ण के शङ्ख चक्र गदापद्म शस्त्र से अङ्कित होकर श्री हरि की पूजा करता है, केशव, नित्य उस के सहस्र सहस्र अपराध क्षमा करते हैं । आदि वाराह पुराण में लिखित है—

"संवत्सरस्य मध्ये तु तीर्थे शौकरके मम ।
कृतोपवासः स्नानेन गङ्गायां शुद्धिमाप्नुयात् ॥६७९॥

शौकरके शूकरक्षेत्राख्ये। महदपराधस्तु चाटुकारादिना वा, तत्प्रीत्यर्थकृतेन निरन्तर-दीर्घकालीन-भगवन्नामकीर्त्तनेन वा तं प्रसाद्य क्षमापणीय इत्यवोचामैव,-तत्प्रसादं विना तदसिद्धेः। अतएवोक्तं श्रीशिवं प्रति दक्षेण (भा० ४।७।१५)—

"योऽसौ मयाविदिततत्त्वदृशा सभायां, क्षिप्तो दुरुक्तिविशिखैर्विगणय्य तन्माम्।
अर्वाक् पतन्तमरहत्तमनिन्दयापाद्--दृष्ट्यार्द्रया स भगवान् स्वकृतेन तुष्येत्॥"६८१॥

एवमुत्तरत्रापि ज्ञेयम्।

अथ वन्दनम्,—तच्च यद्यप्यर्च्चनाङ्गत्वेनापि वर्त्तते, तथापि कीर्त्तन-स्मरणवत् स्वातन्त्र्येणा-पीत्यभिप्रेत्य पृथग्विधीयते। एवमन्यत्रापि ज्ञेयम्। वन्दनस्य पृथग्विधानं चानन्तगुणैश्वर्य्य-श्रवणात् तद्गुणानुसन्धान-पादसेवादौ विधूतदैन्यानां नमस्कारमात्रे कृताध्यवसायानामर्थे। स एष नमस्कारस्तस्यार्च्चनत्वेनाप्यतिदिष्टः, यथा नारसिंहे—

"नमस्कारः स्मृतो यज्ञः सर्वयज्ञेषु चोत्तमः। नमस्कारेण चैकेन साष्टाङ्गेन हरिं व्रजेत्॥६८२॥ इति।

---

मथुरायां तथाप्येवं सापराधः शुचिर्भवेत्।
अनयोस्तीर्थयोरेकं यः सेवेत् सुकृती नरः।
सहस्रजन्मजनितानपराधान् जहाति सः॥"६८०॥

जो व्यक्ति, एकवत्सर के मध्य में मेरा वराह तीर्थ गङ्गा में स्नान करके उपवास करता है, वह शुद्ध होता है। इस प्रकार मथुरा में जो व्यक्ति, यमुना स्नान करके उपवास करता है, वह अपराधी होने पर भी पवित्र होता है। वराह क्षेत्र वा मथुराक्षेत्र इन दोनों क्षेत्र के मध्य में किसी एक की सेवा किस सौभाग्यशाली व्यक्ति करता है। वह सहस्र जन्म जनित अपराध से मुक्त होता है। शौकरक शब्द से शूकर क्षेत्र को जानना होगा। महत् के निकट अपराध उपस्थित होने पर महत् के निकट दैन्य विनयादि द्वारा अथवा महत् प्रीति हेतु निरन्तर दीर्घ काल व्यापी श्रीभगवन्नाम कीर्त्तन के द्वारा क्षमा करना अवश्य कर्त्तव्य है। इस का कथन पहले ही हुआ है। कारण, महत् की प्रसन्नता को छोड़कर अपराध क्षमा नहीं हो सकती है। अतएव दक्ष प्रजापति श्रीशिव को भा० ४।७।१५ में कहे हैं—

"योऽसौ मयाविदिततत्त्वदृशा सभायां, क्षिप्तो दुरुक्तिविशिखैर्विगणय्य तन्माम्।
अर्वाक् पतन्तमरहत्तमनिन्दयापाद्– दृष्ट्यार्द्रया स भगवान् स्वकृतेन तुष्येत्॥"६८१॥

मैं तत्त्व दृष्टि शून्य होने के कारण सभा में तुम्हें दुर्वाक्य रूप वाण के द्वारा तिरस्कार एवं विद्ध किया हूँ, तुम महत्तम हो, तुम्हारी निन्दा से पतित मुझ को अपराध न मानकर स्नेहार्द्र दृष्टि से तुमने पालन किया है। तुम भगवान् हो निजकृत परानुग्रह से ही सन्तुष्ट रहते हो, मैं निजकृत अपराध का प्रतीकार करने में सक्षम नहीं हूँ। इस के बाद भी इस रीति को समझना चाहिये।

अनन्तर वन्दन का वर्णन करते हैं— यद्यपि यह नमस्कारात्मक वन्दनाङ्ग भक्ति— अर्च्चन मार्ग के अङ्ग रूप में भी है, तथापि कीर्त्तन एवं स्मरणाङ्ग के समान वन्दनाङ्ग का स्वतन्त्र भाव से प्राधान्य है— इस अभिप्राय से ही पृथक् विधान हुआ है। इस प्रकार अन्य भक्त्यङ्ग को भी जानना चाहिये। कतिपय भक्त, श्रीभगवान् के अनन्त गुण एवं ऐश्वर्य्य श्रवण करके सम्भ्रान्त हृदय से उस उस गुणानुसन्धान एवं चरण सेवा प्रभृति में अपना अधिकार नहीं है, इस प्रकार दैन्याक्रान्त होकर केवल नमस्कार करने में कृतसंङ्कल्प होते हैं, उन के निमित्त ही इस वन्दनाङ्ग को पृथक् रूप से लिखा गया है। इस नमस्काराङ्ग

तदेतद्वन्दनं यथा (भा० १०।१४।८) —

(३०३) "तत्तेऽनुकम्पां सुसमीक्षमाणो, भुञ्जान एवात्मकृतं विपाकम् ।
हृद्वाग्वपुर्भिर्विदधन्नमस्ते, जीवेत यो मुक्तिपदे स दायभाक् ॥"६८३॥

यस्मात् (भा० १०।१४।७) "गुणात्मनस्तेऽपि गुणान् विमातुम्" इत्यादिना तादृशत्वमुच्यते, तत् तस्मात्, 'नमः' नमस्कारम्, मुक्तिपदे नवमपदार्थस्य मुक्तेरप्याश्रये परिपूर्णदशमपदार्थे, यद्वा, मुक्तिरिह पञ्चमस्थ-गद्यानुसारेण प्रेमैव, तत्पदे तद्विषये परिपूर्णभगवल्लक्षणे त्वयि दायभाग् भवति-भ्रातृवण्टन इव त्वं तस्य दायत्वेन वर्त्तस इत्यर्थः, त्वं तस्य सुवशो

---

को श्रीविष्णु के अर्च्चन रूप में भी कहा गया है। नरसिंह पुराण में उक्त है—

"नमस्कारः स्मृतो यज्ञः सर्वयज्ञेषु चोत्तमः ।
नमस्कारेण चैकेन साष्टाङ्गेन हरिं व्रजेत् ॥"६८२॥

समस्त यज्ञों के मध्य में नमस्कार को ही उत्तम यज्ञ कहा गया है। एकबार साष्टाङ्ग प्रणाम के द्वारा श्रीहरि को प्राप्त कर सकते हैं। पूर्वोक्त बन्दनाङ्ग का उदाहरण भा० १०।१४।८ में इस प्रकार है—

(३०३) "तत्तेऽनुकम्पां सुसमीक्षमाणो, भुञ्जान एवात्मकृतं विपाकम् ।
हृद्वाग्वपुर्भिर्विदधन्नमस्ते, जीवेत यो मुक्तिपदे स दायभाक् ॥"६८३॥

श्रीब्रह्मा श्रीकृष्ण को कहे थे—हे नाथ ! तुम निखिल गुणाकर हो, गुण समूह का परिमाण करने में कोई भी समर्थ नहीं है। तज्जन्य जो व्यक्ति, तुम्हारी कृपा के प्रति दृष्टि रखकर निज कृत विविध कर्म्म फल को भोगता रहता है, एवं काय, वाक्य, मन से तुम को प्रणाम करता है, अर्थात् सुख वा दुःख उपस्थित होने से उस को प्रभु की कृपा मानता है, कारण, निजकृत कर्म फल भोग का अवसान न होने से श्रीचरण प्राप्ति की सम्भावना ही नहीं है, अतएव श्रीप्रभु सुख भोग के द्वारा मेरा पुण्य बन्धन को सुख भोग के द्वारा विनष्ट कर देते हैं एवं दुःख भोग के द्वारा पाप बन्धन विनष्ट कर देते हैं। इस प्रकार जो व्यक्ति दुःख से उद्विग्न नहीं होता है, एवं सुख भोग हेतु अभिलाष नहीं करता है, किन्तु प्रत्येक कार्य्य में ही चातक जिस प्रकार नवीन मेघमुक्त जल के अभिलाषी होकर रहता है, उस प्रकार अपार करुणामय की कृपा कब होगी, इस आशा से ही जीवन धारण करता है, वही मुक्ति पद का अधिकारी है, अर्थात् भ्रातृ वण्टन सम्पत्ति के समान तुम को वह प्राप्त करता है। उक्त न्याय से सब ही व्यक्ति उत्तराधिकारी सूत्र से भगवत् प्राप्ति का अधिकारी हैं, इस आशङ्का निवारण हेतु कहते हैं, 'जीवेत' अर्थात् भ्रातृवण्टन सम्पत्ति का अधिकारी जीवित व्यक्ति है, मृत व्यक्ति नहीं, उस प्रकार जो व्यक्ति जीवित है, वही भगवत् चरणारविन्द लाभ का अधिकारी है। यहाँ 'जीवित' शब्द का अर्थ भजन अनुष्ठान में रत रहना है। अर्थात् जो व्यक्ति भगवच्चरणों में भक्ति करता है, वही जीवित है, तद्व्यतीत अपर जीवित शव है। अर्थात् जिस जीवन में भगवद् भक्ति का स्पन्दन नहीं है, वही जीवन शव सदृश है : मूल श्लोक में 'मुक्तिपदे" शब्द का उल्लेख है— उस का अर्थ इस प्रकार है – प्रथमतो मुक्तिपद शब्द के अर्थ द्विविध हैं। प्रथम अर्थ—विश्वसर्ग विसर्ग,---यह दश पदार्थ के मध्य में नवम पदार्थ रूप जो मुक्ति है—उस का आश्रय, परिपूर्ण दशम आश्रय पदार्थ—का अधिकारी है। द्वितीय अर्थ—भा० ५।१६।२० के अनुसार 'यथा वर्ण विधानमपवर्गश्च भवति' अपवर्ग शब्द का अर्थ-- प्रेम भक्ति है। उस प्रेम भक्ति का विषय जो परिपूर्ण भगवान् उस का अधिकारी होता है। अन्यत्र 'मुक्ति-पद' का अर्थ है—निखिल मुक्ति--जिन के चरणों को आश्रय कर हैं, वही मुक्ति पद है। तात् पर्य्यार्थ यह

भवतीत्यर्थः । मुक्तिमात्रं तु सकृन्नमस्कारेणैवासन्नं स्यात्, यथा विष्णुधर्मे—

"दुर्ग--संसार-कान्तार मपारमभिधावताम् । एकः कृष्णे नमस्कारो मुक्तितीरस्य दैशिकः ॥"९८४॥ इति

'तत्ते' इत्यत्र "सुसमीक्षमाणः प्रतीक्षमाणः" इति टीका, यद्वा, प्रतिक्षणं निरुपाधिकृपयैव प्रभुणा तथा तथा क्रियमाणामनुकम्पां सुष्ठुरूपामीक्षमाणस्तत्रानन्दीभवत् तां सम्यक् पश्यन् विभावयन् तथा हृदा, यद्वा, वाचा, यद्वा, वपुषा, नमो विदधज्जन इत्यादि-व्याख्या ज्ञेया । नमस्कारेऽपराधाश्चैते परिहर्त्तव्याः, विष्णुस्मृत्यादिदृष्ट्या ये खलु एकहस्तकृतत्व-वस्त्रावृत-देहत्व-भगवदग्रपृष्ठ-वामभागात्यन्तनिकट-गर्भमन्दिरगतत्वादिमयाः ॥ श्रीब्रह्मा श्रीभगवन्तम् ॥

३०४। अथ दास्यम्, तच्च श्रीविष्णोर्दासम्मन्यत्वम्—

"जन्मान्तरसहस्रेषु यस्य स्यान्मतिरीदृशी । दासोऽहं वासुदेवस्य सर्वान् लोकान् समुद्धरेत् ॥"९८५॥

---

है कि—अनन्त स्वरूप भगवान् के नाम, रूप, गुण, लीला, परिकर, ऐश्वर्य्य, माधुर्य्य प्रभृति का आनन्त्य को सुनकर दीन भाव से--'मेरी योग्यता स्मरण कीर्त्तन की नहीं है । मैं केवल श्रीचरणों में निपतित होकर नमस्कार ही करूँगा—इस प्रकार वन्दन--नमस्कार रूप अङ्ग का अवलम्बन श्रीअक्रूर के समान कोई कोई अन्य करते हैं । यहाँ मुक्ति शब्द का अर्थ 'मुक्ति' सङ्गत नहीं है । कारण, एकवार मात्र नमस्कार से ही मुक्ति समीपवर्त्ती होती है, विष्णु धर्मोत्तर में उक्त है—

"दुर्ग--संसार--कान्तार मपारमभिधावताम् ।
एकः कृष्णे नमस्कारो मुक्तितीरस्य दैशिकः ॥"९८४॥

अपार दुर्गम संसारारण्य में जो भ्रमण करते रहते हैं—उन के पक्ष में श्रीकृष्ण को एकवार मात्र प्रणाम ही मुक्ति नदी तीर का प्रदर्शक होता है । "तत्तेऽनुकम्पांसुसमीक्ष्यमाणः" श्लोक में स्वामि पादने 'सुसमीक्ष्यमाणः" का अर्थ 'प्रतीक्षमाण' किया है । अर्थात् जो व्यक्ति निजकृत कर्म्मफल भोग करता है, एवं "कब श्रीकृष्ण की कृपा होगी" प्रतिक्षण इस प्रकार प्रतीक्षा करता है । इस से बोध होता है कि—निजकृत कर्म्म फल भोग, श्रीकृष्ण कृपा जनित नहीं है, किन्तु भोग में अनासक्त होकर कब श्रीकृष्ण कृपा करेंगे—इस प्रकार प्रतीक्षा है । श्री जीव गोस्वामि चरण के मत में 'सुसमीक्षमाण' शब्द का अर्थ यह है—जो व्यक्ति, निजकृत कर्म भोग काल में प्रभु श्रीकृष्ण ही यह सब भोग प्रदान करते रहते हैं, अतएव पुत्रोत्पत्ति में भी श्रीकृष्ण कृपा, पुत्र मृत्यु में भी श्रीकृष्ण कृपा, इस प्रकार मानकर सर्वावस्था में ही सुखी होकर श्रीकृष्ण कृपा भावना करके हृदय के द्वारा किंवा वाक्य के द्वारा, अथवा शरीर द्वारा, नमस्कार करता है, वही मुक्ति पद श्रीकृष्ण चरणों में भ्रातृ वण्टन सम्पत्ति के समान अधिकारी है । इस नमस्कार रूप भक्त्यङ्ग आचरण में विष्णु स्मृति प्रभृति में लिखित अपराध समूह को परित्याग करना अवश्य कर्त्तव्य है । (१) एकहस्त प्रणाम, (२) वस्त्रावृत देह में प्रणाम, (३) श्रीभगवान् के सम्मुख में प्रणाम, पृष्ठ भाग में वामभाग में प्रणाम अत्यन्त निकट में वा गर्भ मन्दिर में प्रणाम करना अपराध जनक है ।

श्रीब्रह्मा श्रीभगवान् को कहे थे ॥३०३॥

३०४। अनन्तर दास्य भक्ति का वर्णन करते हैं—"मैं श्रीविष्णु का दास हूँ" इस प्रकार अभिमान से भक्ति का अनुष्ठान करने का नाम दास्य भक्ति है ।

"जन्मान्तर सहस्रेषु यस्य यस्मान्मतिरीदृशी ।
दासोऽहं वासुदेवस्य सर्वान् लोकान् समुद्धरेत् ॥९८५॥

इत्युक्तलक्षणम् । अस्तु तावत्तद्भजन प्रयासः, केवलतादृशत्वाभिमानेनापि सिद्धिर्भवतीत्यभिप्रेत्यैवोत्तरत्र निर्देशश्च तस्य, यथोक्तम्—'जन्मान्तर-'इत्येतत्पद्यस्यैवान्ते,—'किं पुनस्तद्गतप्राणाः पुरुषाः संयतेन्द्रियाः" इति । श्रीप्रह्लाद-स्तुतौ (भा० ७।९।५०) 'तत्तेऽर्हत्तम' इत्यादिपद्ये तु नमः-स्तुति-सर्व्वकर्म्मार्पण-परिचर्य्या-चरणस्मृति-कथाश्रवणात्मकं दास्यं टीकायां सम्मतम् । श्रीमदुद्धववाक्ये च (भा० ११।६।४६) —

"त्वयोपभुक्त स्रग् गन्ध-वासोऽलङ्कारचर्चिताः ।
उच्छिष्टभोजिनो दासास्तव मायां जयेम हि ॥"६८६॥ इति ।

तत्र तत्र च कार्य्यद्वारैव निर्दिष्टम्, उदाहरणन्तु (भा० ९।४।१८--२०) —

(३०४) "स वै मनः कृष्णपदारविन्दयोः" इत्यादौ,
"कामञ्च दास्ये न तु कामकाम्यया" इति ।

चकारेति पूर्व्वेणान्वयः । कामं सङ्कल्पञ्च दास्ये निमित्ते एव, च-कारात्दासोऽहं तस्य दास्यमेतत् करोमीत्येवं सङ्कल्पितवानित्यर्थः, न तु कामकाम्यया स्वर्गादि-भोगेच्छया तं चकारेति वासनान्तर-व्यवच्छेदः ॥ श्रीशुकः ॥

---

सहस्र सहस्र जन्म के सौभाग्य फल से "मैं वासुदेव का दास हूँ । इस प्रकार अभिमान का उदय जिस में हुआ है, वही समस्त लोक की उद्धार करता है । भजन करन की बात तो दूर है—"मैं भगवान् का दास हूँ" केवल इस प्रकार अभिमान से ही सर्वार्थ सिद्धि होती है, अर्थात् प्रेम भक्ति लाभ होती है । "जन्मान्तर सहस्रेषु' इस प्रकार कथन के पश्चात् कहा गया है--"किं पुनस्तद् गत प्राणाः पुरुषाः संयतेन्द्रियः" अर्थात् "मैं वासुदेव का दास हूँ " इस प्रकार अभिमान से ही मानव, समस्त जीव को उद्धार कर सकता है, और जो व्यक्ति, भगवत् गत प्राण. संयत इन्द्रिय, वे समस्त जीवों को सुतरां उद्धार करने में सक्षम हैं । इस का सारार्थ यह है कि—"मैं वासुदेव का दास हूँ । इस प्रकार अभिमान से ही अन्य को कृतार्थ करने की सामर्थ्य होती है, सुतरां दासोचित आचरण करने से सब को कृतार्थ कर सकते हैं । भा० ७।९।५० में श्रीप्रह्लाद ने श्रीनृसिंह को स्तव करके कहा है—"तत्तेऽर्हत्तम" नमस्कार, स्तुति, सर्वकर्म्मार्पण, परिचर्य्या, चरण स्मृति, एवं कथा श्रवण रूप दास्य' 'मैं श्रीविष्णु का दास हूँ" इस अभिमान का कार्य्य है । अर्थात् मैं श्रीविष्णु का दास हूँ, इस अभिमान से उक्त समस्त भक्त्यङ्ग का अनुष्ठान करने से ही वह व्यक्ति कृतार्थ होता है । भा० ११।६।४६ में श्रीउद्धव ने भी कहा है—

"त्वयोपभुक्त स्रग् गन्ध-वासोऽलङ्कारचर्चिताः ।
उच्छिष्टभोजिनो दासास्तव मायां जयेम हि ॥"६८६॥

हे भगवन् ! तुम्हारी मूर्त्ति में अर्पित माल्य, गन्ध, वस्त्र, अलङ्कार द्वारा विभूषित होकर, तुम्हारी उच्छिष्ट भोजन करके तुम्हारे दासाभिमानी हम सब अनायास से माया जय करने में सक्षम होंगे । किन्तु साक्षात् दास्य का उदाहरण भा० ९ ४ १८–२० में है--

(३०४) 'स वै मनः कृष्ण पदारविन्दयोः"
"कामञ्च दास्ये न तु काम काम्यया"

श्रीअम्बरीष महाराज श्रीकृष्ण पदारविन्द युगल में 'मन' अर्पण किये थे । एवं उनका सङ्कल्प भी

३०५। तदेतद्दास्य-सम्बन्धेनैव सर्व्वमपि भजनं महत्तरं भवतीत्याह (भा० ९।५।१६)–

(३०५) "यन्नामश्रुतिमात्रेण पुमान् भवति निर्म्मलः।
तस्य तीर्थपदः किंवा दासानामवशिष्यते ॥"९८७॥

यस्य भगवतो नामश्रवणमात्रेण यथाकथञ्चित्तच्छ्रवणेन, किं पुनः सम्यक् तत्तद्भजनेनेत्यर्थः। तर्हि दासोऽस्मीत्यभिमानेन सम्यगेव भजतां सर्व्वत्र साधने साध्ये च किमवशिष्यते-तदधिकमन्यत् किमपि नास्तीत्यर्थः ॥ दुर्वासाः श्रीमदम्बरीषम् ॥

३०६। अथ सख्यम्, तच्च हिताशंसनमयं बन्धुभावलक्षणम् (भा० १०।१४।३१) "यन्मित्रं परमानन्दम्" इत्यत्र तथैव मित्र-पदन्यासात्। यथा रामार्च्चनचन्द्रिकायाम्–

"परिचर्य्यापराः केचित् प्रासादादिषु शेरते। मनुष्यमिव तं द्रष्टुं व्यवहर्त्तुञ्च बन्धुवत् ॥"९८८। इति।

अस्य चोत्तरत्र पाठः प्रेम विश्रम्भवद्भावनामयत्वेन दास्यादप्युत्तमत्वापेक्षया। किञ्च, परमेश्वरेऽपि यत् सख्यं शास्त्रे विधीयते, तन्नाश्चर्य्यम्–"नादेवो देवमर्च्चयेत्" इति तद्भावस्यापि

---

श्री दास्य में ही था। किन्तु भोग काम में नहीं था। इस से दास्य में दास भावोचित निजप्रभु की सेवा व्यतीत अन्य कामना शून्यता का उदाहरण प्रस्तुत हुआ। श्रीशुक, कहे थे ॥३०४॥

३०५। उक्त दास्य सम्बन्ध से ही समस्त भजनों की श्रेष्ठतमता होती है। भा० ९।५।१६ में उक्त है-

(३०५) "यन्नाम श्रुतिमात्रेण पुमान् भवति निर्म्मल।
तस्य तीर्थपदः किंवा दासानामवशिष्यते ॥"९८७॥

सम्बन्ध अवलम्बन से जो कुछ कार्य्य किया जाता है, वह भक्त एवं भगवान्—उभय के पक्ष में ही सुखप्रद होता है। इस अभिप्राय से ही दुर्वासा-अम्बरीष को कहे थे– तीर्थ पद भगवान् के यथा कथञ्चित नाम श्रवण के द्वारा ही मानव जब निर्म्मल होता है, अर्थात् श्रीनाम माधुर्य्य आस्वादन के द्वारा धर्म्मादि मोक्ष पर्य्यन्त फल में तुच्छता बुद्धि होती है, तब सम्यक् भजन के द्वारा सुतरां मानव कृतार्थ होता है। ऐसा होने पर "मैं श्रीभगवान् का दास हूँ" इस अभिमान से जो श्रीभगवान् का भजन करते रहते हैं, उन के पक्ष में सर्व साधन एवं सर्व साध्य लाभ करने के मध्य में अवशेष क्या रह जाता है?

अर्थात् श्रीभगवद् दास्य से अधिक लाभ कुछ भी नहीं है। दुर्वासाः श्रीमदम्बरीष को कहे थे ॥३०५॥

३०६। अनन्तर सख्य का वर्णन करते हैं—श्रीभगवान् की हिताकाङ्क्षा मय बन्धुभाव का नाम सख्य है। भा० १०।१४।३२ में लिखित है—"यन्मित्रं परमानन्दं" यहाँ परमानन्द पूर्ण ब्रह्म श्रीकृष्ण, व्रज बासीवृन्द के मित्र अर्थात् हिताकाङ्क्षी बन्धु हैं। इस उद्देश्य से ही मित्र पद का प्रयोग है। जिस प्रकार रामार्च्चन चन्द्रिका में लिखित है—

"परिचर्य्यापराः केचित् प्रासादादिषु शेरते।
मनुष्यमिव तं द्रष्टुं व्यवहर्त्तुञ्च बन्धुवत् ॥"९८८॥

श्रीभगवान् को मनुष्य के समान देखने के निमित्त एवं उन के सहित बन्धु जन के समान व्यवहार करने के निमित्त कतिपय सेवा परायण महाभागवत श्रीमन्दिर में ही शयन करते हैं। इस अभिप्राय से ही "श्रवणं कीर्त्तनं" श्लोक में दास्य के बाद, सख्य का उल्लेख हुआ है। दास्य के पश्चात्, सख्य का उल्लेख करने का कारण यह है, यद्यपि दास की सेवा सम्प्राप्ति है, तथापि साध्वस सङ्कोच एवं प्रचुर गौरव बुद्धि

विधानश्रवणात्। किन्तु तद्भावस्तत्सेवा-विरुद्ध इति शुद्धभक्तैरुपेक्ष्यते। सख्यन्तु परम-सेवानुकूलमित्युपादीयत इति। तदेतत् साक्षाद्भजनात्मकं दास्यं सख्यञ्च टीकायामपि दर्शितमस्ति (भा० १०।८१।३६) "तस्यैव मे सौहृदसख्य-मैत्री-दास्यं पुनर्जन्मनि जन्मनि स्यात्" इत्यत्र श्रीदामविप्रवाक्ये, यथा—"श्रीकृष्णस्य भक्तवात्सल्यं दृष्ट्वा तद्भक्तिं प्रार्थयते,—तस्येति। सौहृदं प्रेम च, सख्यं हिताशंसनञ्च, मैत्री उपकारकत्वञ्च, दास्यं सेवकत्वञ्च तत्, समाहारैकवचनम्, तस्य तत्सम्बन्धिनो मे मम स्यात्, न तु विभूतिः" इत्येतत्। अत्र नवविधायां साध्यत्वात् प्रेमा नान्तर्भाव्यते, मैत्री तु सख्य एवान्तर्भाव्येति दास्य-सख्ये द्वे एव गृहीते। अत्र च ताभ्यां कर्म्मार्पण-विश्वासौ न व्याख्यातौ,—साक्षाद्भक्तित्वाभावात्। कर्म्मार्पणस्य फलं भक्तिर्विश्वासश्च भक्त्यभिनिवेशहेतुरितीह पूर्व्वमुक्तम्। तच्च भगवद्विषय-हिताशंसनमयं सख्यम्,—भगवत्कृतहिताशंसनस्य नित्यत्वात्, तेन सह तस्य नित्यसहवासाच्च। भजनविशेषेणापि विशिष्टं सम्पादयितुं नातिदुष्करं स्यादित्याह (भा० ७।७।३८)

---

होने के कारण भाव का दौर्बल्य सख्य में दासोचित सेवा तो है ही-साध्वस, सङ्कोच प्रभृति भी नहीं है। प्रत्युत बन्धु भाव प्रीति में विश्वास का प्राधान्य होने के कारण, सख्य में गौरवमय बुद्धि है ही नही परमेश्वर में असङ्कोच व्यवहारमय सख्य का विधान शास्त्र में दृष्ट होता है। यह आश्चर्य कर नहीं है। कारण 'नादेवो देवमर्च्चयेत" इत्यादि शास्त्र वाक्य से ज्ञात होता है कि—देवता होकर ही देवता का अर्च्चन करना चाहिये। किन्तु, साधक अपने को देवता भावना करने से निज प्रभु की सेवा के सहित विरोध उपस्थित होगा। इस अभिप्राय से ही शुद्ध भक्तगण अभीष्ट देव के सहित निज अभेद भावना करने की विधि की उपेक्षा करते हैं। साक्षात् भजन स्वरूप दास्य एवं सख्य का वर्णन श्रीधर स्वामिपाद कृत भागवत टीका में भी है। भा० १०।८१।३६ में उक्त है—

"तस्यैव मे सौहृद सख्य मत्री दास्यं पुनर्जन्मनि जन्मनि स्यात्॥

श्रीदाम विप्र—श्रीकृष्ण के भक्त वात्सल्य को देखकर उनके चरणों में भक्ति प्रार्थना करते हुये कहे थे। मेरा जन्म जन्म में श्री कृष्ण के सम्बन्ध में प्रेम, सख्य (हितकामिता) मैत्री (उपकारिता दास—सेवकत्व हो, किन्तु विभूति प्राप्त करने का अभिलाष जैसे कभी न हो। यहाँ ज्ञातव्य यह है कि—श्रवण कीर्त्तन रूपा नवधा भक्ति ही साधन रूपा है, नव विधा भक्ति के अन्तर्भुक्त प्रेम' नहीं है। कारण यह नवधा भक्ति साधन के द्वारा ही प्रेम—साध्य अर्थात् प्राप्य है। मैत्री किन्तु—सख्य का ही अन्तर्भुक्त है। इस अभिप्राय से ही "श्रवणं कीर्त्तनं" श्लोक में दास्य सख्य का ग्रहण हुआ है। मैत्री का ग्रहण नहीं हुआ है। किन्तु यहाँपर अर्थात् विशुद्ध भक्ति के प्रसङ्ग में—दास्य शब्द से कर्म्मार्पण एवं सख्य शब्द से विश्वास रूप अर्थ किया गया है। कारण, कर्मार्पण रूपा भक्ति में एवं विश्वास रूपा भक्ति में साक्षात् भक्ति धर्म का अभाव है। कर्म्मार्पण रूपा भक्ति का फल—साक्षात् भक्ति है, विश्वास, भगवत् भक्ति साधन में अभिनिवेश के प्रति हेतु है। इस के पहले इस प्रकार कहा गया है। भगवद् विषयक हिताकाङ्क्षामय सख्य, भगवत् कृत हिताशंसन के नित्यत्व हेतु, एवं श्रीभगवान् के सहित सख्य भावावलम्बी के सहवास हेतु भजन विशेष द्वारा सम्पादित होता है। अभिप्राय यह है कि—नित्य ही भगवत् भक्त का स्वभाव ही है—श्रीभगवान् की हिताकाङ्क्षा करना। एवं भक्त एवं भगवान् सर्वदा एकत्र अवस्थान करते हैं। कारण भा० ९।४ में कथित है—'साधवो हृदयं मह्यं साधूनां हृदयन्त्वहं" अर्थात् भक्त भगवान् के नित्य सह

(३०६) "कोऽतिप्रयासोऽसुरबालका हरे,--रुपासने स्वे हृदि छिद्रवत् सतः।
स्वस्यात्मनः सख्युरशेषदेहिनां, सामान्यतः किं विषयोपपादनैः॥"६८६॥

छिद्रवत् आकाशवदलिप्तत्वेन सदा वर्त्तमानस्य, नातिप्रयासे हेतुः--सर्व्वेषां देहिनां यः स्व आत्माशुद्धं स्वरूपं तस्य, सामान्यतः सर्व्वत्र निर्विशेषतयैव सखा, यथावसरं वहिरन्तः करण-विषयादिलक्षण-मायिकया निजप्रेमादिलक्षणामायिकयाश्च सम्पत्तेर्दानेन हिताशंसी यस्तस्य हरेः। तस्मादारोपितानां नश्वराणां विषयाणां जायापत्यादीनामुपार्जनैः किमिति॥ श्रीप्रह्लादोऽसुरबालकान्॥

३०७। तद्यथा (भा० ९।४।६६)---

(३०७) "मयि निर्बद्धहृदयाः साधवः समदर्शिनः।
वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथा॥"६९०॥

अत्र दृष्टान्तेनांशतः सख्यात्मिका भक्तिर्लक्ष्यते॥ श्रीवैकुण्ठो दुर्वाससम्॥

३०८। एवञ्च (भा० ४।१२।३७) —

---

वासित्व है। सख्य भजन के द्वारा विशेष रूप से उस को उद्‌बुद्ध करना ही सुसाध्य है--दुःसाध्य नहीं है। इस अभिप्राय से ही भा० ७।४।३८ में श्रीप्रह्लाद ने कहा है--

(३०६) "कोऽतिप्रयासोऽसुरबालका हरे,--रुपासने स्वे हृदि छिद्रवत् सतः।
स्वस्यात्मनः सख्युरशेषदेहिनां, सामान्यतः किं विषयोपपादनैः॥"६८६॥

हे असुर बालक वृन्द ! जो छिद्रवत् अर्थात् आकाशवत् अलिप्त भाव से सर्वदा वर्त्तमान हैं। समस्त देहि वृन्द के आत्मा अर्थात् शुद्ध स्वरूप हैं, जो सामान्यतः सर्वत्र निर्विशेष भाव से सखा अर्थात् वाह्यान्तर इन्द्रिय समूह की मायामय भोग सम्पत्ति दान करते रहते हैं। अतएव हित कारी हैं। उन श्रीहरि की उपासना के निमित्त अति प्रयास की आवश्यकता ही क्या है ? अतएव आरोपित नश्वर विषय स्त्री पुत्र प्रभृति उपार्ज्जन के द्वारा क्या लाभ है ?

श्रीप्रह्लाद श्रीअसुर बालकों को कहे थे॥३०६॥

३०७। भक्त वृन्द के निकट श्रीभगवान् पारस्परिकसख्य भाव से आविष्ट होते हैं--उसका उदाहरण भा० ९।४।६६ में इस प्रकार है--

(३०७) "मयि निर्बद्ध हृदयाः साधवः समदर्शिनः।
वशे कुर्वन्ति मां भक्त्या सत् स्त्रियः सत् पतिं यथा॥"६९०॥

श्रीवैकुण्ठ नाथ दुर्वासा मुनि को कहे थे--"हे मुने ! समदर्शी साधुगण, मुझ में नित्य बद्ध हृदय होकर सती रमणी जिस प्रकार सत् पति को वशीभूत करती है, उस प्रकार भक्ति द्वारा मुझ को वशीभूत करते हैं। इस दृष्टान्त के द्वारा अंशतः सख्यात्मिका भक्ति को लक्ष्य किया गया है। कारण, मूल श्लोक में सती रमणी एवं सत् पति का दृष्टान्त होने के कारण, कुछ अंश में सख्य भाव का प्रकाश हुआ है।

श्रीवैकुण्ठ दुर्वासा को कहे थे॥६९०॥

३०८। इस प्रकार भा० ४।१२।३७ में लिखित है —

(३०८) "शान्ताः समदृशः शुद्धाः सर्वभूतानुरञ्जनाः ।
यान्त्यञ्जसाच्युतपदमच्युतप्रियबान्धवाः ॥" ६६१॥

अच्युत एव प्रियबान्धवो येषाम्, अच्युतस्य पदं तत्सनाथं लोकम् । अच्युत-शब्दावृत्त्या फलस्य केनाप्यंशेन व्यभिचारित्वं नेति दर्श्यते ॥ श्रीमैत्रेयः ॥

३०९ । अथ आत्मनिवेदनम्, तच्च देहादिशुद्धात्मपर्य्यन्तस्य सर्व्वतोभावेन तस्मिन्नेवार्पणम् । तत्कार्य्यं चात्मार्थचेष्टाशून्यत्वं तन्न्यस्तात्मसाधन-साध्यत्वं तदर्थैकचेष्टामयत्वञ्च । इदं ह्यात्मार्पणं गोविक्रयवत्, विक्रीतस्य गोर्वर्त्तनार्थं विक्रीतवता चेष्टा न क्रियते, तस्य च श्रेयःसाधकस्तं क्रीतवानेव स्यात् स च गौस्तस्यैव कर्म्म कुर्य्यात्, न पुनर्विक्रीतवतोऽपीति । इदमेवात्मार्पणं श्रीरुक्मिणीवाक्ये (भा० १०।५२।३९) — "तन्मे भवान् खलु वृतः पतिरङ्गजाया, मात्मार्पितश्च भवतोऽत्र विभो विधेहि" इति । अत्र केचिद्देहार्पणमेवात्मार्पणमिति मन्यन्ते, यथा भक्तिविवेके—

"चिन्तां कुर्य्यान्न रक्षायै विक्रीतस्य यथा पशोः । तथार्पयन् हरौ देहं विरमेदस्य रक्षणात् ॥" ६६२॥

---

(३०८) "शान्ताः समदृशः शुद्धाः सर्वभूतानुरञ्जनाः ।
यान्त्यञ्जसाच्युतपदमच्युतप्रियबान्धवाः ॥" ६६१॥

श्रीमैत्रेय ऋषि श्रीविदुर को जो कहे थे—उस में भी सख्य भाव का आभास उपलब्ध है—अच्युत श्रीकृष्ण ही जिन के प्रिय बान्धव हैं, वे सब प्रकार वासना शून्य हेतु शान्त हैं, स्वर्ग मोक्ष नरक में तुल्य दृष्टिता के कारण, अर्थात् इन तीनों में मानसिक आवेश होने से श्रीहरि चरणों में प्रीति का अन्तराय उपस्थित होता है । समदर्शी हैं, एवं सर्व भूतों में सुखद व्यवहारकारी हैं, इस प्रकार साधु गण, जहाँ श्रीकृष्ण विराजित हैं, उस अच्युत धाम को जाते हैं । मूल श्लोक में 'अच्युत प्रिय बान्धवाः" एवं 'अच्युत पद" उभय स्थान में अच्युत शब्द का प्रयोग होने से श्री भगवद्धाम प्राप्ति विषयक किसी भी अंश में सन्देह नहीं है, यह सूचित हुआ है ।

श्रीमैत्रेय कहे थे---३०८॥

३०९ । सम्प्रति आत्म निवेदन का वर्णन करते हैं----नवधा भक्त्यङ्ग के मध्य में यह नवम हैं । आत्मनिवेदन----दो प्रकार के होते हैं । एक देह समर्पण, अपर शुद्ध आत्म समर्पण, समर्पण शब्द का अर्थ है,---सर्वतोभावेन श्रीभगवान् को दान करना । आत्मसमर्पण का कार्य्य है--स्वयं के निमित्त चेष्टा शून्यता उस में ही अर्पित निज साध्य साधन, एवं श्रीभगवान् के निमित्त कायिक, वाचिक, मानसिक चेष्टामयता । यह आत्म समर्पण गो विक्रय के तुल्य होता है । जिस प्रकार गो विक्रय, करने से गो विक्रय कारी व्यक्ति गोपालन पोषण में यत्न नहीं करता है । जिस को विक्रय किया गया है, वही क्रीत गोका मङ्गल साधक होता है । एवं जिसको विक्रय किया गया है, गो उसी का कार्य्य करता है, किन्तु जो विक्रय करता है, उस का कुछ भी नहीं करता है, इस आत्मार्पण का दृष्टान्त भा० १०।५२।३९ में है---

"तन्मे भवान् खलु वृतः पतिरङ्ग जाया,- मात्मार्पितश्च भवतोऽत्र विभो विधेहि"

श्रीरुक्मिणी देवी पत्र द्वारा श्रीकृष्ण को कही थीं "हे विभो ! मैंने आप को पति रूप में वरण किया है, एवं आत्म समर्पण भी किया है । आप मुझ को जाया रूप में निकट में स्थान दें "कतिपय व्यक्ति, देह समर्पण को ही आत्मार्पण मानते हैं, भक्ति विवेक ग्रन्थ में उस का उल्लेख है—

केचिच्छुद्धक्षेत्रज्ञार्पणमेव, यथा श्रीमदालमन्दारु स्तोत्रे—

"वपुरादिषु योऽपि कोऽपि वा, गुणतोऽस्मानि यथातथाविधः ।
तदयं तव पादपद्मयो,--रहमद्यैव मया समर्पितः ॥"६९३ । इति ।

केचिच्च दक्षिणहस्तादिकमप्यर्पयन्तस्तेन तत्कर्म्ममात्रं कुर्वते, न तु देहादिकर्म्मेत्याद्यपि दृश्यते । तदेतत् सर्वात्मकं सकार्य्यमात्मनिवेदनं यथा (भा० ६।४।१८--२०)

(३०६) "स वै मनः कृष्णपदारविन्दयो,-र्वचांसि वैकुण्ठगुणानुवर्णने ।
करौ हरेर्मन्दिरमार्ज्जनादिषु, श्रुतिं चकाराच्युत-सत्कथोदये ॥६९४॥
मुकुन्दलिङ्गालय-दर्शने दृशौ, तद्भृत्यगात्रस्परशेऽङ्गसङ्गमम् ।
घ्राणञ्च तत्पादसरोजसौरभे, श्रीमत्तुलस्या रसनां तदर्पिते ॥६९५॥
पादौ हरेः क्षेत्रपदानुसर्पणे, शिरो हृषीकेश-पदाभिवन्दने ।
कामञ्च दास्ये न तु कामकाम्यया, यथोत्तमश्लोकजनाश्रया रतिः ॥"६९६॥

चकार अर्पयामास । कृष्णपदारविन्दयोरित्यादिकमुपलक्षणं तत्सेवादीनाम् । लिङ्गं श्रीमूर्त्तिः, आलयस्तद्भक्तस्तन्मन्दिरादिः, श्रीमत्तुलस्यास्तत्पादसरोजसम्बन्धि यत् सौरभं

---

"चिन्तां कुर्य्यान्न रक्षायै विक्रीतस्य यथा पशोः ।
तथार्पयन् हरौदेहं विरमेदस्यरक्षणात् ॥"६९२॥

विक्रीत पशु रक्षा निबन्धन जिस प्रकार चिन्ता नहीं रहती है, उस प्रकार श्रीहरि को शरीरार्पण करके उस की रक्षा की चिन्ता से विरत होवे । अपर कुछ व्यक्ति--शुद्ध क्षेत्रज्ञापण अर्थात् जीवात्मार्पण ही आत्म समर्पण करते हैं । श्रीआलमन्दार स्तोत्र में इस का उदाहरण है ।

"वपुरादिषु योऽपि कोऽपि वा, गुणतोऽस्मानि यथा तथाविधः ।
तदयं तव पादपद्मयोरहमद्यैव मया समर्पितः ॥"६९३॥

मेरे देहादि के मध्य में जो कोई हो, एवं यथा यथ रूपमें गुणतः जो कुछ हो--आज मैं तुम्हारे चरणों में समर्पित हो गया । और कोई तो दक्षिण हस्तादि को समर्पण करके उससे केवल श्रीभगवान्के कार्य्य ही करते हैं, किन्तु दैहिक कर्म नहीं करते हैं,इस प्रकार आत्मार्पण भी दृष्ट होता है । यह आत्म समर्पण भक्ति, सर्व कार्य्य के सहित देह इन्द्रिय आत्म पर्य्यन्त समर्पण श्रीअम्बरीष महाराज में दृष्ट होता है । भा० ४।१८-२० में उक्त है—

(३०९) "स वै मनः कृष्णपदारविन्दयो,-र्वचांसि वैकुण्ठगुणानुवर्णने ।
करौ हरेर्मन्दिरमार्ज्जनादिषु, श्रुतिं चकाराच्युत-सत्कथोदये ॥६९४॥
मुकुन्दलिङ्गालय-दर्शने दृशौ, तद्भृत्यगात्रस्परशेऽङ्गसङ्गमम् ।
घ्राणञ्च तत्पादसरोजसौरभे, श्रीमत्तुलस्या रसनां तदर्पिते ॥६९५॥
पादौ हरेः क्षेत्रपदानुसर्पणे, शिरो हृषीकेश-पदाभिवन्दने ।
कामञ्च दास्ये न तु कामकाम्यया, यथोत्तमश्लोकजनाश्रया रतिः ॥"६९६॥

अम्बरीष महाराज,--श्रीकृष्ण चरण युगल में मन को अर्पण किये थे । श्रीकृष्ण पदारविन्द शब्द से

तस्मिन्, तदर्पिते महाप्रसादान्नादौ, कामं सङ्कल्पं च दास्ये निमित्ते। कथं चकार ? यथा येन प्रकारेण उत्तमश्लोकजनाश्रया रतिः सा भवेदिति। अत्र सर्वथा तत्रैव सङ्घातात्म-निक्षेपः कृत इति वैशिष्ट्यापत्त्या स्मरणादि--मयोपासनस्यैवात्मार्पणत्वम्। एवमेवोक्तम् (भा० ११।१९।२०)---"श्रद्धामृतकथायां मे शश्वन्मदनुकीर्त्तनम्" इत्यारभ्य (भा० ११।१९।२४) "एवंधर्म्मैर्मनुष्याणाम्" इति। यथा स्मरण-कीर्त्तन-पादसेवनमय्युपासनमेव आगमोक्तविधि-मयत्व-वैशिष्ट्यापत्त्यार्च्चनमित्यभिधीयते, ततो नातिविक्तत्वम्। स्नान-परिधानादिक्रिया चास्य भगवत्सेवा-योग्यत्वायैवेति, तत्रापि नात्मार्पणभक्तिहानिरित्यनुसन्धेयम्। एतदात्मार्पणं

---

समझना होगा कि—श्रीकृष्ण के सेवादि कार्य्य सम्पादन हेतु सङ्कल्प किये थे। वाक्य समूह को श्रीकृष्ण गुणानु वर्णन में नियुक्त किये थे। हस्तद्वय को श्रीहरि मन्दिर मार्जनादि कार्य्य में रत किये थे। श्रुति—अर्थात् श्रवण इन्द्रिय को श्रीकृष्ण की पवित्र कथा का श्रवण में नियुक्त किये थे, नयन युगल को श्रीमुकुन्द की मूर्त्ति दर्शन में भक्त दर्शन में एवं श्रीमन्दिरादि दर्शन में नियुक्त किये थे। भक्त गात्र स्पर्श हेतु अङ्ग को नियुक्त किये थे। घ्राणेन्द्रिय को श्रीमती तुलसी सम्बन्ध युक्त भगवत् पद कमल सम्बन्धित सौरभ ग्रहण में नियुक्त किये थे। एवं रसना को महाप्रसाद आस्वादन में रत किये थे। चरण युगल को श्रीहरि क्षेत्र गमन में मस्तक को हृषीकेश श्रीकृष्ण के चरण वन्दन में एवं काम को अर्थात् सङ्कल्प को भगवत् दास्य लाभ हेतु समर्पण किये थे। किन्तु विषय भोग सम्पादन हेतु कभी सङ्कल्प नहीं किये थे।

किस अभिप्राय से आत्म समर्पण किए थे—उस को कहते हैं- जिस प्रकार के समर्पण करने से भगवद् भक्त जन के अनुगत भाव से श्रीहरि चरणों में प्रीति का उदय होता है—उस भाव से ही आत्म समर्पण किये थे। यहाँ पर सर्व प्रकार से श्रीभगवान् में देह इन्द्रिय प्रभृति आत्म निवेदन किये थे—यही समझाया गया है। आत्म समर्पण की वैशिष्ट्य प्राप्ति लीला प्रभृति स्मरणादि रूप उपासना में प्रकाशित होती है। इस का कथन भा० ११।१९।२० में उक्त है— "श्रद्धामृत कथायां मे शश्वन्मदनुकीर्त्तनम्"

श्रीकृष्ण, उद्धव को कहे थे,—मेरी अमृतमयी कथा में श्रद्धा, निरन्तर मेरे गुणादि कीर्त्तन, पूजा में परिनिष्ठा, ऋषि गण द्वारा कृत स्तुति के द्वारा मेरा स्तव, परिचर्य्या में आदर, सर्वाङ्ग द्वारा मुझ को नमस्कार, मेरी पूजा से भी मदीय भक्त पूजा में अधिक आदर, सर्वभूत में मैं विद्यमान हूँ—इस प्रकार मनोवृत्ति, मदीय सुखार्थ--ःलौकिकी क्रिया, लौकिकी वाक्य के द्वारा मेरा गुण कीर्त्तन, मुझ को मन समर्पण मुझ को छोड़कर अन्य सङ्कल्प शून्यता, मेरे निमित्त अर्थ त्याग, भजन विरोधी अर्थ को परित्याग, दैहिक भोग एवं भोग साधन द्रव्य चन्दनादि को परित्याग, पुत्र लालन पालनादि सुखापेक्षा शून्यता, एवं वैदिक कर्म, दान, होम, जप, व्रत, तपस्या प्रभृति का अनुष्ठान मदीय लाभ हेतु करे। हे उद्धव! इस प्रकार धर्म के द्वारा जिस ने मुझ को आत्म निवेदन किया हैं। उस में मदीय प्रेम भक्ति का उदय होता है! एवम्भूत लक्षणाक्रान्त भक्त के पक्ष में साधन एवं साध्य रूप कुछ भी प्रयोजन अवशेष नहीं रह जाता है। अर्थात् वह भक्त, सर्व साधन एवं साध्य सम्पत्ति प्राप्त कर कृतार्थ होता है। भा० ११।१९।२० "श्रद्धामृत कथायां में शश्वन्मदनुकीर्त्तन में से आरम्भ कर भा० ११।१९।२४ "एवं धर्मैर्मनुष्याणाम्" पर्य्यन्त उक्त विवरण कथित है।

स्मरण कीर्त्तन पाद सेवनमय उपासना, यदि शास्त्रोक्तविधि वैशिष्ट्यमय होता है तो उस को अर्च्चन कहते हैं। कारण शास्त्रोक्त विधि बाहुल्यमय अर्चनाङ्ग—भक्ति से पृथक् विवेचित नहीं होता है, कारण, अर्च्चनाङ्ग में जो विधि बाहुल्य है, स्मरण-कीर्त्तनादि में भी यदि वह विधि होती है तो, स्मरण

श्रीबलावपि स्फुटं दृश्यते । उदाहृतञ्चेदमात्मार्पणम् (भा० ७।६।२६)—"धर्म्मार्थकामः" इत्यादिना श्रीप्रह्लादमते, (भा० ११।२९।३४)—"मर्त्त्यो यदा त्यक्तसमस्तकर्म्मा, निवेदितात्मा" इत्यादिना श्रीभगवन्मतेऽपि । तदेतदात्मनिवेदनं भावं विना भाववैशिष्ट्येन च दृश्यते, पूर्व्वं यथा—'मर्त्त्यो यदा' इत्यादि, उत्तरं यथैकादश एव (भा० ११।११।३५)--"दास्येनात्मनिवेदनम्' इति । यथा च रुक्मिणीवाक्ये (भा० १०।५२।३९)—"आत्मार्पितश्च भवतः" इति ॥ श्रीशुकः ।

३१० । तदेवं वैधी भक्तिर्दर्शिता अस्याश्चोक्तानामङ्गानामनुक्तानाञ्च कुत्रचित् कस्याप्यङ्गस्यान्यत्र तु तदितरस्य यन्महिमाधिक्यं वर्ण्यते, तत्तच्छ्रद्धा भेदेन तत्तत्-

---

कीर्त्तन से अर्च्चन का कुछ भी पार्थक्य नहीं होता है । यह आत्म समर्पण अङ्ग में साधक की स्नान, दन्त साधन प्रभृति क्रिया भी भगवत् सेवा के उपयोगी होने के कारण, आत्मसमर्पण रूपा भक्ति की हानि उस से नहीं होती है । यहाँ प्रश्न हो सकता है कि- यदि साधक, देह इन्द्रिय आत्मा प्रभृति सब कुछ भगवान् को अर्पण करता है,तो चिन्तां न कुर्य्यात् रक्षायै' इस वचन के अनुसार उसकी स्नान शौचादि करने की जो चेष्टा होती है, वह कैसे सम्भव हैं ? उत्तर में कहते हैं- साधक के यह सब कृत्य, भगवत् सेवोपयोगी हैं, सुतरां यह सब आत्मसमर्पण रूपा भक्ति के बाधक नहीं हैं । आत्म समर्पण रूपा भक्ति का दृष्टान्त श्रीबलि-महाराज में सुस्पष्ट रूप से है । भा० ७।६।२६ इस का वर्णन है । श्रीप्रह्लाद ने भी आत्म समर्पण का वर्णन यथार्थ रूप से किया है । "हे भ्रातृ गण ! तुम सब कह सकते हो, कि—धर्मार्थ काम यह त्रिवर्ग यदि पुरुषार्थ नहीं होते हैं, अर्थात् पुरुष प्रयोजन वस्तु नहीं हैं तो, आचार्य्य षण्ड अमर्क ने वेदोक्त रूप में उपदेश क्यों किया ? उस के उत्तर में कहता हूँ-सुनो । 'धर्मार्थ कामः" धर्मार्थ काम यह त्रिवर्ग एवं उक्त त्रिवर्ग लाभ हेतु ईक्षा (आत्मविद्या ) त्रयी (कर्म विद्या) नय (तर्क) दम (दण्डनीति) निज जोविका प्रभृति वेदोक्त उपदेश समूह तब ही सत्य होते हैं, जब मानव, भगवच्चरणार विन्द में आत्म समर्पण करता है । भगवच्चरणों में आत्म समर्पण के बिना वेदोक्त समस्त साधन ही प्राण हीन देह को दूषित करने के समान व्यर्थ प्रयास होता है । यह है श्रीप्रह्लाद का अभिमत । श्रीभगवान् के मत में आत्म समर्पण प्रसङ्ग भा० ११।११।३४ में है—"मर्त्यो यदा त्यक्त समस्त कर्मा निवेदितात्मा" श्रीकृष्ण, उद्धव को कहे थे—मरण धर्मा मनुष्य जिस समय समस्त काम्य कर्म्म त्याग कर मुझ को आत्म समर्पण करता है, उस समय उस भक्त के निमित्त कुछ करणीय मेरा है—इस प्रकार सङ्कल्प का उदय मुझ में होता है । उस समय वह भक्त, मेरा पार्षद देह प्राप्त कर मदीय समानैश्वर्य्य प्राप्त करने का योग्य होता है। यह आत्म निवेदन द्विविध हैं--

एक भावशून्य आत्म निवेदन—जिस प्रकार बलिमहाराज ने किया था। इस का विवरण "मर्त्यो यदात्यक्त समस्त कर्मा" में है । यह भावशून्य आत्म समर्पण का फल भगवान् के समान ऐश्वर्य्य प्राप्ति है । और द्वितीय—अर्थात् भावयुक्त आत्मसमर्पण--भा० ११।११ ३५ में 'दास्येनात्म निवेदनम्' कथित है । अर्थात् दास्यादि किसी भाव के सहित आत्म समर्पण । उस का दृष्टान्त भा० १०।५२।३९ श्रीरुक्मिणी वाक्य में है । "आत्मार्पितश्च भवतः" श्रीरुक्मिणी ने श्रीकृष्ण को जो पत्र भेजा था—उस में कान्ताभाव के सहित आत्म समर्पण था ।

श्रीशुक मुनि कहे थे—३०९॥

३१० । उक्त रीति से वैधी भक्ति का वर्णन हुआ है, इस वैधी भक्ति के जो सब अङ्ग वर्णित हुये है, एवं जो सब अङ्ग वर्णित नहीं हुए हैं, वह सब भक्त्यङ्ग की महिमा का वर्णन कहीं अधिक रूप से हुआ है, एवं शास्त्रान्तर में किन्तु अन्य भक्त्यङ्ग की महिमा अधिक रूप से वर्णित हुई है । अर्थात् किसी स्थान

प्रभावोल्लासापेक्षयेति न परस्पर-विरुद्धत्वम् । अधिकारिभेदेन ह्यौषधादीनामपि तादृशत्वं दृश्यते ।

अथ रागानुगा, तत्र विषयिणः स्वाभाविको विषयसंसर्गेच्छातिशयमयः प्रेमा रागः, यथा चक्षुरादीनां सौन्दर्य्यादौ, तादृश एवात्र भक्तस्य श्रीभगवत्यपि राग इत्युच्यते । स च रागो विशेषणभेदेन बहुधा दृश्यते (भा० ३।२५।३८) –"येषामहं प्रिय आत्मा सुतश्च, सखा गुरुः सुहृदो दैवमिष्टम्" इत्यादौ । तत्र प्रियो यथा तदीयप्रेयसीनाम्, आत्मा परब्रह्मरूपः श्रीसनकादीनाम्, सुतः श्रीव्रजेश्वरादीनाम्, सखा श्रीश्रीदामादीनाम्, गुरुः श्रीप्रद्युम्नादीनाम्, कस्यापि 'भ्राता', कस्यापि 'मातुलेयः', कस्यापि 'वैवाहिकः' इत्यादिरूपः, स एक एव तेषु

---

में एकादशी की महिमा अत्यधिक वर्णित है, और किसी स्थान में महा प्रसाद भोजन की महिमा सर्वाधिक रूप से वर्णित है । उस का कारण यह है – उस उस भक्त्यङ्ग में श्रद्धा भेद से उस उस भक्त्यङ्ग का प्रभाव का उल्लास विशेष की अपेक्षा करके ही इस प्रकार महिमा वर्णित है । अतएव उस प्रकार महिमा वर्णन से अङ्गों में पारस्परिक विरोध उपस्थित नहीं होता है । जिस प्रकार औषध प्रभृति का प्रभावातिशय्य अधिकारी भेद से दृष्ट होता है । किसी रोगी के पक्ष में कोई औषधि सत्वर व्याधि उपशम करती है, और किसी के पक्ष में वह औषधि फल प्रद नहीं होती है ।

अनन्तर रागानुगा भक्ति का वर्णन करते हैं—विषयी का विषय के सहित संसर्ग के निमित्त स्वाभाविक अतिशय इच्छामय प्रेम का नाम राग है । जिस प्रकार चक्षु प्रभृति इन्द्रियवृन्द की सौन्दर्य्य ग्रहण निमित्त स्वाभाविक अतिशय तृष्णा होती है । उस प्रकार ही भक्ति जगत् में भक्त का श्रीभगवान् में स्वाभाविक आकुल पिपासामय प्रेम ही राग शब्द से कथित होता है । श्रीभक्तिरसामृतसिन्धु में राग का लक्षण निम्नोक्त रूप है—

"इष्टे स्वारसिकी रागः परमाविष्टता भवेत् ।
तन्मयी या भवेत्तृष्णा साऽत्र रागात्मिकोच्यते ।।"

अर्थात् आनुकूल्य का विषय श्रीभगवान् में स्वाभाविकी प्रेममयी पिपासा ही राग का स्वरूप लक्षण है । अभीष्ट विषय में परमाविष्टता– राग का तटस्थ लक्षण है । जैसे आकुल पिपासु व्यक्ति की जल में होती है । उस स्वाभाविक आकुल प्रेममयी पिपासा प्रेरित होकर जो निज अभीष्ट भगवान् में भक्ति की जाती है, उस का नाम ही रागात्मिका भक्ति है । वह राग भी विशेषण भेद से अर्थात् शान्त, दास्य, सख्य, वात्सल्य, मधुर भेद से बहु प्रकार हैं । इस विषय में भा० ३।२५।३८ में श्रीकपिल देवने कहा है –

"येषामहं प्रियमात्मासुतश्च सखागुरुसुहृदो दैव मिष्टम् "

हे मातः ! मैं जिस का प्रिय, आत्मा, पुत्र, सखा, हितोपदेष्टागुरु, हिताकाङ्क्षी सुहृद् एवं इष्ट देव हूँ । यहाँ प्रिय शब्द—जिस प्रकार तदीय प्रेयसी श्रीगोपी प्रभृति के सम्बन्ध में सखा, श्रीदाम प्रभृति के सम्बन्ध में, गुरु श्रीप्रद्युम्न प्रभृति के सम्बन्ध में, किसी का भ्राता, किसी का मातुलेय, किसी का वैवाहिक रूप में आत्मा—पर ब्रह्म रूप - श्रीसनकादि के सम्बन्ध में सुत—श्रीव्रजेश्वरादिक सम्बन्ध में एक ही भगवान् उन उन सम्बन्धान्वित भक्त के निकट एवं सुहृद् रूप में सम्बन्धि गण के निकट प्रकाशित होते हैं । तदीय सेवक दारुक प्रभृति के निकट इष्ट देवरूप में प्रकाशित होते हैं, यह प्रसिद्ध है ।

श्रीमती मोहिनी मूर्त्ति के प्रति महादेव का जो भाव प्रकट हुआ था, उस का अङ्गीकार यहाँ पर

परा नान्या कुत्रचिद्विद्यते, तादृशीम्, हृद्रोगं कामादिकमपि शीघ्रमेव त्यजति। अत्र सामान्यतोऽपि परमात्व-सिद्धे तत्रापि परमप्रेष्ठ--श्रीराधा-संवलित-लीलामय-तद्भजनन्तु परमतममेवेति स्वतः सिध्यति । किन्तु रहस्यलीला तु पौरुषविकारवदिन्द्रियैः पितृ-पुत्र-दास-भावैश्च नोपास्या,–स्वीयभावविरोधात् । रहस्यत्वञ्च तस्याः क्वचिदल्पांशेन क्वचित्तु सर्वांशेनेति ज्ञेयम् ॥ श्रीशुकः ॥

३३९। तत्र ते भक्तिमार्गा दर्शिताः। अत्र च श्रीगुरोः श्रीभगवतो वा प्रसादलब्धं साधन-साध्य-गतं स्वीयसर्व्वस्वभूतं यत्किमपि रहस्यम्, तत्तु न कस्मैचित् प्रकाशनीयम्, यथाह (भा० ८।१७।२०)

(३३९) "नैतत् परस्मा आख्येयं पृष्टयापि कथञ्चन।
सर्वं सम्पद्यते देवि देवगुह्यं सुसंवृतम् ॥"१०७२।

सम्पद्यते फलदं भवति ॥ श्रीविष्णुरदितिम् ।

३४०। तदेवं साधनात्मिका भक्तिर्दर्शिता । तत्र सिद्धिक्रमश्च श्रीसूतोपदेशारम्भे

---

काम गन्ध शून्य विशुद्ध प्रेममयी है। इस प्रकार दृढ़ विश्वास के सहित जो व्यक्ति श्रवण करता है। श्लोकोक्त—"शृणुयादथ" यहाँ अथ शब्द का प्रयोग 'वा' अर्थ में हुआ है। अर्थात् श्रवण करता है, अथवा वर्णन करता है। उपलक्षण में ध्यानादि करता है, वह व्यक्ति, श्रीभगवच्चरणारविन्द में पराभक्ति लाभ करता है। अर्थात् जिस से अपर कोई श्रेष्ठ भक्ति नहीं हैं, उस प्रकार भक्ति प्राप्त करता है, तदनन्तर स्वयं ही हृद् रोग काम वासना को आशु परित्याग करता है। यहाँपर यद्यपि व्रजाङ्गनावृन्द के सहित सामान्य रूप से श्रीकृष्ण विहार का श्रेष्ठत्व प्रदर्शित हुआ है, तथापि तन्मध्य में भी अर्थात् व्रजाङ्गना वृन्द के सहित श्रीकृष्ण लीला के मध्य में भी परम प्रियतमा श्रीराधा सम्वलिता लीला का सर्व श्रेष्ठ तमत्व- स्वतः सिद्ध है। किन्तु जिस की इन्द्रिय—पौरुष विकार युक्त है, उस के पक्ष में एवं पितृ भाव, पुत्रभाव, दास्य भाव दास्य भाव विशिष्ट भक्त वृन्द के पक्ष में रहस्य लीला उपास्या नहीं है। कारण, निज भाव विरोधी है। इस लीला का रहस्यत्व कभी अल्पांश में कभी सर्वांश में है। अर्थात् आलिङ्गन चुम्बन प्रभृति का वर्णन जहाँ है वहाँ रहस्यत्व अल्पांश में है, एवं सम्प्रयोगादि लीला में रहस्यत्व सर्वांश में विद्यमान है। यह जानना होगा। प्रवक्ता श्रीशुक हैं—।।३३८।।

३३९। प्रस्तुत सन्दर्भ ग्रन्थ में उक्त भक्ति मार्ग समूह का वर्णन हुआ। इस भक्ति मार्ग में श्रीगुरु अथवा श्रीभगवत् प्रसाद लब्ध साधन एवं साध्यगत निज सर्वस्व स्वरूप जो कुछ रहस्य लाभ होगा, कभी भी किसी के निकट में उस को प्रकाश करना नहीं चाहिये। श्रीमद् भागवत के ८।१७।२० में उक्त है—

(३३९) "नैतत् परस्मा आख्येयं पृष्टयापि कथञ्चन।
सर्वं सम्पद्यते देवि देवगुह्यं सुसंवृतम् ॥"१०७२॥

श्रीविष्णु श्रीअदिति को कहे थे - हे मातः! मैने जो कुछ कहा है, जिज्ञासित होकर भी कभी भी किसी के निकट उस को प्रकाशन करें। अयि देवि! सर्व देव गुह्य वस्तु यदि सम्यक् गुप्त रखी जाय तो वह फल प्रदान में सक्षम है। श्रीविष्णु अदिति को कहे थे—३३९॥

(भा० १।२।१६) "शुश्रूषोः श्रद्दधानस्य" इत्यादिना दर्शितः, यथा च श्रीनारदवाक्ये (भा० १।५।२३) "अहं पुरातीत-भवेऽभवम्" इत्यादौ, यथा च श्रीकपिलदेववाक्ये (भा० ३।२५।३५) "सतां प्रसङ्गान्ममवीर्य्यसम्बिदः" इत्यादौ । अत्र कैवल्यकामायाम् (भा० ३।२५।२६) —"भक्त्या पुमान् जातविरागः" इत्यादिना शुद्धायां (भा० ३।२५।३४) "नैकात्मतां मे स्पृहयन्ति केचित्" इत्यादिना क्रमो ज्ञेयः। तथा शुद्धायामेव श्रीप्रह्लादकृत-दैत्यबालानुशासने (भा० ७।७।३०)— "गुरुशुश्रूषया" इत्यादिना। तमेवं क्रममेव संक्षिप्य सदृष्टान्तमाह, (भा० ११।२।४२-४३ —

(३४०) "भक्तिः परेशानुभवो विरक्ति,--रन्यत्र चैष त्रिक एककालः ।
प्रपद्यमानस्य यथाश्नतः स्यु,-स्तुष्टिः पुष्टिः क्षुदपायोऽनुघासम् ॥१०७३॥
इत्यच्युताङ्घ्रिं भजतोऽनुवृत्त्या, भक्तिर्विरक्तिर्भगवत्प्रबोधः ।
भवन्ति वै भागवतस्य राजं-स्ततः परां शान्तिमुपैति साक्षात् ॥"१०७४

---

३४० । पूर्वोक्त रीति से साधनात्मिका भक्ति का वर्णन हुआ । उक्त भक्ति में सिद्धि क्रम भी श्रीसूत के उपदेशारम्भ में भा० १।२।१६ में "शुश्रूषोः श्रद्दधानस्य" प्रदर्शित हुआ है । अर्थात् पवित्र तीर्थ निषेवन से साधुसङ्ग की सम्भावना होती है, साधुसङ्ग से श्रीहरिकथा श्रवण में रुचि होती है, अनन्तर श्रीहरिकथा में विशेष श्रद्धा का उदय होता है । इत्यादि रूप में श्रीभगवत् प्रेम प्राप्ति का क्रम का प्रदर्शन हुआ है । एवं उक्त क्रम का दृष्टान्त— देवर्षि नारद का कथोपकथन प्रसङ्ग में सुस्पष्ट रूप से है । श्रीकृष्ण द्वैपायन को देवर्षि नारद कहे थे,—"मैं पहले दासी पुत्र था" इत्यादि क्रम से दर्शाया गया है । भा० ३।२५।२५ में श्रीकपिल देव का वाक्य "सतां प्रसङ्गान्ममवीर्य्य सम्बिदः" भी प्रस्तुत विषय का उदाहरण है । इस में साधन भक्ति से आरम्भ कर भाव एव प्रेम भक्ति का दृष्टान्त उपस्थित किया गया है । उस साधन भक्ति के मध्य में भी कैवल्य कामा भक्ति में "भक्त्या पुमान् जात विराज ऐन्द्रियात्" (भा० ३।२५।२६) दृष्टान्त है । अर्थात् भक्ति साधन करते करते ऐन्द्रियक सुख भोग में वितृष्णा होती है । अनन्तर क्रमशः मुक्तिपथ में साधक अग्रसर होता है । इत्यादि क्रम का वर्णन है । शुद्ध भक्ति में भा० ३।२५।३४) "नैकात्मतां में स्पृहयन्ति केचित्" क्रमवर्णित है । अर्थात् मुक्ति पर्य्यन्त समस्त विषयों की कामना परित्याग पूर्वक श्रीभगवान् में दास्य सख्यादि किसी एक भाव लाभ होता है । इत्यादि क्रम का वर्णन हुआ है । उस शुद्धा भक्ति में ही श्रीप्रह्लाद कृत दैत्य बालक वृन्द के प्रति उपदेश प्रसङ्ग में कथित है— भा० ७।७।३० "गुरु-- शुश्रूषया भक्त्या" अर्थात् श्रीगुरु शुश्रूषा भक्ति के द्वारा श्रीभगवान् में सर्व लाभार्पण द्वारा अर्थात् जहाँ जो कुछ भगवदर्पण योग्य द्रव्य उपलब्ध होगा, वह श्रीभगवान् को समर्पण करे । इस प्रकार साधुभक्त के सङ्ग के द्वारा एवं ईश्वर आराधना के द्वारा श्रीभगवान् में भाव भक्ति लाभ होती है । इत्यादि क्रम प्रदर्शित हुआ है । इस क्रम का वर्णन सदृष्टान्त भा० ११।२।४२--४३ में हुआ है ।

(३४०) "भक्तिः परेशानुभवो विरक्ति,–रन्यत्र चैष त्रिक एककालः ।
प्रपद्यमानस्य यथाश्नतः स्यु,--स्तुष्टिः पुष्टिः क्षुदपायोऽनुघासम् ॥१०७३॥
इत्यच्युताङ्घ्रिं भजतोऽनुवृत्त्या, भक्तिर्विरक्तिर्भगवत् प्रबोधः ।
भवन्ति वै भागवतस्य राजं,-- स्ततः परां शान्तिमुपैति साक्षात् ॥"१०७४॥

श्लोक द्वय की श्रीधरस्वामिपाद कृत व्याख्या इस प्रकार हैं—एकान्त शरणागत होकर श्रीहरिभजन कारी मानव की श्रीहरि में प्रेम लक्षणा भक्ति, प्रेमास्पद भगवत् रूप की – स्फूर्त्ति, (अर्थात् परेशानुभव)

टीका च—"प्रपद्यमानस्य हरिं भजतः पुंसो भक्तिः प्रेमलक्षणा, परेशानुभवः प्रेमास्पद भगवद्रूप-स्फूर्त्तिस्तया निर्वृतस्य ततोऽन्यत्र गृहादिषु विरक्तिरित्येष त्रिक एककालो भजन-समकाल एव स्यात्, यथाश्नतो भुञ्जानस्य तुष्टिः सुखं पुष्टिरुदरभरणं क्षुन्निवृत्तिश्च प्रतिग्रासं स्युः। उपलक्षणमेतत्। प्रतिसिक्थमपि यथा स्युस्तद्वत्। एवमेवैकस्मिन् भजने किञ्चित्प्रेमादि त्रिके जायमाने अनुवृत्त्या भजतः परमप्रेमादि जायते। बहुग्रासभोजिन इव परमतुष्ट्यादि, ततश्च भगवत् प्रसादेन कृतार्थो भवतीत्याह,-इत्यच्युताङ्घ्रिमिति" इत्येषा। शान्तिं कृतार्थत्वम्, साक्षादन्तर्वहिश्च प्रकटित-परमपुरुषार्थत्वादव्यवधानेनैवेत्यर्थः। पूर्व्वपद्ये भक्त्यादीनां तुष्ट्यादयः क्रमेनैव दृष्टान्ता ज्ञेयाः,—उत्तरत्राप्येतत्क्रमेणैव भक्ति-तुष्ट्योः सुखैकरूपत्वात्, पुष्ट्यनुभवयोरात्मभरणैकरूपत्वात्, क्षुदपायविरक्त्योः शान्त्येकरूपत्वात्। यद्यपि भुक्तवतो-ऽन्नेऽपि वैतृष्ण्यं जायते, भगवदनुभविनस्तु विषयान्तर एवेति वैधर्म्यम्, तथापि वस्त्वन्तर-वैतृष्ण्यांश एव दृष्टान्तो गम्य इति॥ श्रीकविर्निमिम्॥

तदेतद्व्याख्यातमभिधेयम्। अत्रान्योऽपि विशेषः शास्त्र-महाजनदृष्ट्यानुसन्धेयः।

---

एवं तज्जन्य परमानन्द आप्लुतान्तः करण होने के कारण, भगवद् भिन्न अन्यत्र गृहादि में विरक्ति--यह तीन एककाल में अर्थात् भजन समकाल में ही होती हैं। जिस प्रकार भोजन में प्रवृत्त व्यक्ति की तृष्टि अर्थात् सुख, पुष्टि, अर्थात् उदरभरण, एवं क्षुधानिवृत्ति यह तीन प्रत ग्रास में होती हैं,। यह उपलक्षण है। अर्थात् भजन के अन्यान्य अङ्ग समूह भी कमशः प्रकाशित होते हैं। प्रत्येक अन्नकणा से ही जिस प्रकार तुष्टि पुष्टि होती हैं, भजन के सम्बन्ध में भी उस प्रकार जानना होगा। इस प्रकार एक अङ्ग भजन करने से किञ्चित् प्रेम, भगवदनुभाव एवं विषय वैराग्य यदि यह तीन उत्पन्न होते हैं, तो जो व्यक्ति अनुकूल वृत्ति अवलम्बन से श्रीकृष्ण भजन करते रहते हैं, उन में परम प्रेमादि भी आविर्भूत होते हैं। जो व्यक्ति बहु ग्रास भोजन करते हैं, जिस प्रकार उनकी परम तुष्टि, परम पुष्टि, एवं परम क्षुधा निवृत्ति होती हैं, भक्ति सम्बन्ध में भी उस प्रकार जानना चाहिये। अनन्तर साधक भगवत् कृपा से कृतार्थ होता है—इस का कथन "इत्यच्युताङ्घ्रि" इत्यादि श्लोक में हुआ है। यहाँ तक श्रीधरस्वामिपादकृत टीका का वर्णन है। श्लोकार्थ इस प्रकार है—श्रीकृष्णसुखानुकूल वृत्ति अवलम्बन से श्रीकृष्ण भजन कारी भागवत का श्रीभगवान् में प्रेम, भगवदनुभव, एवं विषय वैराग्य होता है. अनन्तर श्रीभगवत् कृपा से पराशान्ति अर्थात् वह कृतार्थ होता है। उस कृतार्थता भी साक्षात् अर्थात् अव्यवधान से होती है। कारण, भगवद् भक्त के अन्तर एवं बाहर में परम पुरुषार्थ वस्तु भगवत् प्रेम, एवं भगवदनुभव का प्रकाश होता है। पूर्व पद्य में अर्थात् "भक्तिः परेशानुभवः" इस श्लोक में प्रेम, भगवदनुभव, एवं विषय वैराग्य के सहित तुष्टि, पुष्टि, एवं उदरभरण का दृष्टान्त यथा क्रम से उत्थापित हुआ है। उस के मध्य में प्रेम भी सन्तुष्टि के सुखांश में एक रूपता है,एवं क्षुधानिवृत्ति भी विरक्ति,शान्ति अर्थात् निवृत्ति अंशमें एकरूपता है। यद्यपि भोजन कारी की अन्न में भी वितृष्णा होती है, किन्तु भगवदनुभवी का विषयान्तर में वैराग्योदय होता हैं। यह वैधर्म्य है। तथापि अन्य वस्तु में वितृष्णा होती है—इस अंश में दृष्टान्त है, यह जानना होगा।

श्रीकवियोगीन्द्र निमिमहाराज को कहे थे॥३४०॥

श्रीमद् भागवतोक्त अभिधेय तत्वका विश्लेषण उक्त रीति से हुआ। इस अभिधेय के प्रसङ्गमें अपर जो

गुरुः शास्त्रं श्रद्धा रुचिरनुगतिः सिद्धिरिति मे
यदेतत्तत् सर्व्वं चरणकमलं राजति ययोः ।
कृपापूरस्यन्द स्नपित-नयनाम्भोजयुगलौ
सदा राधाकृष्णावशरणगती तौ मम गतिः ॥१०७५॥

इति कलियुगपावन-स्वभजन-विभजनप्रयोजनावतार-श्रीश्रीभगवत्कृष्णचैतन्यदेव-चरणानुचर-विश्ववैष्णवराजसभा-सभाजन-भाजन-श्रीरूप-सनातनानुशासन-भारतीगर्भे षट्सन्दर्भात्मके श्रीश्रीभागवतसन्दर्भे श्रीश्रीभक्तिसन्दर्भो नाम पञ्चमः सन्दर्भः ॥५॥

श्रीभागवतसन्दर्भे सर्व्वसन्दर्भगर्भगे ।
पञ्चमो भक्तिसन्दर्भः समाप्तिमिह सङ्गतः ॥
समाप्तोऽयं श्रीश्रीभक्तिसन्दर्भः ॥
मूलम्—३४०, लेख्याः ४६२६ श्लोकाः

---

कुछ जानना आवश्यक है। उस को शास्त्र एवं महाजन गण के आचरण के द्वारा जानना आवश्यक है।

"गुरुः शास्त्रं श्रद्धा रुचिरनुगतिः सिद्धिरिति मे
यदेतत्तत् सर्व्वं चरणकमलं राजति ययोः ।
कृपापूरस्यन्द स्नपित- नयनाम्भोजयुगलौ
सदा राधाकृष्णावशरणगती तौ मम गतिः ॥१०७५॥

श्रीगुरु शास्त्र, श्रद्धा, रुचि, शरणागति एवं सिद्धि—मेरा यह सब जिनके श्रीचरणकमल हैं, अर्थात् जिन के चरण कमल ही मेरा सर्व साधन एवं सर्व सिद्धि स्वरूप में विराजमान हैं निज श्रीचरणाश्रित के प्रति अपार करुणा प्रवाह धारा से जिन के नयनाम्भोज युगल सर्वदा स्नापित हैं, उन अशरण गति श्रीराधाकृष्ण ही मेरा सर्वदा समाश्रय हैं।

इति कलियुग पावन स्व भजन विभजन प्रयोजनावतार श्रीश्रीभगवत् कृष्णचैतन्यदेव चरणानुचर विश्व वैष्णव राज सभा सभाजन भाजन श्रीरूप सनातनानुशासन भारता गर्भ में श्रीभागवत सन्दर्भ में भक्ति सन्दर्भ नामक यह पञ्चम सन्दर्भ हैं।

श्रीभागवत स दर्भे सर्व सन्दर्भ गर्भ में पञ्चमो भक्ति सन्दर्भः समाप्तिमिह सङ्गतः। तत्त्व भगवत प्रभृति षट् सन्दर्भ जिस के अन्तर्भुक्त है। उस श्रीभागवत सन्दर्भ के मध्य में यह भक्ति सन्दर्भ नामक पञ्चम सन्दर्भ सम्पूर्ण हुआ।

"शास्त्रीति ख्यात तत्त्वेन हरिदासेन धीमता
श्रीगान्धर्वा प्रसादेन ग्रन्थोऽयं प्रमुदे कृतः ।
वृषस्थे भास्करे रम्ये वृन्दारण्ये शुभास्पदे
हयाकाश ग्रहेचन्द्रे ग्रन्थोऽयं पूर्णतां गतः ॥

श्रीगुर्वार्पणमस्तु ॥



❀ श्रीश्रीगौराङ्ग महाप्रभु ❀